# भवितव्यानां द्वाराणि भवन्ति सर्वत्र

आत्मकथा



सत्यव्रतशास्त्री

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

# भवितव्यानां द्वाराणि भवन्ति सर्वत्र

## आत्मकथा

### प्रथमो भागः

**सत्यव्रतशास्त्री**

ज्ञानपीठपुरस्कारसम्मानितः प्राप्तपद्मभूषण–राष्ट्रपतिसम्मानः
भारतसर्वकारीयसंस्कृतायोगाध्यक्षः
दिल्लीविश्वविद्यालयसम्मानिताचार्यः (प्रोफेसर एमेरिटस)
जवाहरलालनेहरूविश्वविद्यालयाभ्यर्हिताचार्यः
पुरीस्थश्रीजगन्नाथसंस्कृतविश्वविद्यालयप्राक्तनकुलपतिः
भारतीयविद्याभवनदिल्लीकेन्द्रे संस्कृतभाषावाङ्मयाध्ययनपीठाध्यक्षः
नवदिल्लीस्थसाहित्यअकादेमीमहत्तरसदस्यः (फैलो)
इटलीदेशीय–एग्रिगेण्टोनगरस्थ–भूमध्यसागरीयाध्ययनाकादेमीमहत्तरसदस्यः (फैलो)

**विजया बुक्स**

**दिल्ली**

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

ISBN : 978-93-81480-72-4

प्रकाशक : विजया बुक्स
1/10753 सुभाष पार्क, गली नं. 3
नवीन शाहदरा, दिल्ली-110032
फोन : 011-22822514; 9910189445
Email : vijyabooks@gmail.com

© : लेखक

प्रथम संस्करण : 2015

मूल्य : 750/-

मुद्रक : विकास कम्प्यूटर एण्ड प्रिंटर्स,
नवीन शाहदरा, दिल्ली-110 032

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

# पुरोवाक्

संस्कृतवाङ्मयस्य विचित्रेयं स्थितिर्यत्कतिपयरचनाप्रकारेष्विदमतिसमृद्धं कतिपयरचनाप्रकारेषु चातिव्यृद्धम्। सन्त्यत्र परःसहस्राणि महाकाव्यानि, खण्डकाव्यानि, मुक्तककाव्यानि, गीतिकाव्यानि, . सन्ति च परःसहस्रा हिन्द्यां 'कहानी' इत्यभिधानभाजः तच्छब्दस्यैव संस्कृतरूपतापादनेन कथानिका इत्यभिधीयमाना आधुनिकशैल्यनुसारिण्यो विविधरूपाः प्राचीनकथाख्यायिकातः पृथग्रूपाः, सन्ति च परश्शता हिन्द्यामुपन्यास इत्याख्यां बिभ्रतस्तथैव तन्नामैव च संस्कृतेऽपि अथवा ऽऽङ्ग्लशब्दस्य 'नावेल' इत्यस्य संस्कृतरूपापादनेन कैश्चिन्नूत्नशब्दप्रयोगरुचिभिर्नवलिकेति रूपेणाख्यायमाना नैकासु भारतीयभाषासु कादम्बरीति नाम्नाऽभिज्ञायमानाः प्राचीनकथाऽऽख्यायिकानामेव नूत्नावताराः। एवं सन्ति नाना टीकाग्रन्था, भाष्यग्रन्था व्याख्याग्रन्थाश्च। एतस्मिन् बृहति ग्रन्थसम्भारेऽपि दैनन्दिनवृत्तनिरूपणग्रन्था आत्मकथानिरूपणरूपा ग्रन्थाश्च नैव दृग्गोचरीभवन्ति। तेषां सांस्कृते वाङ्मयेऽत्यन्ताभाव एव। संस्कृते बृहत्कलेवरो दैनंदिनवृत्तनिरूपणात्मकः डायरीग्रन्थो ममैव। स चेदम्प्रथमः। एवमेवेदम्प्रथमः प्रस्तुत आत्मकथाग्रन्थः। कुतोऽपि श्रुतं मया यद् वनजीवनमिति नाम्ना केनाऽप्यात्मकथा प्रणीताऽऽसीत्। यस्माज्जनान्मया श्रुतमासीदिदं सोऽपि तद्रचयितृविषये न किमप्यजानात्। न चैवाजानाद्यत् सा प्रकाशिता न वेति। तेनापि कुतश्चन श्रुतमिदमासीत्। न तेन सा स्वयं दृष्टा पाण्डुलिपिस्था वा प्रकाशिता वा। डा. राधावल्लभत्रिपाठिना किञ्चित्कालपूर्वम् 'अर्धकथानकम्' इति नाम्ना त्रिषष्टिपृष्ठात्मिकाऽऽत्मकथा रचिता या संस्कृतभारतीसंस्थया प्रकाशिता। प्रस्तुताऽऽत्मकथाऽतिदीर्घेत्यस्याः प्रथमो भाग एव सम्प्रति प्राकाश्यं नीयते। द्वितीयभागः सम्प्रति प्रणीयमानोऽस्ति। यथाऽहं पश्यामि भागत्रयेणेयं पूर्णतां यास्यति। पूर्णरूपेयं मन्ये सहस्रपृष्ठात्मिका स्यात्।

आत्मकथा नह्यात्मप्रख्यापनं नाम। एतन्माध्यमेनैतद्रचयिता सिंहावलोकन–न्यायेनात्मवृत्तं पश्यति, यद्यत्तेन दृष्टं वाऽनुभूतं वा तत्तदत्रोपन्यस्यति, अन्येभ्यः



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

समानधर्मभ्यस्तत्संविभक्तुं स प्रयस्यति येन तेऽपि तत्तद् द्रष्टुं वा ज्ञातुं वाऽनुभवितुं वा शक्नुयुः। न तेषां कदाचित् तादृशा अवसराः सुलभाः स्युर्ये रचयितुरिति तदुपकर्तृत्वमप्यात्मकथानिबन्धने प्रयोजको हेतुः।

अघटितघटितं घटयति सुघटितघटितानि दुर्घटीकुरुते।
विधिरेव तानि घटयति यानि पुमान्नैव चिन्तयति।।

सुप्रथितेयं प्राचामुक्तिर्मज्जीवने सर्वथा चरितार्थतां गता। तादृशं बहु मज्जीवनेऽघटिष्ट यन्मया स्वप्नेऽपि न चिन्तितमासीत्। पञ्चनदेषु लब्धजनिर्मादृशो जनो वाराणसीमुपेत्य प्रातःस्मरणीयेभ्यो वैयाकरणधुरन्धरेभ्यः पण्डितशुकदेवझाशर्मभ्यः सम्पूर्णं महाभाष्यमधीयीत, तथैव चाधीयीत सम्पूर्णं वाक्यपदीयं तद्गूढरहस्योद्भेतृभ्यः पण्डितपुङ्गवेभ्यः श्रीरघुनाथशर्मपाण्डेयमहाभागेभ्यः; दिल्लीस्थहंसराजमहाविद्यालये प्राध्यापकपदनियुक्तिं लब्ध्वापि, तत्परित्यज्य पुनरपि तत्रैव नियुक्तिं लभेत; दिल्लीविश्वविद्यालये वरीयांसमुपाचार्यं व्युत्क्रम्याचार्यपदे प्रतिष्ठापितो भवेत्; अकस्मादेव बैंकाकनगरेऽभ्यागताचार्यपदनियुक्तिसूचनामधिगच्छेत्, तत्र च तेन राजदारिकाऽध्यापनीया भवेद्राजगुरुपदप्रतिष्ठा चाप्ता भवेत्, तत्र स्थितिमता च श्रीरामकीर्तिमहाकाव्यसदृशं परःसहस्रपद्यनिबद्धं पञ्चविंशतिसर्गात्मकं नानावृत्तमयं नानावृत्तप्रतिपादकं थाईरामकथां निरूपयन्महाकाव्यं विरचयेत्; थाईदेशविषय इदम्प्रथमं थाइदेशविलासमिति काव्यं प्रणयेत्; केवलमेकनिबन्धाधारेणैवान्तरराष्ट्रियो विद्वान् इति ख्यातिमर्जयेत्; शर्मण्यदेशीयट्यूबिंगनयात्राप्रसंगे च सर्वथाऽ–संस्तुताज्जीवितकिंवदन्तीरूपेणाख्यातान् मिहिरसेनसदृशाज्जनात्सर्वविधं साहाय्यं विन्देत्। एतत्सर्वमनुध्यायैव 'भवितव्यानां द्वाराणि भवन्ति सर्वत्रेति' कालिदासीया पङ्क्तिरेवैतदात्मकथाशीर्षकरूपेणोपात्ता।

चतुरशीतिवर्षोऽहं सम्प्रति। अस्मिन् महति कालखण्डे नानादेशा मया गमिकर्मीकृताः, दृष्टानि तत्तद्देशीयानि नाना नगराणि तत्रत्यानि नाना स्थलानि। दृष्टाः पर्वतोपत्यकाः, दृष्टाः शस्यश्यामला विहारभूमयः, दृष्टानि सततप्रवहदमल–जलप्रस्रवणानि प्रस्रवणानि, दृष्टाः पादपराजिविराजिता नेत्ररसायना अरण्यान्यः, दृष्टा पादविहरणकाले प्रतिपदं प्रच्युतिभयमादधानाः कठोरगर्भा हिमान्यः, दृष्टास्तीरसैकतेष्वातपसेव्यर्धनग्ननरनारीसेविततटा दूरातिदूरविस्तृतत–मालनीलजलराशिशोभाऽऽप्यायितनेत्रयुगला जलधयः, दृष्टा द्वात्रिंशद्भूमिका जलविहारोत्सुकनागरजनसमाकीर्णाः प्रोच्चलितनगरप्रतीतिमादधाना जलपोताः, दृष्टाः समुद्रपार्श्ववर्तिभोजनालयेषु यथाकामं तत्तदव्यञ्जनरसास्वादनतत्परा जनौघाः, दृष्टाः प्रातःस्नानविनिर्णिक्तगात्रवन्दारुवृन्दारकवन्दितेष्ट–



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

देवतास्तटिनीतटाः, उपभुक्ताः प्रियतम इव प्रार्थनाचाटुकारा नद–नदीवाताः, दृष्टा उत्सवाः, दृष्टा विविधपण्यपूर्णापणसंकुलाः पण्यवीथ्यः, दृष्टानि देवायतनानि, दृष्टाश्च तत्रत्याः शिल्पिभिरुत्कीर्णा उत्कला देवविग्रहाः, दृष्टा विश्वविद्यालया, दृष्टा ग्रन्थालया, दृष्टा अद्भुतालया, दृष्टाः शास्त्रपरपारदृश्वानो ज्ञानवृद्धा, वयोवृद्धा धर्मवृद्धाश्च विद्वत्तल्लजाः प्रवर्तिता च तैश्चर्चा तेषु तेषु विषयेषु सुदीर्घकालं, दृष्टाश्च शारदा अपि तत्तच्छास्त्रविशारदास्तच्छिष्याः। तत्सर्वस्य स्मृतिततयोऽहम–हमिकया प्रादुःषन्ति मम मानसपटले। यावत्ता न विलुप्यन्ते तावत्ता लिपिबद्धतां प्रापणीया इति धीरेव मामात्मकथाप्रणयने व्यापारितवती।

एतत्प्रणयनकाले क्वचित् क्वचिन्मया विशिष्टव्याकरणप्रयोगा अपि समाश्रिता उत्सवस्ते स्युः सुधियामिति बुद्धिमाश्रितवता। पाठकानां सुखावबोधाय तदर्थं पादटिप्पण्यस्तत्र तत्र संयोजिताः।

प्रायो वैदर्भीरीतिरेव मयाऽत्र समाश्रिता, प्रसादगुणोपेतेयं विद्वत्प्रसादाय कल्पेतेति कल्पितधिया।

आत्मकथेति कश्चन नूत्नो रचनाप्रकारः। अत्र कथाकारः स्वयमेव कथायाः प्रमुखं पात्रम्। सर्वमपि घटनाचक्रं तं परित एव भ्राम्यति। तस्य घटनाचक्र–स्याङ्गभूतः स तद् घटनाचक्रं व्यतीतेऽपि बहुतिथे काले प्रत्यक्षं पश्यति। अतीतमपि वर्तमानमिव तस्य भासते। स्मृतिरेव स तन्तुर्यस्तास्ता घटनाः परस्परेण सीव्यति। तत्तन्तुनैव विभिन्नकालिक्योऽपि घटनाः तथा परस्परेणाबद्धा भवन्ति यथा ताः कथारूपतामापद्यन्ते। अत्र कथापात्रमेव कथावाचकः। यतस्तेन स्वेन सम्बद्धा कथेति तस्याः प्रामाण्यमसन्दिग्धम्। यद्यप्यन्यदीयेयं कथा तथापि तच्छ्रोता वा तद्वाचको वा तथा तां परिगृह्णाति यथा तदीयेयमितीयं तमवभासयति। तदेतत्साधारणीकरणं नाम। एतेनान्यजनस्य जीवने वृत्तं वृत्तजातं स्वजीवने वृत्तमिति श्रोतुर्वा वाचकस्य वाऽनुभवो भवति येन जायते वाचामगोचरः कश्चनानन्दनिष्यन्दः। यन्न दृष्टं न वाऽनुभूतं तत्कुतूहलं जनयति। तत्कुतूहलप्रेरित एव जनस्तत्र प्रवृत्तिमान् भवति। शब्दास्तानि तानि दृश्यान्यङ्कयन्ति, तांस्ताननुभवान् मूर्तरूपतां प्रापयन्ति, एवं कुर्वाणाश्च कुतूहलं शमयन्ति, श्रोतुर्वा वाचकस्य वा यस्तत्सर्वं स्वस्य प्रत्यक्षं घटमानमिव पश्यति। अयमेव नाम विच्छित्तिविशेषः।

काव्यस्यात्मा रस इति बुधैः समाम्नातपूर्वः। यावद् रसो नास्ति तावत्काव्यत्वं नास्ति। रसोऽस्ति न वेति सहृदया एव प्रमाणम्। आत्मकथेयं न केवलं कथैव स्यात्सरसत्वमप्यस्यां तच्च न केवलं विचित्रघटनाप्रस्तुत्यैव, विविधदृश्यवर्णनैरेव वाऽपि तु स्फुरत्कलालास्यविलासैरपि।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अत्र कथायां न किमपि प्रयत्नजनितम्। सर्वं सहजं स्वाभाविकमेव। पर्वतान्निर्झर इव हृदयादुद्भूतम्।

प्रथमो भागोऽस्या आत्मकथायाः सम्प्रति प्राकाश्यमेति।

द्वितीयो भागोऽप्यस्या नातिविलम्बेन प्रकाशितः स्याद् इति प्रत्येमि।

आशासे सदयहृदयानां सहृदयानां हृदयानीयमात्मकथा प्रीणयिष्यति।

सुरसरस्वतीसमाराधनैकव्रतः

नवदिल्ली —सत्यव्रतः शास्त्री

२०१४ वर्षे फर्वरीमासषोडशो दिवसः

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

प्रिय शरच्चन्द्र,

ज्योग्जीव्या नित्यं चाभ्युदियाः

अद्य सप्ताहत्रयं थाईदेशराजधानीं बैंकाकनगरीं प्राप्तवतो मम। तवा[1]हं बहुधा स्मरामि पौत्रस्य सिद्धान्तस्य च। तस्य बालसुलभाः केलीः प्रतिक्षणं मे स्मृतिपथमुपारोहन्ति। तं विना सर्वं शून्यमिव पश्यामि। कदाचित्सोऽपि मां स्मरति वा न वा। मदाशीराशिभिर्वर्धनीयोऽसौ बालः।

वत्स! मदीयेतिवृत्तं त्वं बहुशो मामप्राक्षीः। काले कथयिष्यामि ते सर्वमिति त्वां नैकदा प्रत्यशृणवम्।[2] नायं प्रतिश्रवो मया पालितः कार्यान्तरव्यासङ्गवशात्। सम्प्रति पत्रमाध्यमेनैव स्वकीयं जीवनवृत्तं त्वामुपपादयिष्यामि। सम्प्रति बैंकाकनगरीमधिवसति मय्यस्ति पर्याप्तः कालः। न चात्र बहु करणीयं मेऽस्ति। काले काले प्रहेतास्मि तेऽहं पत्राणि। तानि वाचयित्वा मद्विषये यन्न जानासि तदपि ज्ञातुं प्रभविष्यसि।

पाकिस्थानदेशाङ्गभूते लवपुराख्ये पुरे माडलटाउनाभिधाने शाखापुरे त्रिंशदुत्तरैकोनविंशतिशततम ईशवीये संवत्सर एकोनत्रिंशे दिवसे प्रवर्तमाने नवरात्रे सप्तम्यां तिथौ जनिर्मेऽजनि। स्वसृपादानां जन्मतः सप्तवर्षाणामन्तरेण प्रजातोऽहमिति पितृचरणैर्मम जन्मनि वाचामगोचरः कश्चनानन्दातिरेकः समन्वभूयत। मोदकैराकण्ठं तर्पितास्तैः सर्वेऽपि स्वजनाः प्रतिवेशिनश्च संस्तुता वाऽसंस्तुता वेति मातृचरणैरहं कदाचिदुक्तः। अन्यदपि तैः किञ्चिदुक्तम्—अस्मद्गृहसमीप एव कश्चिद्यवनोऽपि वसति स्म। तस्यास्तां द्वे भार्ये। एका पञ्चनदीयाऽपरा च पारसीका। द्विवर्षस्त्रिवर्षो वाऽहं रथ्यामतिक्रम्य तद्गृहमप्यगच्छम्। पञ्चनदीया तु हिन्दूबालोऽयमिति मां पर्यहरत्, पारसीका तु मयि सुतरामस्निह्यत्, एतन्माता त्वयि कुपिता स्यादिति पञ्चनदीयावचनमनादृत्यापि किञ्चिद् भक्ष्यादिकं मह्यमदात्। अहं तत्स्नेहवशंवदश्चिरं तस्यामस्थाम्। अतिक्रान्ते भूयसि कालेऽपि यदाऽहं न प्रत्यावृतं तदा मज्जननी मामन्विष्यन्ती तद्गृहं पर्यापतन्मां तत्क्रोडस्थं तया च 'जीव रे पुत्र! जीव' इति पुनः पुनरुच्चार्यमाणैराशीर्वचोभिर्वर्ध्यमानं बहुशश्च लाल्यमानमवलोक्य सुतरां निर्वृतस्वान्ता त्वमप्यस्या मातेति तां मधुरमधुरैर्वचोभिः

---

१ अधीगर्थदयेशां कर्मणि (२.३.५२) इत्यनेन षष्ठी।

२ प्रत्याङ्भ्यां श्रुवः (१.३.५९) इत्यनेन परस्मैपदम्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

सन्तर्प्य मां प्रत्यावर्तयत्। पारसीका सन्ततिविहीनेति शिशुं मां दृष्ट्वा वात्सल्य–निर्झरस्तस्याः स्वयमेव समुदगच्छत्। पूर्वजन्मसंस्कारवशाद्वा तस्या मय्येवंविधा स्नेहप्रवृत्तिरासीत्। भर्ता तु तस्या विधर्मिशिशौ मयि तत्स्नेहं नारोचयत। सपत्नी पुनस्ततोप्यधिकतरं तस्यायकुप्यत्। तत्सर्वं तृणाय मत्वा सा मय्यस्निह्यदेव। एवं तत्स्नेहलालितोऽहं शैशवं स्वं व्यत्ययापयम्।

## २

१९६८ वर्षे मत्कृतं प्रबन्धकाव्यं श्रीगुरुगोविन्दसिंहचरितं साहित्यअकादमी पुरस्कारेण सभाजितम्। प्रबन्धकाव्यमिदं शिष्याणां दशमगुरोः सुगृहीतनामधेयस्य गोविन्दसिंहस्य जीवनगाथामुपश्लोकयति। शिष्येतरधर्मावलम्बिना संस्कृतेन गुरुचरितमुपनिबद्धमिति शिष्यसमुदाये प्रवृत्तस्तदुपलक्ष्य महान् परितोषः। पुरस्कारोपलब्धिसत्कारार्थं तदा दिल्लीस्थेन श्रीगुरुतेगबहादुरखालसामहाविद्यालयेनाभिनन्दनोत्सवः समायोजितः। तत्र भाषमाणैः पितृचरणैर्मदीयानामन्यासां कृतीनां तदा यावत् प्रकाशितानामप्युल्लेखः कृतः। तास्वेकाऽस्ति श्रीरामायणस्य भाषादृष्ट्या समीक्षा 'दि रामायण–ए लिंग्विस्टिक स्टडी' इति शीर्षकेणाङ्ग्लभाषयोपनिबद्धा। तां चर्चयद्भिः पितृचरणैर्यद् रहस्यमुद्घाटितं तत्तदानीं यावन्मयाऽपि न ज्ञातमासीत्। तैरुक्तम्–गर्भस्थे मयि सम्पूर्णं वाल्मीकीयं रामायणं तैर्मे मातृचरणाः श्राविताः। तत्प्रभाव एवायं कदाचिद्यच्छ्रीरामायणे मम प्रवृत्तिः। गर्भस्थः शिशुः प्राणितीति यत्किञ्चित्तन्माता शृणोति तत्तस्यापि कर्णगोचरीभवति संस्काररूपेण च तस्मिंस्तिष्ठति। महाभारतीयाऽभिमन्युकथात्र प्रमाणम्। चक्रव्यूहस्वरूपं तत्रार्जुनेनान्तर्वत्न्यै सुभद्रायै प्रतिपादितम्। तत्प्रवेशपर्यन्तमेव तया श्रुतम्। तदनन्तरं निद्रावशीभूतया तया तन्निर्गमनप्रकारो न श्रुतः। यदेव तया श्रुतं तदेवाभिमन्युनाऽपि। अत एव चक्रव्यूहप्रवेशं सोऽजानात्, न तु ततो निर्गमनप्रकारम्। मयाऽपि मातृमाध्यमेन गर्भस्थेनैवाविकलं वाल्मीकीयं रामायणं श्रुतमासीदिति रामायणे मम विशेषाभियोगे हेतुतामियर्ति। सम्प्रति चतुरशीतिवर्षदेशीयोऽहं पितृचरणानां वचोविन्यासं प्रत्यक्षमिव कलयामि। सर्वथाऽमृषोद्यं च तदिति विभावयामि। न केवलं वाल्मीकीये रामायण एव मम परिश्रमोऽपि तु रामकियन्नाख्ये थाईदेशीये रामायणेऽपि। थाईदेशीया रामकथा मया महता परिश्रमेण पञ्चविंशतिसर्गात्मके परःसहस्रपद्योपनिबद्धे श्रीरामकीर्तिमहाकाव्ये वर्णिता। अपि च पत्रकाव्यमित्यत्र सङ्कलिते सप्तविंशत्युत्तरशतपद्यात्मके पत्रेऽपि लाओस–हिन्देशिया-मलयेशियादिदेशेषु प्रथमानाया रामकथाया भारतीयानामविज्ञाताः केचन विलक्षणा



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

प्रसङ्गा मयोद्घाटिताः। सेयं रामकथाविषयिणी प्रवृत्तिर्मम दुहितुरिन्दुबालाया अपीति चित्रीयां परां जनयति। तयाऽपि एम्. फिल्. इत्युपाध्यर्थं तुलसीरामायणे प्रकृतिचित्रणमिति विषये कृतमनुसन्धानकार्यम्।

## ३

जातस्य मम किं नामास्त्विति भूयो विमृष्टं पितृचरणैः। नाना दिनान्येतच्चिन्तने व्यापारित आत्मा। महाविद्यालयच्छात्रसूची तैरनेकशो निपुणं निभालिता। सत्यान्न प्रमदितव्यमिति कृतधियां तेषां सत्यं प्रत्यासीत्सविशेषमभिनिवेशः। अत एव सत्यव्रत इति नाम तैर्मेऽकारि सत्यमेव मम व्रतमस्तु सत्यमेवाहं वा व्रतयेयमित्याशंसद्भिः। नामकरणमहोत्सवश्च तैर्महतोत्साहेन सम्पादितः। निमन्त्रितास्तत्र तैः सर्वेऽपि लवपुरीया विशिष्टा विद्वांसो भोज्यान्नपानैश्च सत्कृताः कणेहत्य।

अल्पीयस्येव वयसि पितृचरणैर्मम संस्कृतवाचि प्रवेशः कारितः। अक्षराभ्यासात्पूर्वमेव संस्कृतशब्दानहं शिक्षितः। सत्यक्षराभ्यासे जटिलजटिलानपि कादम्बर्यादिकान् ग्रन्थानहमनायासेन वाचयितुं प्राभवम्। मदीया ज्येष्ठाम्बा मामनेकशोऽवोचद्यद्यदाहं पञ्चमे हायन एव संस्कृतग्रन्थानतिक्लिष्टानपि सर्वथा शुद्धरूपेणावाचयं तदा सर्वेऽपि बान्धवाश्चित्रीयापरवशाः किं स्वयं भगवान् कृष्ण एवास्मद्गृहानवतीर्ण इति परस्परेणाचकथन्। पञ्चमे वर्ष एवाहं पितृचरणैरध्ययनार्थं प्राथमिकशालां प्रवेशितः। तत्र चतुर्थकक्षां यावदेव ममाध्ययनं प्रावृतत्। तदनन्तरं ततो विनिवर्तितोऽहं संस्कृताध्यापनाग्रहग्रहिलैः पितृचरणैः स्वगृह एव ममाध्ययनं प्रवर्ततामिति दत्तबुद्धिभिः। प्राथमिकशालाध्ययनकालेऽहं "केयूराणि न भूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वलाः, श्रोत्रं श्रुतेनैव न कुण्डलेन" इत्यादीनि पद्यानि गायं गायं सर्वानपि विस्मयपरवशतामनैषं पारितोषिकादिकं चाविन्दम्। एकदा धावनप्रतिस्पर्धायामपि प्रथमं स्थानं मयाऽधिगतं पुरस्कारश्च प्राप्तः।

आ नवमाद्धायनादापञ्चदशं हायनं गृह एव ममाध्ययनं प्रावर्तिष्ट। तत्राहमासमध्येता पितृचरणाः प्रवक्तारोऽष्टाध्यायी चाध्ययनविषयः। अभिनवपाणिनिपदवीभाजस्ते मां स्वप्रतिबिम्बरूपतामापादयितुं समैहन्त। अत एव प्रतिक्षणं दिवानिशं व्याकरणमध्यापयितुं तद्रहस्यं च मां बोधयितुं प्रायतन्त। प्रातर्यदा कृष्णनगरस्थात्स्वकीयान्नवीनाद्वासगृहान्मालरोडान्ते स्थितं भव्यतमं लारेंसोद्यानं भ्रमणाय तेऽगच्छंस्तदा मामपि सहैवानयन्मध्येमार्गं सूत्रव्याख्यानं तदुदाहरणप्रत्युदाहरणे च सम्यक् प्रत्यपीपदन्। एवं क्रियमाणे बालस्य मे समजायतोद्वेगोऽपि। मदीयं प्रातर्भ्रमणमपि भवन्त आयासेनान्यथा कुर्वन्तीति


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कदाचित्कथयता मया स उद्वेगो वाचाऽपि प्रकटीकृतः, समनुभूतश्च तैर्मद्वचोऽन्या- नुद्घाटितवद्भिः। ब्रह्मचारिणा रसराजप्रधानानि काव्यनाटकादीनि नैव परिशीलयितव्यानीति मते स्थितैस्तैर्न तानि मामध्यापितानि। केवलं सर्वशास्त्रोपकारकं पाणिनीयं शास्त्रमेवाहं सम्यग्बोधितः। अमरकोषोऽपि मयाऽऽमूलचूलं कण्ठस्थीकृतः। एवं पितृचरणसान्निध्य एव मम कालस्तदाऽगात्।

न ममासंस्तदा केऽपि सहाध्यायिनो न वा क्रीडाकौतुकेषु सहायाः सखायः। एकादशवर्षे मयि स्वसृपादा अपि श्वशुरालयं गताः। श्वशुरालयोऽपि नगरान्तरे जालन्धरनगरेऽभूदिति कदाचिदेव तेऽस्मद्गृहानुपायन्। एवं सर्वथैकाकी सवयःसाहचर्यरहितो विद्याभ्यसनव्यसनेनैवात्मानं विनोदयन् कालमहं व्यत्ययापयम्। पितृचरणास्तदा डी. ए. वी. कालेजे लवपुरस्थे संस्कृतप्राध्यापका आसन्। अध्यापनार्थं यदा ते कालेजमगच्छंस्तदा मामपि स्वेन सहाकुर्वन्मध्येमार्गं च शास्त्रचर्चामेव प्रावर्तयन्। अध्यापनकाले मामध्यापककक्षे ते समुपावेशयन्। अहं कदाचित् पाठ्यग्रंथं कदाचिच्च गतागते कुर्वत आङ्ग्लवेषपरिभूषितानाङ्ग्लभाषया च परस्परेण सम्भाषमाणानध्यापकान् दर्शं दर्शं वैलक्ष्यमिव किञ्चिदनुभूय ह्रीमूढ इव तत्रास्थाम्। कदाचित्पितृचरणैः सह हिन्द्याऽऽलपनं मम श्रोत्रे अस्पृशत्। किं भवन्त इमं संस्कृतमेवाध्यापयिष्यन्ति नान्यत् किञ्चिदिति तैः पृष्टाः पितृचरणाः प्रथमं संस्कृतं तदनु भाषान्तरमपीति प्रतिवचोऽददुः। अद्यत्वे केवलं संस्कृताध्ययनेन न किञ्चित्सेत्स्यति आङ्ग्लभाषाध्ययनमपि साफल्यायापेक्ष्यते गणितेतिहास- भूगोलादिविषया अपि अद्यतनेन जनेन परिशीलयितव्या एवेति स्वसहकर्मिणां वाग्गुम्फं श्रवणविषयीकृत्य कालेन सर्वमपि सेत्स्यतीति यथाकथञ्चित्तांस्ते समतूतुषन्।

यतो नवीनपद्धत्या स्कूलाध्ययनं मम विरतमतः प्राचीनपद्धत्या संस्कृतपरीक्षा मयोत्तरणीया आसन्। अयमेवासीत्क्रमो मत्कृते निश्चितः। दशवर्षेण मया १९४० वर्षे पञ्जाबविश्वविद्यालयात् प्राज्ञपरीक्षोत्तीर्णा। अतः परमासीन्मयि विकल्पः। पञ्जाबविश्वविद्यालयीयां संस्कृतपरीक्षापद्धतिमनुसरेयं वाराणसेयीं राजकीय- संस्कृतमहाविद्यालयपरीक्षा (गवर्नमेण्ट संस्कृत कालेज एग्ज़ामिनेशन्स) पद्धतिं वा। आसीत्तदा पञ्जाबविश्वविद्यालयेन वाराणसेयी मध्यमापरीक्षा स्वकीयविशारद- परीक्षासमकक्षरूपत्वेन स्वीकृता। तामुत्तीर्य पञ्जाबविश्वविद्यालयतः शास्त्रिपरीक्षा- मुत्तर्तुमहमासं शक्तो वाराणसेयीं शास्त्रिपरीक्षामपि च। अतो देहलीदीपन्यायेनो- भयथाभीष्टसिद्ध्यर्थं मया १९४२ वर्षे मध्यमापरीक्षा समुत्तीर्णा। तदनन्तरं च पञ्जाबविश्वविद्यालयशास्त्रिपरीक्षाध्ययनार्थमहं लवपुरस्थे ओरियण्टल कालेज इत्याख्ये प्राच्यमहाविद्यालये प्रवेशमलप्सि। तत्र ममाध्यापका आसन्महामहोपाध्याय- माधवशास्त्रिभण्डारिणः, पण्डितजगदीशभट्टाः, पण्डितरघुनन्दनशर्माणश्च।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

महाविद्यालये प्रधानपण्डितपदवीभाजः पण्डितमाधवशास्त्रिभण्डारिणो मम यज्ञोपवीतगुरवोऽप्यासन्। महाभाष्याह्निकद्वये तैष्टीकाऽपि कृताऽऽसीत्। पण्डितजगदीशभट्टाः सिद्धान्तकौमुदीमध्यजीगपन्। पण्डितरघुनन्दनशर्माणश्च मनुस्मृतिमध्यापिपन्। १९४४ वर्षे मया पञ्जाबविश्वविद्यालयाच्छास्त्रिपरीक्षोत्तीर्णा।

## ४

पितृचरणैः स्वकीयं व्याकरणवैदुष्यं मां सङ्क्रमयितुमाशैशवादेव प्रयत्तमिति चर्चोपरिष्टान्मया कृतैव। तद्वशादल्पीयस्येव वयसि मया तत्र प्रौढिः प्रवयोभिरधिगम्या समासाद्यत। तदीयं प्रसङ्गमेकमत्र प्रस्तौमि। लवपुरे शालप्रांशुर्घन इव श्यामो बद्धोष्णीषो प्रलम्बकञ्चुकः नत्थूरामशास्त्रीति नामधेय आसीत् कश्चित्पण्डितप्रवेकः। यथा प्रातरहं तदा भ्रमणार्थं प्रतिदिनमगच्छमेवं सायाह्नेऽपि, प्रातः पितृचरणैः सह लारेंसोद्यानं प्रति सायमेकाकी गोलबागोद्यानं प्रति। एकदा सायं गोलबागे परिभ्रमन्नहं शास्त्रिणा तेनाहं दृष्टः। दृष्टमात्र एव मयि स चटुलोत्फुल्लगत्या मामुपागात्। पण्डितचारुदेवशास्त्रिणः पुत्रं व्याकरणं साङ्गोपाङ्गमध्यापयन्तीति प्रवृत्तिस्तदा संस्कृतसमाजे सर्वत्र प्रसृताऽऽसीत्। मामुपेतमात्र एव स शास्त्री मम व्याकरणज्ञानं परीचिक्षिषुर्मामप्राक्षीत् 'कुत्र चङ्क्रम्यते'। सोऽचिचिन्तद्यद् यङन्तप्रयोगेन बालोऽहं व्यामुह्येयम्। तच्च श्रीचारुदेवशास्त्रिणां धर्षणायै कल्पिष्यते। एवं परस्परेण 'स्निह्यन्ति' संस्कृतज्ञाः। यदैव 'कुत्र चङ्क्रम्यते' इति वाक्छास्त्रिमुखान्निर्गता तदैव मयोक्तम् 'अत्रैव बम्भ्रम्यते'। नावबुद्धमितीव नाटयता तेनोक्तम्– किम्'? मयोक्तम्– 'अत्रैव दन्द्रम्यते'। तच्छ्रुत्वा यथागतं गतः स शास्त्री। अपरेद्युः पितृचरणैः सङ्गतः स सर्वमपि वृत्तं यथातथमसुसूचदवादीच्च – 'अहो! विकटोऽसौ बालः। मय्यपि प्रगल्भते।' पितृचरणैरुक्तम्– सुकुमारवया असौ कुमारः। भवांस्तं परीक्षितुमुद्यत इति तेन जटिलेन भवत्प्रयोगेणावबुद्धम्। भवतो यन्मनसि तत्तेन जटिलतरेण प्रयोगद्वितयेनोद्घाटितम्। नैवं कदाचित्सुकुमारेषु कुमारेषु व्यवहर्तव्यम्। मया तु बाढं शिक्षितोऽसौ। न शिक्षितोऽभविष्यच्चेत्तस्य निरुत्तरता कां वा न पीडां तस्य मनस्यजनयिष्यत्।

एष एव नत्थूरामशास्त्री मम प्राज्ञपरीक्षाकाले विश्वविद्यालयपक्षतः पर्यवेक्षक (इन्विजिलेटर) आसीत्। जलं पिपाससि, श्रान्तिं वाऽनुभवसि इत्यादिभिः सान्त्वपरैर्वचोभिः स मां तत्रोपातिष्ठत्। सर्वेषु परीक्षार्थिष्वहमेव वयसा कनिष्ठ इति विस्मापकं तस्याभूत्। अद्यापि तं शास्त्रिवर्यं पुरतः स्थितमिव पश्यामि। कालेन तस्यापि स्नेहो मयि प्रगाढतां गतः। अनेकदा तेनाहं सङ्गतः स्नेहेनोपलालितश्च।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

## ५

मध्यमापरीक्षार्थं लवपुरे केन्द्रं नासीदिति तदर्थं मयाऽन्यत्रैव गन्तव्यमासीत्। ज्वालापुरस्थेन महाविद्यालयेन पितृचरणानामासीत्स्नेहसम्बन्ध इति मातृचरणैः सहाहं तमुपेतः। परीक्षाप्रारम्भात्कतिपयदिनपूर्वमेवाहं तत्र गत आपरीक्षान्तं च तत्र स्थितः। तत्रावस्थानकाले नाना विद्यार्थिभिः सह मम परिचयः संवृत्तो यो मैत्रीभावेनापि कालान्तरे परिणतः। तदात्वे प्रधानविषयनिर्देशपूर्वको मध्यमाया व्यवहार आसीद् व्याकरणमध्यमा, साहित्यमध्यमेत्यादि। अहं व्याकरणमध्यमार्थं कृतपरिश्रम इति तत्परीक्षार्थमासं प्रस्तुतः। यद्यपि प्रधानविषयस्तत्र व्याकरणमेवासीत्तथापि केचनावान्तरविषया अप्यासन् पाठ्यत्वेन तत्र नियोजिताः। तेषु नक्षत्रशास्त्रमित्येकः। तस्य सामान्यज्ञानमपेक्षितमासीत्तदर्थं च होराशास्त्रमितिपुस्तकं पाठ्यपुस्तकत्वेन निर्धारितमासीत्। तच्च मयि नासीत्। तद्विषये नाहं किञ्चिदप्यजानाम्। पूर्वाह्णे चापराह्णे चेति दिनस्य द्विः परीक्षा प्रचलति स्म। मध्ये होराद्वयं विश्रमकाल आसीत्। तस्मिन् विश्रमकाल एव कस्माच्चन परीक्षार्थिनो होराशास्त्रपुस्तकमधिगत्य यदृच्छया दृष्टिपथमापतिताः काश्चन कारिका मया त्वरितमेव कण्ठे कृताः। प्रश्नपत्रे च तद्विषयका एव प्रश्ना इति प्रसन्नेनान्तरात्मना ते मया समाहिताः। एवं दैवानुकूल्ये सर्वं सिध्यति। इदानीं चिन्तयामि कीदृशीयं परीक्षापद्धतिः। विषयस्य सम्यग्बोधोऽस्तीति किमनया परीक्षितुं शक्यम्? नैकधा दैववशादेव परीक्षासु साफल्यमवाप्नुवन्तिच्छात्राः। केवलं विषयज्ञानप्रति[३] सत्यपि अधीताद् ग्रन्थांशादेव पृष्टान् प्रश्नान् समाधाय भूयसोऽङ्कांस्ते लभन्ते तद्विषयविशेषज्ञाश्चोद्घुष्यन्ते। याः कारिका मया परीक्षापूर्वं स्मृतास्ताः परीक्षानन्तरमेव विस्मृताः। होराशास्त्रज्ञानात्यन्ताभावेऽपि भूयसोऽङ्कानहं तत्र लब्धवान्। भाग्यं फलति सर्वत्रेत्यवितथमेव।

## ६

दैवानुकूल्येनेष्टसिद्धिरिति चर्चायां प्रसङ्गमपरमप्युपस्थापयामि। परिसमाप्त–विश्वविद्यालयशिक्षोऽहं हंसराजकालेजे दिल्लीस्थे संस्कृतप्राध्यापकपदे नियुक्तः। अध्यर्धवर्षमेव तत्र कार्यं कुर्वाणस्य मम यदा व्यतीतमासीत्तदा कुरुक्षेत्रविश्वविद्यालये सद्यः प्रारब्धे वरिष्ठसंस्कृतप्राध्यापकपदं विज्ञप्तमभूत्। तदर्थं मयाऽपि प्रेषितं

---

३ सुप् प्रतिना मात्रार्थे (२.१.६) इत्यनेन मात्रार्थेऽव्ययीभावः। मात्रा लेश इति बालमनोरमा। विषयज्ञानप्रतीत्यस्य विषयज्ञानलेशः = अल्पं विषयज्ञानमित्यर्थः।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

प्रार्थनापत्रम्, साक्षात्कारार्थं चाहमाहूतः। प्राश्निकेष्वांसंस्तदा दिल्लीविश्वविद्यालय-संस्कृतविभागाध्यक्षा डा. नरेन्द्रनाथ चतुर्धुरीण (चौधुरी इति भाषायाम्) महाभागा, होशिआरपुरस्थविश्वेश्वरानन्द-वैदिकशोधसंस्थानस्य निदेशका आचार्य-विश्वबन्धुमहाभागाश्च। कुलपतिपदमध्यास्यत डा. अमरचन्द्रजोशिमहाभागैर्ये पञ्जाबविश्वविद्यालयस्यापि कुलपतिपदमभूषयन्। यथापद्धति साक्षात्कारं प्रारभमाणैः कुलपतिभिर्ममोपाधिविषये कृता नैके प्रश्नाः, कस्मिन् वर्षेऽधिगतोऽमुक उपाधिः, कस्यां च श्रेण्यां कुतश्चेति। यद्यपि सर्वमेतत्पत्रेष्वारोप्य प्रस्तूयत एवाभ्यर्थिना तथाऽपि तत्सत्यापयितुम-भ्यर्थिमुखाच्छ्रोतुमिच्छन्त्यधिकृताः। तत्र बी. ए. आनर्स परीक्षापरिणामविषये स्वकीये प्रार्थनापत्रे मया प्रतिपादितमासीद्यन्मया तत्राद्यावधि येनाधिकतमा अङ्काः समासादिता आसंस्ततोऽप्यधिकानङ्कानधिगतवता नूत्नं कीर्तिमानं स्थापितमिति। तदुपलक्ष्य कुलपतयो मामन्वयुञ्जत कीर्तिमानमिदं कस्मिन् विश्वविद्यालये स्थापितम्। लवपुरीये पञ्जाबविश्वविद्यालये सोलनीये चण्डीगढीये विश्वविद्यालये वा। यदि लवपुरीये तदा महतीयमुपलब्धिः। परःशतं वर्षाणि तस्य स्थापितस्य। यदि चण्डीगढीये तर्हि स तु विश्वविद्यालयः पञ्चदशवर्ष एव। किञ्च, कस्त्वत्पूर्ववर्ती तादृशो जनो येन सर्वाधिका अङ्का अधिगता आसन्यतश्चाधिका अङ्का त्वया अधिगताः? बहु चिन्तयमानस्यापि मम तस्य जनस्य नाम न स्मृतिपथमारोहत्। परीक्षापरिणामघोषणावसरे विश्वविद्यालयान्मया सूचनैषाधिगतासीत् परं साक्षात्कारकाले सर्वथा मे स्मृतिलोपः सञ्जातः। मौनमवलम्बमानं मामवलोक्य कुलपतिभिः प्रश्नः स्व आम्रेडितः। तदानीमपि यदा मया तूष्णीमेवास्थायि तदाऽऽचार्यविश्वबन्धुभिरुक्तम् अहमेव स जनः येन सर्वाधिका अङ्काः प्राप्ता आसन्ननेन च मत्तोऽप्यधिका अवाप्ता अङ्काः। तच्छ्रुत्वा सर्वे चमत्कृताः 'अहो! भवद्भ्योऽप्यधिका अङ्का अनेन प्राप्ता' इत्यवोचन्। तदनु न पृष्टः केनापि प्रश्नोऽहं वरिष्ठप्राध्यापकपदमर्ह इति च निर्णीतम्। मदीयं मौनं प्राश्निकैर्विनय इति गृहीतम्। कथं सम्मुखस्थितेषु विद्वत्तल्लजेष्वाचार्येषु भवद्भ्योऽप्यधिका अङ्का मयाधिगता इति मया शक्यं स्याद्वक्तुम्। अविनयकोटौ तदापतेत्। न केवलमहं मेधावी, विनयोपपन्नोऽपीत्यग्राहि प्राश्निकैः सदोगतैर्जनैः। भूतार्थस्तु सर्वथाऽन्यथैवासीदिति यत्सत्यं जितं दैवेन।

## ७

१९४४ वर्षे शास्त्रिपरीक्षा मया पञ्जाबविश्वविद्यालयादुत्तीर्णा। तदर्थमध्ययनं मम प्राच्यमहाविद्यालये पञ्जाबविश्वविद्यालयीये प्रावर्ततेति पूर्वमेवावोचम्। तत्रत्याः



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

प्रधानपण्डिता महामहोपाध्यायमाधवशास्त्रिभण्डारिणो ममोपनयनगुरव आसन्निति चापि पूर्वं निरदिक्षम्। पितृचरणा मामनेकदाचकथन्यदुपनयनकाले बाढं परीक्षितोऽहं तदानीन्तनैर्लवपुरीयैश्चतुर्भिर्विद्वदग्र्यैरिति। यान् यान् ग्रन्थान् ग्रन्थांशांस्तदवध्यह–मध्यापितस्तेषु निरन्तरा प्रश्नपरम्परा तेषां प्रवृत्ता सा च प्रश्नपरम्पराऽविच्छेदेन स्थिरेण च चेतसा मया समाहिता। तदनु प्रावर्तिष्ट ममोपनयनसंस्कारः शास्त्रोक्तेन विधिना। अयमेव क्रमः पौत्रस्य शरच्चन्द्रस्योपनयनकालेऽपि समाश्रितोऽभूत्। सोऽपि संस्कारात्पूर्वं महामहोपाध्यायछज्जूरामशास्त्रिपण्डितविद्यानिधिशास्त्रि–पण्डितअमीरचन्द्रशास्त्रिपण्डितभीमसेनशास्त्रीति विद्वच्चतुष्टय्या परीक्षितः। उपनयनकालं यावत् पितृचरणैः स बालो रघुवंशप्रथमसर्गं लघुकौमुदीं च पाठितः। तदधिकृत्यैव प्रवृत्ता विद्वच्चतुष्टय्याः प्रश्नझरी। देवानामपि लोभनीयमिदं दृश्यं सानन्दं स्मरन्त्यद्यापि नैके मत्सुहृज्जनाः। मञ्चस्थाश्चत्वारः प्रवयसो विद्वांसस्तदध–स्ताच्चोपवासकृश ईषच्चिन्ताकुलः सुकुमारवयाः कुमारः। परीक्षानन्तरमायुष्माञ् शरच्चन्द्रो बालशास्त्रीत्युपाधिना सभाजितो विद्वच्चतुष्टय्या।

## ८

शास्त्रिपरीक्षाध्ययनकाले छात्रावासमधिवसता श्रीवेणीशङ्कराभिधेन शास्त्रिवर्येण मम परिचयो जातः। कालान्तरे तथाऽन्तरङ्गतां गतः स परिचयो यन्मित्रभावमतिक्रम्य भ्रातृरूपेण स परिणत इति तद्विषयेऽप्यत्र किञ्चिद्विवक्षामि। यदेदम्प्रथमतया तं द्रष्टुमहं गतः कस्माच्चन प्रयोजनविशेषात् – स प्रयोजनविशेषो न सम्प्रति स्मृतिपथमुपारोहति– तदा श्वेतोत्तरीयावृतो मितवाक् गजनिमीलिकया मां पश्यन्नकिञ्चित्कर इति मां प्रतिभासयन् दृप्त इव स मां प्रत्यैयत। वयसा स मत्तो भूयोऽप्यधिकतरो, वर्णेन कृष्णो हरिद्वारस्थऋषिकुलमहाविद्यालय-स्नातकस्तदानीं पञ्जाबविश्वविद्यालयतः शास्त्रिपरीक्षामुत्तर्तुं प्राच्यमहाविद्यालये लब्धप्रवेशश्छात्रावासकृताधिवासोऽभूत्। तेन सङ्गत्येषत्संलप्य च मनागुद्विग्नमना अहं तत्कक्षात्प्रत्यागाम्, न मया सङ्गमभीप्सत्ययं नातः पुनर्द्रष्टव्य इति धिया। अतीतेषु कतिपयेष्वहःसु विद्यालये स मां दृष्ट्वाऽऽकारयत्सस्नेहं च मयि व्यवाहरत्। प्रत्यहमेवमेवाजायतावयोः सङ्गः। स मद्गृहानपि प्रायः समुपैत्पितृचरणानामपि च स्नेहभाजनतामगात्। तमहं ज्येष्ठभ्रातेत्यपश्यं 'भाईजी' इत्येवंरूपेण च समबोधयम्। सोऽयं 'भाईजी' मम जीवनाभिन्नाङ्गतां गतो मय्यपरिमितं स्नेहवर्षं यावज्जीवं वृष्ट्वा १९८५ वर्षे गोलोकमुपेतः। मदीयः सोदरो ज्येष्ठभ्राता नासीदिति तमेवाहं ज्येष्ठभ्रातृरूपेणापश्यम्। तदभावे रिक्ततामनुभवामि वाचामगोचराम्। पितरौ



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तं चातिरिच्य न कश्चिन्मां सत्येत्यर्धनाम्ना समबोधयत् मम स्वसृपादा अपि न, ये वयसा मत्तः सप्तवर्षाभ्यधिकाः। 'भाईजी' इत्यस्य काले काले वात्सल्यानुप्रेरितमवबोधनमनुशासनं च हठान्मे स्मृतिपथमुपैतः सम्प्रति चित्तं च मे द्रवयतः। परार्थैकचिन्त एव स जीवितमत्यवाहयदकृतदारः। यद्यपि नासावासीदाकृत्याऽतिशोभनस्तथापि तस्मिंस्तादृशं किञ्चिदासीद्येन स हठादाकर्षज्जनमनांसि। एतद्वशादेव काश्चिदङ्गनास्तं प्रति बभूवुराकृष्टाः, प्रणयप्रसङ्गाश्च ताभिः सह तस्य प्रवृत्ताः। जबलपुरमण्डलान्तर्गते माण्डलाग्रामे तस्य जनिरजनीति स बहुशो मामवोचत्। तज्जननी तस्मिन्नल्पवयस्येव दिवंगता। पिता तस्यान्यान्दारानकरोत्। पितामहेनास्य विमाता कदाचित्तस्मिन् न साधु व्यवहरेदिति धिया स स्वस्मिन् स्थापितः पोषितश्च। यदा स कौमारकं प्राप्तस्तदा संस्कृतानुरागिणा तेन वैद्यकाजीवेन संस्कृताध्ययनार्थं हरिद्वारस्थमृषिकुल–महाविद्यालयं प्रापितो यतस्तेन स्नातकोपाधिः प्राप्तः। शास्त्रिपरीक्षार्थं स लवपुरं प्राप्तः प्राच्यमहाविद्यालये च प्रवेशं लब्ध्वा तदीये छात्रावासे न्यवसत्। यावत्तस्य पितामहो जीवितं दधार तावत्तं धनं प्रैषयत्। दिवङ्गते तस्मिन् स्वकीयां संविधां स स्वयं व्यधात्। शास्त्रिपरीक्षामुत्तीर्य १६४७ वर्षे देशविभाजनकाले स श्यामलनगरीमुपेत्य कञ्चित्कालं तत्र व्यत्ययापयत् तत्पश्चाच्च कालिकाता–नगरीमुपेत्य वाणिज्येन स्ववृत्तिमकल्पयत्। १६४६ वर्षानन्तरं कालिकातानगरीमेव सोऽध्युवास। गोलोकवासात् किञ्च्विद्वर्षपूर्वं वाणिज्यादिकं सर्वं तेन परित्यक्तं हरिद्वारे च वसतिः प्रकल्पिता। तत्र कालीकमलीति प्रसिद्धे धर्मशाले तेन गृहं निरमायि। यावज्जीवाम्यहं तावदिदं मम, तत्पश्चात् कालीकमलीधर्मशाला–स्वामित्वमस्य भवेदिति तेन निर्णीतम्। गङ्गायां[४] वासस्तस्य सुतरामभिप्रेत आसीत्सदैव विशेषतस्तु परिणते वयसि। पुण्यक्षेत्रे हरिद्वारे यत्र विद्यार्जिता तत्रैव मे निर्याणमस्त्विति तस्यासीद्धार्दो मनोरथः। तथैव च विधिना समपादि।

यावत्स वाणिज्ये व्यासक्त आसीत्तावत्तस्यावासः ७७ धर्मतल्ला स्ट्रीट, कालिकाता इत्यत्रासीत्। मयाऽपि तत्र नैकदा गतं कालश्च कश्चित्तत्र व्यतियापितः।

## ६

पञ्जाबविश्वविद्यालयशास्त्र्युपाधिप्राप्त्यनन्तरमाङ्ग्लभाषापि मयाऽध्येतव्येति पितृचरणमनसि समुदितः सङ्कल्पः। १६४५ वर्षे मयाऽऽङ्ग्ललिपिज्ञानं प्रारब्धम्।

---

४ गङ्गायां घोष इतिवत्प्रयोगः।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

ततः प्राक् तद्विषये न किञ्चिदप्यहमजानाम्। स्कूलाख्ये पाठशाले मया प्रवेशो लब्धव्य इति पितृचरणानां तदा मतिरुदिता। तदर्थं च साधितः सम्पर्कस्तैस्त-दानीन्तनैर्लवपुरस्थ डी.ए.वी. हाई स्कूल प्रधानाध्यापकैः श्रीभगवान्दासैः। तैरुक्तं यतो बोर्डपरीक्षामयं नोत्तीर्णोऽतः स्कूलीयाः प्राध्यापका अस्य तत्तद्विषयकं ज्ञानं परीक्षन्ताम्। सन्तुष्टेषु तेषु बोर्डपरीक्षामन्तरेणापि नवम्यां कक्षायां मे प्रवेशः सम्भवी। आङ्ग्लभाषायां गणितविषये च स्कूलीयैरध्यापकैरहं परीक्षितः। मम तद्विषयकज्ञानं स्वल्पमेवेति प्रमादबहुलान्यासन् ममोत्तराणि। तथापि पितृचरणानां प्रभावातिरेकेण प्रवेशमर्होऽहमित्युक्तमध्यापकैः। प्रधानाध्यापकोऽप्यनुकूल इति प्रवेशितोऽहं तेन स्कूले। तदा १९४५ वर्षस्यासीदक्तूबरमासो यदाऽहं स्कूलं प्रविष्टः। लवपुरस्थो डी.ए.वी. स्कूलः पञ्चनदीयेषु स्कूलेषु ख्याततम इति भूयसी सङ्ख्याऽऽसीत्त-त्रच्छात्राणाम्। प्रतिकक्षं नैके वर्गा आसन् ए बी सी डी ई इति प्रख्याः। तत्र एवर्गो बी वर्गादुत्कृष्टो बीवर्गः सी वर्गादुत्कृष्ट इत्यासीत्कश्चित्क्रमः। अधिकाङ्कभाजश्छात्रा एवर्गे, ततो न्यूनाङ्कभाजो बीवर्गे, एवमन्येष्वपि वर्गेष्वध्यगीषत। सिताम्बरे मासे स्कूलीया परीक्षाऽभवद्यत्परिणामानुसारेण यदि एवर्गीयैर्न्यूनाङ्काः प्राप्तास्तर्हि ते वर्गान्तरं प्रावेश्यन्त, वर्गान्तरीयैर्यद्युत्तमा अङ्काः प्राप्तास्तर्हि ते तदनुसारेणोच्चोच्चं वर्गं प्रावेश्यन्त। एवं स्थितेऽक्तूबरमासि प्रत्येकं वर्गेऽभूवन्केचनच्छात्रा अदृष्टचरास्तत्तद्वर्गीयैरध्यापकैः। अहमपि तेष्वदृष्टचरेष्वेको नूत्नप्रवेशित्वेन न तूपरिष्टान्निर्दिष्टपद्धत्यनुसारेण। इतिहासकक्षायां प्रारब्धायां प्राध्यापकेन श्रीजगन्नाथग्रोवरेणाङ्ग्लभाषया पृष्टं कस्माद्वर्गात्त्वमिति—

आङ्ग्लाभाषागन्धिज्ञानवता मया प्रत्युक्तम्, नहि कस्मादपि वर्गाद् गृहाद् (आगतः) अहमिति।

मदीयं स्खलितबहुलं प्रयत्नोच्चारितमाङ्ग्लवचोविन्यासं श्रुत्वा सर्वाऽपि कक्षा साट्टहासमहसत्। प्रलम्बमानशिखः शास्त्रीतिपदवीधृगहं तथोपहसितः सतीर्थ्यैर्यद् धिया स्वाङ्गानि प्राविशमिव। मन्युश्चाविशन्मे स्वजनकं प्रति येनाङ्ग्लभाषामनध्यापयता केवलं संस्कृतमेव च शिक्षयताऽहं तादृशीं दशां प्रापितः। तदा सङ्कल्पः प्रादुरभून्मे मनसि शिक्षिष्येऽहमाङ्ग्लभाषां प्रावीण्यं चाप्स्ये तत्र तादृशं यद् दृष्ट्वाऽऽङ्ग्लाभाषाकोविदा अपि विस्मयं यास्यन्ति।

यादृशी मम स्थितिरितिहासकक्षायामभूत्तादृश्येव गणितकक्षायामाङ्ग्ल-भाषाकक्षायामपि च।

दृढसङ्कल्पमारूढोऽहमाङ्ग्लभाषाध्ययने दिवानिशमात्मानं व्यापीपरम्। तत्र मम सहायका आसन् मम पितृचरणा येषां संस्कृतज्ञानमिवाङ्ग्लभाषाज्ञानमपि प्रचुरमासीन्मदीयाः स्कूलीया आङ्ग्लभाषाप्राध्यापका अध्यापकानामादर्शभूताः श्रीमन्तो दौलतरामा य आपराह्णिकचतुर्वादनावधिकात्स्कूलकालादनन्तरमपि होरां होराद्वयं



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

वा छात्रानपाठयन् अभ्यासपुस्तिकासुच्छात्रैः कृतान् वाक्यविन्यासानशोधयन्, सम्यगुच्चारणमशिक्षयन्, सन्दर्भसंक्षिप्तिकां चाभ्यासयन्। प्रतिदिनमहं वृत्तपत्रमाङ्ग्लाभाषोपनिबद्धमवाचयं तत्र च यान् यान् नूत्नान् शब्दानपश्यं तान् रेखाङ्कितानकरवं तदर्थं च कोषादिभ्यो गुरुजनेभ्यो वा विज्ञाय तदुच्चारणं चावबुध्य दृढं स्मृतिपथमुपानयम्। एवं प्रावर्तत नाना मासान्ममाङ्ग्लभाषाध्ययनम्। दिवानिशं तत्र प्रयस्यता मयाऽल्पीयसैवानेहसाऽऽत्मसात्कृत आङ्ग्ल्या वाचो महान् शब्दराशिः। 'क्षणशः कणशश्चैव विद्यामर्थं च चिन्तयेदि'ति न्यायेन प्रतिक्षणं नूत्नशब्दग्रहण एव रमते स्म तदा मे मनः उदन्यितस्यो[5]दकमिव। न केवलं पाठ्यग्रन्थानपि तु ग्रन्थान्तराण्यप्यनेकान्यहं तदाऽवाचयम्। वर्ड्सवर्थकीट्स-शैलेप्रभृतीनां कविपुङ्गवानां कविता ओलिवेर् क्रामवेलादीनामुपन्यासकृन्मूर्धन्यानां कृतयश्च मया तदैवाधीताः। तथाऽऽत्मनि मे बद्धमूलोऽभूत्प्रत्ययो यथा मैट्रिक्युलेशनपरीक्षायां स्कूलप्रवेशानन्तरमध्यर्धवर्षेण सम्पत्स्यमानायामाङ्ग्लभाषयैव मया प्रश्नाः समाधेया इति महतीं प्रतिज्ञामहमारूढः। दुःसाहसमेवेति नैके मदीयाः प्राध्यापका अन्ये च हितैषणो मां ततः परावर्तयितुं प्रायस्यन्, न मे प्रतिज्ञाभङ्गः सह्य इति न तद्वचोऽहमभ्यनन्दम्। मया मैट्रिक्युलेशनपरीक्षायामाङ्ग्लभाषयैव प्रश्नाः समाहिता भूयांसश्चाङ्का अधिगता यद्वशाद्राजकीयां छात्रवृत्तिमप्य-हमवाप्नवम्।

यस्या वाचो ममाक्षरज्ञानमपि नासीत्तस्यां वर्षद्वयावधिकेनैव कालेन समपाद्यत मया कश्चिदधिकारविशेष इति हन्त जितं सङ्कल्पेन !

## १०

लवपुरे प्रथमं माडलटाउनाख्ये शाखानगरेऽस्मदावास आसीद्यत्र मम जन्माभूत्। तदनन्तरं गुरुदत्तभवनाख्यायां वसतौ कानिचिद्वर्षाणि वयमुषिताः। तत्पश्चात्पञ्च-नदसचिवालयनातिदूरस्थे शाखानगरे कृष्णनगराख्येऽभूदस्माकमावासः। स चावासः दयानन्दब्राह्ममहाविद्यालयसमीप एवासीत्। तन्महाविद्यालयपृष्ठत एकं सुदीर्घमुद्यानमासीद्यत्र यदा कदा भ्रमणार्थमप्यहमगच्छम्। महाविद्यालयपार्श्व एका प्रतोलिकाऽऽसीद्यत्र मुगलयुवराजस्य जहांगीरस्य प्रणयिन्या अनारकल्याः समाधिः (मकबरा) अस्ति। अस्मदृगृहसम्मुखे पारेरथ्यं बक्शीजैशीरामग्राउण्ड इति तदानीं

---

५ अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु (७.४.३४) इत्यनेन निपातनात्साधु। उदन्यितस्य पिपासितस्येत्यर्थः।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

ख्यातं यू.टी.सी. ग्राउण्ड इत्यपरनामधेयं पञ्जाबविश्वविद्यालयाधिकारे स्थितं तदीयक्रीडाप्रतिस्पर्धार्थमुपयुज्यमानं गोलाकारं क्षेत्रमासीत्। अपरस्यां दिशायां च पारेप्रतोलि मध्येऽलिन्दं रायसाहबझांगीरामबिल्डिंग इति लोकेन कीर्त्यमानं विशालं भवनमासीद्यत्रत्येषु नानागृहेषु नैके कुटुम्बा वसतिं चक्रुः। सचिवालयभवनं मार्गचतुष्कपार्श्वे स्थितमासीत्। एकेन मार्गेण कम्पनी बाग इत्यत्र गन्तुं शक्यते स्म, अपरेण गोलबागं, पञ्जाबविश्वविद्यालयभवननिचयं च यत्पुरस्तात् 'भङ्गियों की तोप' इति प्रसिद्धा भुशुण्डी स्थापिताऽभूत्, तृतीयेण डी.ए.वी. कालेजादिकं प्रति, चतुर्थेन च ब्राह्ममहाविद्यालयम् अनारकलीसमाधिं बक्शीजैशीरामग्राउण्ड–मस्मदावासं च। जहांगीरोऽनारकल्यामनुरक्त इति विज्ञाय तत्पित्राऽकबरेण सा जीवन्त्येव भूसमाधिं प्रापिता। अनारकली बाज़ार इति तन्नाम्ना ख्याताऽतिदीर्घा विविधमहार्घपण्यपूर्णापणसुशोभिता विपणिरप्यस्ति लवपुरे या तदीयालङ्कारभूता। एवं मालरोड इत्याख्यो राजपथो निरन्तराभिः पादपततिभिस्तद्दीर्घतां विशालतां च मातुमिव स्थापिताभिः कामप्यपूर्वां सुषमां बिभर्ति। तत्प्रारम्भेऽस्त्यभ्रचुम्बि प्रेषणीभवनम् अन्ते च लाट साहब का महल इति ख्यातो राज्यपालावासो यं समया[६]ऽति विशालं नाना द्रुमलतासनाथितं शिमलापहाड़ीत्याख्यं सततप्रवहदनेकनिर्झरनिनादनिर्ह्लादितं गजानामङ्गे रचिता भक्तिरिव नानाकृति–लघूद्यानततिसमलङ्कृतं लारेंसोद्यानं नेत्रद्वयासेचनकतामावहति। एतेन सौन्दर्यनिवहेनैव लवपुरस्य भारतस्य पैरिसमिदमिति ख्यातिरासीत्। शिक्षाया अपीदं केन्द्रमासीन्नागरकलायाश्च भूषाप्रकारस्य (फ़ैशन) चापि। तदा सीमान्तप्रदेशाद् दिल्लीं यावत् स्थिते विशाले भूखण्ड एक एव विश्वविद्यालय आसीत्स च पञ्जाबविश्वविद्यालय एव। अत एवोच्चशिक्षार्थं लवपुरमेवापतन्ति स्माहमहमिकया जनाः। अत्रैव नगरे डी.ए.वी. कालेज, गवर्नमैण्ट कालेज, दयालसिंह कालेज, एफ़्.सी.कालेज फार विमेन इत्यादयो नैके महाविद्यालया व्यराजन्त यत्र परस्सहस्राश्छात्रा विद्यामध्यगीषत।

## ११

मध्येऽलिन्दगृहाणां तदा लवपुरादिनगरेषु प्रचलनमासीत्। कृष्णनगरस्थमस्मद्गृहमपि तादृशमेवासीत्। अलिन्दस्यैकपार्श्व आसीदस्मदावासोऽपरस्मिन् पार्श्वे च कुटुम्बान्तरस्य यदीयः प्रधानपुरुषोऽधःकायस्य पक्षाघातग्रस्तत्वाद् गतागतयोरशक्तः

---

६ अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि इत्यनेन समयायोगे द्वितीया।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

स्वकीयावास एव ट्यूशनाख्येन विधिना वृत्तिमकल्पयत्। उभयोरपि कुटुम्बयोर्वृत्तजातं परस्परेणाज्ञातमेव तिष्ठत्विति प्रणुन्नेन भूटानीत्याख्येन गृहस्वामिना मध्येऽलिन्दं भित्तिरेका कारिता कालेन।

अस्मदावासे महानसमतिरिच्य प्रकोष्ठत्रयमासीत्। तिसृषु प्रकोष्ठेषु द्वौ बृहत्परिमाणावेकश्चाल्पपरिमाणः। बृहत्परिमाणयोरेकोऽनुरथ्यमासीद्यत्र पुस्तकस्थापनार्थमेकाऽतिविशाला दारवी मञ्जूषिका (आल्मारी) ऽनुभित्त्यशोभत। मध्येकक्षं चातीव बृहदेकं पटलमासीद्यत्र पुस्तकानि निष्कासं निष्कासमस्थाप्यन्त नानादिनानि नाना मासान् वा, यावन्न तानि पुनरपि मञ्जूषायां प्रत्यावर्त्यन्त। भूयान् ग्रन्थसंभारः पितृचरणानां पटल एवातिष्ठदक्रमेणाव्यवस्थितस्वरूपेण च। बहुशश्चास्त स रजसाऽऽविलः किङ्कराभावेन मार्जनविरहात्। पञ्जाबप्रदेशे वान्ति भूरिशो रजोविक्षिपा वात्या विशेषतस्तु तपर्तौ। तस्य रजसो दिनस्य द्विस्त्रिर्वा सम्मार्जनमपेक्षितं भवति। तच्च नास्माभिः कर्तुमशक्यत।

पितृचरणानामास्त नवनवपुस्तकसङ्ग्रहे महत्यभिरुचिः। प्रायः प्रत्यहमेव ते कालेजकार्यं परिसमाप्य गृहान् प्रत्यावर्तमाना मोतीलालबनारसीदासाख्ये मेहरचन्दलछमनदासाख्ये वा संस्कृतपुस्तकापणे सैदमिट्ठाभिधविपणिस्थे कञ्चित् कालमयापयन्। यद्यन्नवं पुस्तकं तत्रापश्यंस्तदक्रीणन्नत्यल्पेष्वपि साधनेषु। 'पुस्तकीभवति पण्डित' इति तेषां प्रियं वाक्यमासीत्। अतो माधुकर्या वृत्त्या तैः पुस्तकानि समगृह्यन्त। तेषां प्रियेषु वाक्येष्वेकमपरमप्यत्रोल्लेखमर्हति। तच्चासीत् – 'प्रायेणाकृतकृत्यत्वान्मृत्योरुद्विजते जनः'। तत्कदाचित्तैर्महाभारते पठितमासीत्। तत्तेभ्यस्तथाऽरोचत यत्ते तत्सुवाच्यैरक्षरैरतिसुन्दरैः कस्माच्चन लेखकोत्तमाल्लेखयित्वा गत्तेत्याख्ये दृढे पत्रे पूर्वनिर्दिष्टे नानापुस्तकनिवहोपचिते पटलेऽतिष्ठिपन्। अस्मद्गृहानुपेतं जनं च सोत्साहं ससंरम्भं च तत्प्रादर्शयन्। अकृतकृत्यत्वमेव मृत्योरुद्वेगे हेतुर्मृत्युर्वै प्राणिनां ध्रुव इति जानानस्यापि जनस्येति च तद् व्याख्यन्।

पितृचरणैर्लवपुरनिवासावधिके कालेऽपि प्रणीताः सम्पादिता वा नाना ग्रन्थाः। प्रणीतेषु ग्रन्थेषु श्रीगान्धिचरितं, व्याकरणद्वादशाध्यायी, ए मैनुअल आफ़ संस्कृत ट्रांसलेशन इति विशेषोल्लेखमर्हन्ति। सम्पादितेषु काटयवेमकृत कुमार–गिरिराजीयाख्यपाण्डुलिपिस्थटीकासनाथितं विक्रमोर्वशीयं, काटयवेमनील–कण्ठेतिटीकाकृद्द्वयकृतटीकोद्धरणसमेतं मालविकाग्निमित्रं, कुन्दमालां चातिरिच्य भर्तृहरिवृत्तिसमेतं पुण्यराजहेलाराज-वृत्तिसनाथितं च वाक्यपदीयं विशेषोल्लेखमर्हति। नाना वर्षाणि कृतः श्रमः पितृचरणैर्वाक्यपदीय- पाठयोजनायाम्। द्वौ भागावेव तस्य ग्रन्थस्य-भर्तृहरिवृत्तिसमेतं ब्रह्मकाण्डं पुण्यराजटीकासमेतस्य द्वितीयकाण्डस्य च कश्चंनाशो रामलालट्रस्टस्यार्थिकेन साहायृयेन प्राकाश्यं नीतौ। शेषस्तेषु मातृकास्थ एवातिष्ठद् दारव्यामेकस्यां मञ्जूषायां (बाक्स) न्यस्तः।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अध्ययनकक्षबहिर्द्वारसमीप एव एकासन्धासीत्। प्रतिदिनं प्राच्यमहाविद्यालय-प्राध्यापकाः पण्डितरामचन्द्रकुशला महाविद्यालयाध्यापनकर्म निर्वर्त्यापराह्णे ऽस्मद्गृहमागमिकर्मीकृत्य तामधिष्ठाय कञ्चित्कालं पितृचरणैः शास्त्रचर्चासुख-मनुभवन्ति स्म।

१९४६ वर्षपर्यन्तं यत्र तत्रावक्रीतेष्वेव वेश्मस्वस्मत्कुटुम्बस्यावासोऽभूत्। स्वकीयमपि किञ्चिद् वेश्म भवत्विति पितृचरणानां बुद्धिरुदिता। अतः कृष्णनगर एव युधिष्ठिरमार्गे तैर्भूभाग (प्लाट) एकः क्रीतः 'कनाल' परिमाणः। पर्याप्तपरिणाहके तस्मिन् भूभागे यथारुचि यावदपेक्षं च रुचिरमेकं गृहं निर्मापयितुं शक्येत वाटिकासंवलितमित्यासीत्तेषां मतिः। परं तन्न निर्मापयितुमशक्यत।

१९४७ वर्षे भारते वर्षे महती विपदापतिता। मुस्लिमबहुलास्तदीयाः प्रदेशाः पृथग्देशरूपेणात्मानमकल्पयन्। हिन्दूनां मुस्लिमानां च परस्परविरोधश्चरम-सीमानमारूढः। हत्या, लुण्ठनं, बलात्कारश्च सर्वत्र मुस्लिमबहुलेषु प्रदेशेषु सरभसं प्रवृत्ताः। आविष्टरूपा इव लोका अन्योन्यं व्यतिजघ्नुः,[७] वेश्मस्वनलं ददुः, स्त्रियोऽपजह्रुरन्यच्च बह्वनिष्टमाचेरुः। हिन्दवोऽन्यजना (नेशन) वयं चान्यजना नास्माकं तैः किञ्चनापि साम्यमिति पृथगेवास्माकं देशो भवतु यत्स्वामिनो वयं स्याम यत्र च यथाकामं वयं प्रवर्तितुं प्रभवेमेति जिह्नादिनेतृवर्गनिरन्तरानिष्टो-पदेशोपहतात्मानो मुस्लिमाः पाकिस्ताननाम्ना नूतनं देशं कल्पयामासुः। पश्चिमे दिग्विभागे तदन्तर्वतिनः प्रदेशा बभूवुः सीमान्तप्रदेशः, सिन्धुः, बलूचिस्तानः, पञ्जाबप्रदेशस्य पश्चिमो भागः, पूर्वस्यां दिशि बङ्गप्रदेशस्य पूर्वभागश्च। अमृतसरनगरनिकटस्थं वागास्थानं भारतस्य पाकिस्तानस्य च सीमारूपेण निर्धारितम्। यद्यपि लवपुरे मुस्लिमानां हिन्दूभ्योऽधिका सङ्ख्या नासीत्ते तद्वासिनां सङ्ख्यायां प्रतिशतं केवलं चत्वारिंशदेवाऽसंस्तथापि तन्नगरं पाकिस्तानाङ्-गत्वेनैवाङ्गीकृतं तदानीन्तनैर्ब्रिटिशशासकैः कांग्रेसाख्यस्वातन्त्र्यान्दोलन-संस्थाशीर्षस्थैश्च महाजनैः। नाना शताब्दीः मुस्लिमैः सहोषिता वयं तद्देशत्वेनोद्घोषिते देशेऽपि वस्तुं शक्ता इति तदा हिन्दूनां सिक्खानां च मतिर्बभूव। परं मुस्लिमास्तेभ्यस्तथा दुद्रुहुर्यथा ते तदवस्थितिमेव न ममृषुस्ततोऽपयान्त्विति च मनो ददुः। एवं पैशाचीं बुद्धिमास्थितास्ते तेषु पूर्वप्रतिवेशिष्वपि रक्षोवद् व्यवजह्रुर्नूत्ने देशेऽस्माकमवस्थितिर्न सम्भविनीति विज्ञाय लक्षशो हिन्दवः शिष्याश्च विहाय स्वान् गृहान् स्वांश्च[८] स्वं च[९] भारतमभिप्रस्थिता मध्येमार्गं केचन

---

७ न गतिहिंसार्थेभ्य (१.३.१५) इत्यनेन कर्मव्यतिहाररूपेऽर्थेऽपि आत्मनेपदनिषेधान्नात्मनेपदम्।

८ बन्धूनित्यर्थः।

९ धनमित्यर्थः।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विधर्मिभिर्हताः केचनाशनायोदन्याभ्यां पीडिता उपरताः केचन च बलादिस्लामधर्मं ग्राहिताः, केचन पुनः स्वधर्मरक्षापरायणाः सोढ्वाऽपि कष्टपरम्परां शरणाय भारतमभिप्रपन्नाः। धर्मान्धानां मुस्लिमानां 'अल्लाहो अकबर' घोषो हिन्दूनां शिष्याणां मनसि त्रासं जनयामास। प्रव्यथितहृदयास्ते किङ्कर्तव्यविमूढा अराजकतामेव सर्वत्र पश्यन्त आत्मरक्षार्थमुपायमलभमानाः कान्दिशीका मार्गादिकमजानाना यया दिशा कञ्चनापि गच्छन्तं ददृशुस्तयैव प्रस्थानमारेभिरे। वाहनादिकस्य तु कथैव तावदास्तां, पत्काषिणस्ते बाला वा जराक्रान्ता वा युवानो वा युवतयो वा शिरसा मञ्जूषादिकं वहन्तो वक्षसा शिशून्धारयन्तोऽङ्गुल्या च कुमारान्सह नयन्तोऽज्ञातं स्थानं प्रति प्रतस्थिरे। न कश्चित् कञ्चनात्र परिचिकाय, यदि मध्येमार्गं कश्चिद्बन्धुर्मृतस्तर्हि तमुपेक्ष्यैव प्रियान् प्राणान् रक्षितुमग्रेसरन्तो दीना विवर्णा अनाथा असहायास्ते निरन्तरप्रवहन्नदीधारेव रात्रिन्दिवं प्रयान्त एव दृष्टिपथमवतेरुः। यदि केचित्तेषु गन्त्रीविरामस्थानमभिगम्य भारतं प्रति प्रयान्तीषु गन्त्रीषु स्थानं लेभिरेऽपि ते नैकशः मध्येमार्गं सर्वेषामपि रेलयात्रिकाणां कदनं प्रकुर्वद्भिर्नरपिशाचै-र्यमलोकं प्रापयाञ्चक्रिरे। किञ्च, सर्वेषामपि शरणार्थिणां कृते रेलयानेषु स्थानमसम्भवमिति भूयांसस्तेषु तच्छदिषूपविष्टा स्वजीवितं संशयमापादयाञ्चक्रिरे। केचिद्यानेषु प्रक्रान्तेषुच्छदीनामर्धवृत्ताकारत्वात्तत्रोपवेशनानभ्यासात् ततः पतिता असूञ्जहुः, केचिच्च यथाकथञ्चिदात्मानं पर्यवष्टभ्य स्थिता अप्यनवधानवशाद् गन्त्रीविरामस्थानेष्वन्यत्र वा निर्मितेभ्यः सेतुभ्यः पराहता निपेतुः प्राणांश्च तत्यजुः। केषुचिन्नगरेषु कन्यका निर्वस्त्रीकृता मार्गेषु रथ्यासु चानीता प्रदर्शयाञ्चक्रिरे पशुवृत्तिभिर्विधर्मिभिः। को वाऽनर्थो न तदानीं कृतोऽकृतात्मभिः को वा नोपद्रवः समाचरितः। यत्तैः कृतं तत्प्रतिक्रियारूपेण भारतेऽपि जातं यद्वशात्ततोऽपि निर्गमो मुस्लिमानां प्रारेभे। एवं सर्वत्रैव पश्चिमोत्तरदिग्विभाग औत्तराधर्यं प्रववृते परस्परेण द्वेषो वैमनस्यं वैरं च परां काष्ठां प्रतिपेदिरे।

सम्प्रति पाकिस्थानाङ्गभूतेभ्यस्तत्तत्स्थानेभ्योऽपक्रान्तानां जनानां शरणायानेकत्र नगरेषु विशेषतस्तु लवपुरे शरणार्थिशिबिराणि भारतशासनेनास्थाप्यन्त। ततः सैनिकवाहनेभ्यः ट्रकाख्येभ्यः सैनिकैः शरणार्थिनो भारतसीमानमत्यक्राम्यन्त भारतसीमावर्तिषु शिबिरेषु चास्थाप्यन्त। तत्र कञ्चित्कालमुषित्वा यत्र कुत्रापि तेषां गमनावसरोऽभूत्तत्र तेऽगच्छन्।

यथाऽद्यत्वे तथा तदानीमपि जूनमासे जुलैमासे च विद्यालयेषु महाविद्यालयेषु चानध्ययनं प्रावर्ततावकाशवशात्।

प्रायः प्रतिवर्षं ग्रीष्मावकाशं पितृचरणाः कस्मिंश्चित्पर्वतीये स्थाने व्यत्ययापयन्। तत्र तेऽध्ययनेन ग्रन्थादिप्रणयनेनावसन्। अहं च मातृचरणाश्च तैः सहैव तत्राभवाम। परं १९४७ वर्षे पितृचरणा ग्रीष्मावकाशं यापयितुं स्वजन्मस्थलं


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

होशिआरपुरमण्डलान्तर्गतमहियापुरग्राममेव प्रतिपन्नाः, जुलैमासान्तेऽगस्त्यमासादौ वाऽध्ययनशालेष्वध्ययने पुनः प्रवृत्ते पुनर्लवपुरं प्रतिपत्स्यामह इति धिया। न कोऽप्यजानात्तदानीं यत् प्रत्यापत्तिर्न सम्भवेदेव। लवपुरीये गृहेऽर्गलां दत्वा ततोऽवकाशकालमात्रमेव यापयितुं स्वल्पपरिमाणमपेक्षिततमं वस्तुजातं गृहीत्वा ते निर्गता आसन्। अन्यत्सर्वं तत्रैवासीत्। अत्रान्तरे पाकिस्थानघोषणया पूर्ववर्णितो महानुपप्लवो दावाग्निरिव सर्वत्र प्रसृतः। लवपुरं प्रति प्रतिगमनस्य तु का कथा, तच्चिन्तनमप्यशक्यमभूत्।

अहियापुरग्रामे यदस्माकं पैतृकं गृहमासीत् तत्केनापि कौटुम्बिकेनानध्युषि-तत्वाज्जीर्णतां गतमासीत्। पितृचरणानामास्तां द्वौ भ्रातरौ। तावुभौ नानावर्षपूर्वं सम्प्रति हरियाणाराज्यान्तर्गते अम्बाला छावनी इति स्थाने वसतिमकल्पयेताम्। मदीया ज्येष्ठतातास्तत्र रेलविभागे नियुक्ता आसन्। कनिष्ठताता वाणिज्येन तत्रैव वृत्तिमकल्पयन्। पित्र्ये ग्रामे वासो न तयोः कस्मैचनाप्यरोचत। पितृचरणानां मनः पुनस्तत्रारमत। अतस्तदीयतृतीयभागमूल्यं ताभ्यां प्रत्येकं दत्त्वा तैः सम्पूर्णमपि गृहमात्मन्य[१०]धि कृतम्। कोलाहलाक्रान्तेऽपि सर्वत्र देशे तैर्जीर्णस्य तस्य पुनरुद्धारः प्रारब्धः सुखं निवासस्तत्र सम्भवेदिति। तत्र महत्काठिन्यं तैरनुभूतं विषमायां स्थितौ। गृहनिर्माणाय सामग्री समपेक्षिता न सुलभाऽभूत्। यदि लभ्येतापि तर्हि द्विगुणेन त्रिगुणेन वा मूल्येन। महदसौविध्यं तैरनुभूतं तदा। यथाकथञ्चिद् गृहं निर्मितं तत्र च वासं प्राकल्पयामहि वयमवक्रयगृहीतमेककक्षं कस्यापि जैनस्य गृहं विहाय।

## १३

यदा वेणीशङ्करशास्त्रिणो (भाईजी) लवपुरे महाविद्यालयच्छात्रावास आसंस्तदा तेषां तच्छात्रावासनिवासिना केनापि कृष्णलालाख्येन सम्पर्कः सञ्जातः। स हि नाहनराजपुरोहितस्यापत्यमासीत्। बाल्यावस्थायामेव तस्य पितोपरतः। तस्य माता तदीयेन कनीयसा भ्रात्रा श्यामलालेन सह नाहनमध्यवसत्। भाईजी इत्यस्य कृष्णलालेन सह सम्पर्कः कालेन तथा घनिष्ठतां गतो यथा लोके द्वावेव भ्रातरावावामिति प्राख्यापयताम्। पितृविहीनस्य कृष्णलालस्य कृते प्रवया भाईजी स्निग्धप्रकृतिकत्वाल्लोकव्यवहारनिपुणत्वाद् वटवृक्ष इवच्छायाप्रदोऽभूद् यमवलम्ब्य स्वं जीवितं सुखेन यापयितुमसावकामयत।

---

१० अधिरीश्वरे (१.४.९७) इत्यनेन सप्तमी



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

सञ्जातायां पाकिस्थानघोषणायां कृष्णलालपरामर्शानुसारेण तत्सहचरितो भाईजी लवपुरादपक्रम्य शिमलां प्राप्तस्तत्र च बालूगंजनाम्नि शाखानगरे भाटकेनावगृहीते कस्मिंश्चिद्वेश्मनि वसतिं चक्रे। ग्राम्ये गृहे ममावस्थित्या नार्थ इति चिन्तयित्वा पितृचरणा मां तस्मिन्प्रैषयन्। अहं च तेन सह कतिपयान् मासानगमयम्। मयि तस्यापरिमितः स्नेह आसीदेव परं कृष्णलालस्य व्यवहारः कदाचिन्नासीत्समीचीनः। आधुनिकम्मन्योऽसावात्मानं मत्त उत्कृष्टतरममन्यत। स्वकीयं नामापि तेनानयैव बुद्ध्या परिवर्तितम्। स आत्मानं के. ललित इति प्रख्यापयामास। तदानीं विश्वविद्यालयेषु इलाहाबादविश्वविद्यालयस्य विशिष्टा प्रतिष्ठाऽऽसीत्। अतः स आत्मानं तच्छात्रमुद्घोषयामास। आंग्लवेषं परिधाय नानासुगन्धिद्रव्यलेपनेन सुरभिं विकिरन्नसौ शिमलास्थे मालमार्गेऽटाट्याञ्चक्रे। अहं पुनः पुरातन्या पद्धत्या परिपोषितः कृत्रिमभङ्गीबहुलां (मैनरिज़्म्) पद्धतिमजानानस्तां वाऽऽत्मसात्कर्तुमशक्नुवन् न तत्सङ्गमर्हं इति तेन दूरत एवाक्रिये। न तेन मे कश्चिन्मनोभङ्गोऽभूत्। मयि काचिन्न्यूनताऽस्तीत्येवाहमन्वभूवम्। आधुनिके समाजे मया यच्छिक्षितव्यं तन्न शिक्षितमित्यहमात्मविषयेऽबुध्ये।

## १४

शिमलायां न मे बहु करणीयमासीत्। अत इतस्ततो भ्रमणैनैव मया तत्र कालो नीतः। हीरासिंहनामा कान्दविको बालूगंजस्थान आसीत्तस्यैव भोजनालये भोजनादिव्यवस्थाऽऽसीत्। स धर्मपरायणो मृदुवाक् चासीत्। तेन नाना धर्मग्रन्थाः संगृहीताः कालेन। यथा यथा स तान् ग्रन्थानध्यैष्ट परस्परविरोधिविचारवृन्दैस्तेषु प्रतिपादितैराकुलितान्तरंगोऽसौ समजायत। एकदा सुतरां व्याकुलेन तेन चिन्तितं किमेतेन ग्रन्थसम्भारेण यो मानसीं शान्तिमपहन्ति। एतच्चिन्तनेन प्रणुन्नोऽ—सावकृतबुद्धिः सर्वमपि ग्रन्थसम्भारं दूरे खड्ड इत्याख्ये नीचैस्तरां स्थाने प्राक्षिपत्, प्रक्षिप्य च परां निवृतिमवाप। स्वेनैवैष प्रसंगः कदाचिन्मां तेन प्रतिपादितः। तं श्रुत्वौपनिषदं वचो हठान्मे स्मृतिपथमुपागात् – अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ततो भूय इव ते य उ विद्यायां रताः। कदाचिद्विद्याऽपि भूयसेऽन्धतमसाय [११]कल्पते।

शिमलायां भाईजीसंगत्या कालो मया सुखेन यापितः। मम नाना व्यञ्जनपाकज्ञानं नास्ति। केवलं हलवेत्याख्यमिष्टान्नपाकमवश्यमहं जानामि।

---

११. अवसमन्धेभ्यस्तमसः (५.४.७९) इत्यनेन समासान्तेऽचि रूपम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तत्र च किञ्चित्प्रावीण्यमपि मेऽस्ति। तच्च मया स्वयमेवासादितम्। मया साधितं हलवाव्यञ्जनं सर्वेभ्यः स्वदते। एवं पायसमपि मया साधितं सर्वेभ्यो रोचते। शिमलावासे नैकदा व्यञ्जनद्वयमिदं मया साधितम्। कदाचिद् इन्धनस्यार्द्रत्वात्त–दनुपलम्भाद्वा पाकक्रियायां काठिन्यमनुभूयते स्म। तदा वन्यं क्षेत्रमुपेत्य चिल्याकड़ू इति लोकभाषया संज्ञितानि चीड़वृक्षफलानि वृक्षेभ्यः स्वयं पतितानि त्वरितम् अग्निसंस्पर्शमात्रेण प्रज्वलन्ति विचायं विचायमभ्युच्चित्य तानि चेन्धनीकृत्य हलवां पायसं चासाधयम्। कदाचिद् व्यञ्जनान्तरपाकेऽप्यहं प्रावर्तिषि। भूयान् कालो मम चिल्याकड़ूनामभ्युच्चये व्यञ्जनसाधने चागात्, येन दुःखितोऽहं कदाचिद् 'भाईजीं' प्रति स्वां व्यथामेवं न्यवीविदम्—अहो! यावद्दिनं पशुवृत्तिमेव वयं कल्पयाम इति। मद्वचः श्रुत्वा स उच्चैरहसत्। तदनन्तरमागामिषु वर्षेषु नैकदा च तदुद्धृतवान् परिहासप्रणुन्नः। यत्सत्यं पशुवृत्तिरेव यद्दिवानिशमाहारार्थमेवात्मनो व्यापारणम्। भाईजी इत्यस्मिन् कांश्चिन्मासान् व्यतियाप्य पितृचरणानहमहियाग्रामस्थानुपसन्नः।

## १५

ग्रामस्थेषु पितृचरणेषु पुस्तकानि नासन्निति तत्मनोऽचेखिद्यत। तेषां मनस्तु पुस्तकेष्वेवारमत। तदभावे परा वैयाकुली तैरन्वभूयत। अहियापुरेऽमींचन्द्रनामान एके विप्रवरा आसन्। तेषु कानिचन संस्कृतपुस्तकान्यभूवन्। तेषां कीटानुविद्धत्वान्मूषकाघ्रातत्वाद्वा न तानि सुवाच्यान्यासन्। पुस्तकाभावेन कालक्षेपः पितृचरणानां कृतेऽसह्यत्वकोटिमापन्नस्तानतूतुदत्। एतस्यां स्थितौ तन्मनसि संकल्पोऽजागरीद्यत्ते लवपुरं गत्वा ततः स्वं पुस्तकसंग्रहमानयेयुरिति। घोरं संकल्पमिममारुह्य ते सर्वत्रोपद्रवे प्रलयवात्येव प्रसृतेऽपि अमृतसरनगरमुपेत्य केषाञ्चन सुहृदां साहाय्येन सैनिकवाहनमारुह्य लवपुरस्थशरणार्थिशिबिरं प्राप्ताः। शिबिरः डी. ए. वी. कालेज एवासीत्। तत्र ते विश्वेश्वरानन्दवैदिकशोध-संस्थानपुस्तकानि भारतं प्रापयितुं बद्धबुद्धीन् शिबिरे च तदर्थं कृताधिवासान् आचार्यविश्वबन्धूनपश्यन्। शिबिरोपगमद्वितीयदिवसे तेऽचिन्तयित्वा किञ्चिदन्यत्कृष्ण—नगरस्थं स्वं गृहं प्रति प्रस्थिताः। एवं कुर्वद्भिस्तैरात्मा महति संशये पातितः। मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् इति पद्धत्यैव प्रवृत्तं तैस्तत्र। तदाकृतिरेव ते हिन्दव इति परिचाययितुमलमासीत्। हिन्दूरयमित्येतावदेव यत्र वधाय पर्याप्तमासीत्तत्र एकाकिन एव ते गन्तुमभिप्रवृत्ताः। विरलसञ्चारास्तदा पन्थानस्तैरवलोकिताः। यदि कोऽपि दृष्टिपथमवातरदपि सोऽपि मुस्लिम एव। तेन भयं हृदयमकम्पयत्। तथापि पर्यवष्टभ्यात्मानं पद्भ्यामेव प्रायो



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

जनसञ्चारशून्यान् पथोऽतिक्रम्य ते स्वगृहान् प्राप्ताः। तत्र यत्तालकं ततो निर्गमनात्पूर्वं तैर्दत्तमासीत् तत्तथैवास्त। यावत्ते तदुद्घाटयन्ति तावदेव दैवदुर्विपाकादन्तर्द्वारगताऽर्गलिका (चिटखनी) ऽधश्छिद्रं पतिता येन द्वारमन्तः पिहितं समजायत। एवं स्थिते किङ्कर्तव्यविमूढास्ते यावदुपायं चिन्तयन्ति तावत्सम्मुखस्थाद् गृहात् कश्चिद्युवा साह्याय समुद्यतोऽभूत्। स भित्तिमारुह्य छर्दिं प्रति गतस्ततश्चान्तरकूर्दत। अन्तर्गत्वा च तेनार्गलिकापाकृता येन पितृचरणा गृहं प्रवेष्टुमशकन्। सात्त्विकानां जनानां प्रभुरपि साहाय्यं विदधातीत्येतेन स्पष्टं भवति। येभ्यो येभ्योऽपि गृहेभ्यो हिन्दवोऽपाक्रामंस्तानि तानि गृहाणि भारतादपक्रान्तैर्मुस्लिमैरन्यैर्वा लवपुरस्थैर्निजावासरूपेणाकल्प्यन्त। एतादृशमेव मुस्लिमकुटुम्बकं तदासीद्येन सम्मुखस्थं गृहमात्माधीनमक्रियत। तदीयेनैव यूना पितृचरणानां साहाय्यं विहितमासीत्। पितृचरणैः सम्भाषमाणेन तत्कुटुम्बकप्रधान–पुरुषेणोक्तं भारतापक्रमकाले हिन्दूभिरस्माकं बहु साहाय्यं व्यधायि, प्राणपणेनापि वयं रक्षिताः शरणार्थिशिबिरं च प्रापिताः। वयं हिन्दूनां कृतज्ञाः। न तदुपकारं कदापि विस्मरिष्यामः। अत्रेदं विचारणीयं भवति यत्सुकृतिनां दैवमपि साह्यं विद्धाति। दैववशादेव तादृशं कुटुम्बकं सम्मुखस्थे गृहे स्थितिमकल्पयत्, यद् हिन्दूभिरुपकृतमासीत्। यद्यन्यादृशं किञ्चित्कुटुम्बमभविष्यत् को वाऽनर्थो नापतिष्यत्। अस्तु। अन्तःप्रविष्टैः पितृचरणैः पुस्तकानि सम्पुटीकृत्य रज्जुभिर्बद्धानि स्वसृपादानां विवाहावसरे विविधसामग्रीस्थापनाय प्राप्तेषु तदानीं रिक्तेषु प्रसेवेषु च स्थापितानि। कथं तानि शरणार्थिशिबिरं प्रापयितव्यानीति तदा समुपस्थिता तत्पुरतो व्यालीव कराला समस्या।

हिन्दूषु केवलं सम्मार्जका एव न मुस्लिमैर्विद्रावितास्ते तानपि परिचरिष्यन्तीति धिया। अस्मद्गृहसमीपमेव कस्यचित्सम्मार्जकस्य गृहमासीत्। तस्मिन्नेकं शकटमासीत्। तस्मिन् शकटे पुस्तकान्यारोप्य पर्याप्तद्रव्यदानेन च तं सन्तोष्य ते शरणार्थिशिबिरं प्रापन्। सम्प्रत्यासीत्समस्या पुस्तकानां भारतप्रापणस्य। सैनिकवाहनैः केवलं शरणार्थिजना एव गन्तुं शक्नुवन्ति नोपकरणादिकं किञ्चिदन्यद्वा सामग्रीजातं प्राणरक्षायाः प्रथमकोटिकत्वादित्यासीत्तदानीन्तनी व्यवस्था। अस्यां किं क्रियेत नाम। पितृचरणैरनुरुद्धाः केचन सेनाधिकारिणः पुस्तकानां नयनाय। प्रथमं सुदृढं नेति ते प्रत्यूचुः। यदा तैरुक्तं संस्कृत–पुस्तकानीमानीति तदा तैरोमित्युक्तम्। ते सेनाधिकारिणो गढवालसेना–प्रभागरैजिमैण्टसदस्या आसन्। संस्कृतपुस्तकानीमानीति तेषां कृते तानि समादरभाजनमासन्। पुस्तकानि ट्रकमारोपितानि तदुपरि चोपवेशिताः शरणार्थिनः। सीमाप्रदेशं प्राप्तेषु ट्रकवाहनेषु तत्तद्देशीया अधिकारिणस्तानि वाहनानि परीक्षन्ते स्मैतद्दृष्ट्या यत्तेषु वस्तुजातमस्ति वा न वा। इयमपरा विषमा स्थितिः। सति


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

परीक्षणे पुस्तकानि प्रसेवेषु स्थापितानि कश्चित्पदार्थविशेष इति धिया तैर्वाहनेभ्योऽपाक्रियेरन् नियमोल्लंघनं क्रियत इति। तस्मिन्नेव काले दैववशाद् भारतदिशातोऽपि ट्रकवाहनमेकमापतितम्। तच्च भारतसीमाधिकृतैर्न परीक्षितम्। तन्न परीक्षितमिति समवेक्ष्य पाकिस्थानदिशातो गच्छद् वाहनमपि पाकिस्थान–सीमाधिकारिभिर्न परीक्षितम्। एवं दैववशाद्रक्षितानि पुस्तकानि भारतेऽमृतसरनगरं प्राप्तानि। असम्भवमपि सम्भवि समपद्यतेति प्रादुरभूत् पितृचरणानां मनस्यमन्दा–नन्दसन्दोहः।

अमृतसरनगरात्पुस्तकानां तदानीन्तन्यां स्थितावन्यत्र प्रापणमसम्भवमिति विचिन्त्य पितृचरणैः स्वकीये सुहृदि सुप्रथिते श्रेष्ठिनि बावागुरुमुखदासामिधान आर्यसामाजिके तत्स्थापनमुचितममन्यत। तेनोदारबुद्धिना सद्य एव पितृचरणानां प्रथमः प्रणय इति तदनुरोधः स्वीकृतः। नाना मासान् पुस्तकसङ्ग्रहस्तद्वेश्मस्थ एकस्मिंल्लघीयसि प्रकोष्ठे स्थितोऽभूत्। तदनन्तरं किञ्चिच्छान्त उपप्लवे सोऽहियापुरग्रामं प्रापितः पुनर्निर्मिते स्वकीये गृहे च स्थापितः। पुस्तकप्रसेवैः समं बृहदल्मारिकाऽपि पितृचरणैर्लवपुरादानीताऽऽसीत्। तस्यामेव स पुस्तकसङ्ग्रहः स्थापितोऽभूत्।

## १६

लवपुरीयो डी. ए. वी. महाविद्यालयः १६४८ वर्षे अम्बालाशहरस्थाने पुनः प्रारब्धः। अतस्तत्र पुनः कार्यं पितृचरणैः प्रारब्धव्यमासीदेव। अस्माकं केचन सम्बन्धिनः अम्बालाछावनीस्थान आसन्नेवेति पूर्वमुक्तमेव। तेषां तत्र स्थित्या पितृचरणैरपि अम्बालाछावनी इत्यत्रैव स्वकीय आवासः कल्पितः। तत्रत्य आर्यसमाजमन्दिरे मुख्यद्वारोपरिष्टादेको बृहत्कक्षः सद्यो निर्मितोऽभूत्। आर्यसमाजमन्दिरसंस्थापका डा. मिलखीरामनामानः प्रख्याताश्चिकित्सकवरा अस्मद्ग्रामसमीपस्थग्रामाभिजना एवासन् पितृचरणेषु चासीत्तेषामपरिमितः स्नेहः। तैः स कक्षः पितृचरणेभ्य आवासाय प्रदत्तः। तद्बहिरेव महानसमासीत् यत्र भोजनादि साध्यते स्म। जलं त्वधोभागस्थाद्धस्तयन्त्रात् (हैण्डपम्प) उद्धृत्य उदञ्चनिकाभ्य (बाल्टी) उपरि प्रापणीयमभूत्। एवमावासस्तत्र कष्टकर एवासीत्तथापि शरणार्थिनामस्माकं कृते यदेवोपलब्धमासीत्तेनैव सन्तोषः करणीयोऽभूत्।

अम्बालाशहरमम्बालाछावनीतोऽष्टकिलोमीटरदूर आसीत्। पितृचरणास्तत्र प्रतिदिनं गतागते कुर्वन्ति स्म। प्रातरेव गृहात्पद्भ्यामेव ते गन्त्रीविरामस्थाननिकटस्थं बसविरामस्थानं प्राप्य ततो बसयानेनाम्बालाशहरबसविरामस्थानं प्राप्य ततः



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पद्भ्यामेव वा रिक्शायानेन वा कालेजं गत्वाऽध्यापनादिकं कृत्वा तथैव पद्धत्या प्रत्यागच्छन्ति स्म। ग्रीष्मकालिके ललाटन्तपे तपति तपने, वर्षासु च धारासारैर्वर्षति देवे, शरदि वा हिम्ये पवमाने पवमाने त इत्थमेव गतागते चक्रुः। नाना वर्षाणि तैरेवमेवाचरितं सोढा च महती कष्टपरम्परा। १९५३ वर्षे तैः पञ्चपञ्चाशद्वर्षैः डी. ए. वी. कालेजीया सेवावृत्तिः परिसमापिता। पञ्चपञ्चाशद्वर्षाण्येव तदा सेवानिवृत्तिकालोऽभूत्।

यथा लवपुरीयो डी. ए. वी. कालेजोऽम्बालाशहरे पुनः प्रारब्धः पाकिस्थान–निर्माणानन्तरं तथैव सम्प्रति पाकिस्थानान्तर्गते रावलपिण्डीनगरे यो डी. ए. वी. कालेजोऽभूत्स गान्धीमैमोरियलनेशनलकालेज इति नूत्नेन नाम्नाऽम्बाला–छावनीनगरे प्रारब्धः। अम्बालाशहरस्थाद् डी.ए.वी. कालेजात्प्राप्तावकाशाः पितृचरणा वर्षद्वयं तत्राप्यध्यापनकार्यमकुर्वन्।

भारतदेशे ये डी.ए.वी.कालेजाः सन्ति तेषां व्यवस्थार्थं प्रबन्धसमितिरेकाऽऽर्यसमाजकर्णधारैर्देशविभाजनानन्तरं दिल्ल्यां स्थापिताऽभूत्। तया तत्र (दिल्ल्यां) हंसराजकालेज इति नाम्ना कालेज एकोऽस्थाप्यत। तत्र च लवपुरीये डी. ए. वी. कालेजे कार्यं कुर्वाणेषु प्राध्यापकेषु केचन नियुक्ताः। लवपुरीये डी. ए. वी. कालेजे बङ्गाभिजनः कश्चिन्महेन्द्रकुमारसरकारः पितृचरणाश्चेति द्वावेव संस्कृतप्राध्यापकावास्ताम्। तयोः पितृचरणानां पाण्डित्यं सर्वत्र ख्यातमासीत्। अभिनवपाणिनय एत इति ते संस्कृतज्ञैरतोष्टूय्यन्त। विहाय तान् सामान्यप्राध्यापकः सरकार एवार्यसामाजिकै राजधान्यां दिल्ल्यां स्थापिते नूत्ने कालेजे न्ययुज्यतेति तेषां गुणिनोऽवमाननामेव पिशुनयति। स्वप्रदेशीयतः परप्रदेशीयानामधिके सम्माने पञ्चनदीयानां स्वाभाविकीं प्रवृत्तिं चाभिव्यनक्ति, आर्यसामाजिकः कश्चिदस्ति न वेत्यत्रार्यसामाजिकानामौदासीन्यं च विशदयति। एतत् सर्वं लोकस्यार्यसमाजं प्रति ह्रसिमानमापद्यमानाया अभिरुचेः कारणतां चाविष्करोति। पितृचरणा विद्वन्मूर्धन्या वा भवेयुः शास्त्रपरपारदृश्वान इति वा लोकेनाभिष्टुता वा तेषां स्थानमम्बालाशहर इत्यत्रैवास्त न तु भारतराजधान्यामिति कीदृशोऽयं पूज्यपूजाव्यतिक्रमः।

## १७

मया मैट्रिक्युलेशनपरीक्षा लवपुर एवोत्तीर्णाऽऽसीत्। सम्प्रति इन्टरमीजियेटपरीक्षार्थं मयाऽध्ययनं प्रक्रन्तव्यमासीत्। तदर्थमहम् अम्बालाछावनीस्थाने प्रारब्धे पूर्वनिर्दिष्टे गान्धीमैमोरियलनैशनलकालेजे प्रविष्टोऽभवम्। १९४६ वर्षे मया तत इण्टरमीजियेट



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

परीक्षोत्तीर्णा। तत एव च १९५१ वर्षे बी. ए. परीक्षापि यत्र संस्कृत आनर्स विषये तदानीं यावत्प्राप्तेभ्योऽङ्केभ्योऽप्यधिकान् अङ्कान् प्राप्य नवीनं कीर्तिमानं मया स्थापितम्। तद्धेतोरहं विश्वविद्यालयपदकमलप्सि। १९५१ वर्षेऽहम् एम्. ए. परीक्षाध्ययनार्थं जालन्धरनगरं गतः।

अर्वाचीनपद्धत्यध्ययनसमकालमेव प्राचीनपद्धत्यनुसारेणापि ममाध्ययनं प्रावर्तत। इण्टरमीजियेट, बी. ए. आदि परीक्षाणां प्रथमवर्षे मया वाराणसेयशास्त्र्याचार्यखण्डपरीक्षा अदायिषत। यदा कालेजेषु ग्रीष्मावकाशानध्यायोऽभवत्तदाऽहं वाराणसीमगां तत्र च गुरुचरणेभ्यः न्यायव्याकरणादिशास्त्रपारदृश्वभ्यः श्रीशुकदेवझाशर्मभ्यः शास्त्रमध्यगीषि। १९४७ वर्षेऽपि कञ्चित्कालं शिमलायां भाईजीसन्निधौ यापयित्वाहं वाराणसीं गतस्तत्र च नित्यानन्दवेदविद्यालये लब्धप्रवेशो गुरुचरणान् पण्डितढुण्ढिराजशास्त्रिणो नैयायिकधुरन्धरान् महाविद्यालयप्रधानाध्यापकान् श्रीशुकदेवझाशर्मणश्चोपसन्नः शास्त्रमशीलयम्। आवासमहं स्वकं तदा डी. ए. वी. महाविद्यालयच्छात्रावास एवाकल्पयं यो हि डी. ए. वी. कालेजपरिसर एवासीत्। तत एव मया इण्टरमीजियेटकक्षाध्ययनार्थं प्रवेशोऽपि लब्धोऽध्ययनं च प्रक्रान्तमपि परं स्वल्पेनैव कालेन तदवरुध्याम्बालाछावनीं प्रति गतम्। तत्र तत्प्रारब्धम्। वाराणस्यां ममच्छात्रावाससहचरा आसन् पञ्चनदीयाः श्रीहरिपालशास्त्रिणः कार्णाटाः श्रीसर्वमित्रशास्त्रिणोऽन्ये च बहवः। ते मयि सुतरामस्निह्यन्मत्सौविध्ये च सदैव बद्धादरा अभूवन्।

वाराणसीनिवासकालेऽहं नानागुरुभ्यः शास्त्राण्यशीलयम्। पूर्वाह्णे सन्यासिसंस्कृतमहाविद्यालयं गत्वा पण्डितमहादेवोपाध्यायेभ्यः काव्यशास्त्रमपाठिषम्, अपराह्ण एकवादने पण्डितशुकदेवझाशर्मभ्यस्तद्गृहमुपेत्य व्याकरणशास्त्रं सायञ्चोदासीनमठं प्राप्य स्वामिसुरेश्वराचार्य्येभ्यो वेदान्तमध्यगीषि। एवम् एकस्मिन्नेव दिने मम नाना शास्त्राध्ययनं प्रावृतत्। न केवलं विविधशास्त्राध्ययन एवापितु गमनागमनयोरपि मम भूयानायासोऽभूत्। तथापि क्षणशो विद्यां चिन्तयेदिति सिद्धान्तं परिपालयन् विद्योपार्जनैकदृगहं नायासमन्वभूवम्। प्रसन्नेऽन्तरात्मनि सत्यप्यायासे तद्बोधो मे नाभूत्। यत्किञ्चिदहं सम्प्रति जानामि तत्तस्यायासस्यैव फलम्। गुरुचरणैर्मयि कृपालुभिरुद्घाटितानि शास्त्ररहस्यानि। कया गिरा तानहमभिष्टुयाम्। ते ह्यासन् शेवधयो विद्यानां निधयश्च गुणानाम्। तैरहं शिष्यत्वेन स्वीकृत इति परमं मे भागधेयम्।

अद्याहं चिन्तयामि क्व सन्ति तादृशा गुरवः सम्प्रति? अधिकाधिकं ज्ञानं छात्रवृन्दे सङ्क्रमयितुं बद्धोद्योगास्त आत्मानमपि व्यस्मरन्। भूयांसमनेहसमध्यापयन्तोऽपि ते नाणुमपि खेदमन्वभूवन्, अध्यापनं तेषां प्रकृतिरासीन्न वृत्तिः। शिष्याणां यदि सम्यक् शास्त्रबोधस्तर्हि तेनैव तेषां परा परितुष्टिः।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तदेवासीत्तेषामीप्सिततमम्। सम्प्रति त्वन्यादृश्येव स्थितिः। वयं सर्वेऽपि भृतकाध्यापकाः संवृत्ताः। परिवर्ती खलु कालः। अध्यापनं न वृत्तिर्नवा जीविकोपार्जनसाधनम्, तत्तु स्वैच्छिकं विद्यादानमेव। न तद्वाणिज्यं यत्तद्विनियमेन किञ्चिदन्यदपेक्षितं भवति। सत्यमेवोक्तं पूर्वाचार्यैः – 'यस्यागमः केवलजीविकायै तं ज्ञानपण्यं वणिजं वदन्ती'ति। अहो दुर्भाग्यमस्माकम्। वयं वणिजः संवृत्ताः। विद्या दानेन वर्धते। तत्राप्यस्माकं सङ्कोचः! कथमस्माकं वेतनवृद्धिः स्यात्तत्रैवास्माकं दृष्टिर्नत्वस्मत्तोऽपि योग्या अस्मच्छिष्याः सन्त्वित्यत्र।

इदं मे परमं भागधेयं यद्येभ्यो गुरुभ्यो मया विद्याऽधीताऽध्यापनं तेषां सर्वस्वमेवासीत्। शास्त्राणि तेषां कण्ठगतान्यासन्। अत्रैकमविस्मरणीयं प्रसङ्गमुपस्थापयामि। वाराणसेयाचार्यप्रथमखण्डपरीक्षा सन्निहितैवासीत्। तत्र प्राचीनव्याकरणे काशिकामहाभाष्यादिग्रन्था अध्येतव्या आसन्। गुरुचरणानां श्रीशुकदेवझाशर्मणां तत्रानितरसाधारणं पाण्डित्यमासीत्। यद्यपि तैरहं महाभाष्यं सम्यक् पाठितस्तथापि यत्र तत्र तदंशो न मया सम्यगवाबुध्यत। परीक्षायां सन्निहितायां तानहमुपसन्नः। तैः पृष्टं विषयस्ते सर्वोऽवदातो वा न वा। मयोक्तं सर्वं स्पष्टमेव केवलमेको गोत्र इति सूत्रकृतं महाभाष्यव्याख्यानं न मे बुद्धिमुपारूढम्। तैरुक्तं शृणु तावत्। तदनन्तरं ते तद्व्याख्यातुमारभन्त। होराद्वयं निरन्तरं तेषां प्रवचनं प्रावर्तत। अहं तु मन्त्रमुग्धवत्तानश्रौषम्। पर्यवसितवक्तव्यास्ते मामवदन् सम्प्रति वाचय महाभाष्यग्रन्थम्। तदाहमन्वभूवं सर्वोऽपि ग्रन्थो मया श्रुत एव। किं तेन वाचितेन। सर्वोऽपि महाभाष्यग्रन्थो येषां जिह्वाग्रे तिष्ठति, किं तेषां पाण्डित्यमियत्तया परिच्छेतुमलम्? एतादृशानेव पण्डितानुपलक्ष्य परिभाषेन्दुशेखराङ्गलभाषानुवादकेन शर्मण्यदेशाभिजनेन कील्हार्नमहाभागेनोक्तं यत्ते 'जङ्गमा ग्रन्थालयाः' (मूविंग लाइब्रेरीज़) इति। हन्त! कीर्तिशेषतां गताः सम्प्रति तादृशा ग्रन्थालयाः। मया तु नाना वर्षाणि तेषां सान्निध्यसुखमुपलब्धमिति धन्यमात्मानं कलयामि।

अनपत्या गुरुचरणाः पण्डितशुकदेवझाशर्माणो मामेव स्वमपत्यमकलयन्। मयि च सुतरामस्निह्यन्। अद्य तान् स्मारं स्मारं कामपि वैयाकुलीमनुभवामि। तैश्छात्रोपयोगाय प्रश्नोत्तररूपेण वैयाकरणभूषणसारव्याख्या "वैयाकरण-भूषणसारप्रकाश" इति नाम्ना विरचिता। यदाऽहं छात्र एवासं तदा तस्य भूमिकां विरचयेति ते मामादिशन्। तद्विचित्रं प्रत्यभान्मामपि, तेषां कांश्चन सहकर्मिणोऽपि च, ये तान् प्रत्यगदन् यद्विहाय प्रथिततरान् विदुषः किमिति बालमिमं भूमिकार्थं भवन्तो नियोजयन्तीति। मया सम्यग्विचार्यैव तथा निर्णीतमिति ते तानब्रुवन्। किं मयि ते तथाऽपश्यन्यत्ते मां भूमिकाविरचनार्थमादिशन्निति स्पष्टं नोक्तं तैः कस्मैचनापि। कदाचित्तैर्दिव्यदृष्ट्या दृष्टं स्याद्यत्कालेनाहं तादृशीं प्रतिष्ठां प्राप्स्यामि


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

यदनेके विद्वांसः स्वग्रन्थानां भूमिकार्थं मामुपसत्स्यन्ति। अद्यावधि मया सपादैकशततमानां ग्रन्थानां नानाविषयकाणां भूमिका विरचिता यासु काश्चनातिदीर्घा अपि। ताः स्वतन्त्रप्रबन्धरूपा एव। अनेके पुस्तकप्रकाशका मां प्रेरयन्ति पुस्तकरूपेणैकत्र ताः सङ्कलनीया इति।[१२] एवमेव यत्र तत्र पत्रिकासु प्रकाशिताः परःशता मे गवेषणापराः निबन्धा अपि ग्रन्थरूपेणैकत्र प्रकाशनीया इत्यभिलाषः प्रकटितः पुस्तकप्रकाशकैः। तदपि ममाभीष्टम्। तत्राप्यात्मानं व्यापारितवानहम्।[१३] पाश्चात्यदेशेषु नाना विदुषामेवंविधा निबन्धसङ्ग्रहाः प्राकाश्यं गता नेत्रद्वयासेचनकतां यान्ति।

## १८

गान्धीमैमोरियलनैशनलकालेजादम्बालास्थादुत्तीर्ण बी. ए. आनर्सपरीक्षोऽहं संस्कृतविषये एम्. ए. उपाधिं लब्धुमभ्यलष्यम्। एम्. ए. कक्षाध्ययनं च जालन्धर एव भवति स्म। लवपुरीयः प्राच्यमहाविद्यालयोऽस्थायिरूपेण तत्रैव प्रारब्धः। मयाऽपि तत्रैव प्रवेष्टव्यमासीत्। तदर्थमहं जालन्धरं गतस्तत्रत्य डी. ए. वी. कालेजच्छात्रावासे कल्पितो मयाऽऽवासः। डा. सूर्यकान्तमहाभागास्तदानीमध्यक्षपदमलमकुर्वन्। अन्येषु विश्वविद्यालयनियुक्तेषु प्राध्यापकेष्वासन्नभिलेखशास्त्रे कृतभूरिपरिश्रमाः श्रीजगन्नाथाग्रवालाः। केचन जालन्धरीयेषु कालेजेषु कार्यं कुर्वाणा अध्यापका एम्. ए. कक्षामपि विश्वविद्यालयसञ्चालितामध्यापिपन्। मम एम्. ए. अध्ययनकाल एव डा. सूर्यकान्तमहाभागाः काशीहिन्दूविश्वविद्यालय आचार्य (प्रोफेसर) पदे नियुक्ताः। तदा श्रीजगन्नाथाग्रवाला अध्यक्षपदमारूढाः।

मदीया एम्. ए. कक्षासतीर्थ्या आसन्धर्मसिंह ढिल्लों यः कालान्तरे हरियाणाराज्ये संयुक्तशिक्षानिदेशकपदमभूषयत्, श्रीरणजित्सिंहो यो रोहितकस्थराजकीयमहाविद्यालये प्राचार्यपदं समलमकरोत्, द्वे च कन्ये, कुमारी विमला, कु. शान्तिश्च। धर्मसिंहो रणजित्सिंहश्च तस्मिन्नेवच्छात्रावास आस्तां यत्राहम्। तयोः सङ्गत्या सुखेन कश्चित्कालो मया व्यतियापितः। उभावपि हरियाणभिजनौ सुपुष्टाङ्गौ परिहासप्रियौ चास्ताम्। ग्राम्यजनौ ताविति 'स्वल्पव्ययेनैव मिष्टमाश्नीताम्।' घृतसेवनं तयोः प्रियमासीत्। शरत्काले घनीभूते घृते सितां सम्मिश्र्य तच्च पिण्डीकृत्य तावास्वादयेताम्। कदाचिन्मह्यमपि

१२ कालेन ताः सङ्कलय्य प्रकाशयितुं मे सङ्कल्पः।

१३ ते सर्वे सप्तखण्डात्मके Discovery of Sanskrit Treasures इति शीर्षके ग्रन्थे प्रकाशिताः।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

काश्चिद्घृतपिण्डीस्तावदत्ताम् यत्स्वादमद्यापि स्मरामि। अद्यत्वे जना हृद्रोगाद् भीता घृतं परिहरन्ति क्लोस्टरोलइत्याख्यं तत्त्वं तद्वर्धयतीति चिकित्सकै-रुद्वेज्यमानाः। प्राचां त्वत्रविषयेऽन्यथैव दर्शनम्। आयुर्वै घृतमिति तेऽभ्युपागच्छन्।

छात्रावासेऽहं कञ्चित्कालमेव स्थितः। पितृचरणानां कार्यमम्बालायां परिसमाप्तमिति तेऽपि जालन्धरमुपपन्नाः। तत्र भाटकेनावक्रीतं तैः परिचितस्यैकस्य गृहम्। ग्रामस्थाद् गृहात् पुस्तकान्यपि तैस्तत्रानीतानि, बृहती मञ्जूषिका (अल्मारी) च तत्स्थापनार्थम्। मम स्वसृपादा जालन्धरशाखानगरे 'बस्तीशेख' इत्यत्रासन्निति छात्रावासावासकाले ततः परस्ताच्च तैः साक्षात्कारावसरो भूयस्तरामलभ्यत तच्चोभयोरप्यावयोर्भ्रातृभगिन्योः कृते पराय परितोषायाभूत्।

एम्. ए. उपाधिं प्राप्य पी.एच्. डी. उपाधिर्मया प्राप्य इत्यभिलाषः समुदैन्मम मनसि। पञ्जाबविश्वविद्यालयस्य स्थितिस्तदानीमपि सुस्थिरा नासीदिति तत्र तदर्थं सौविध्यमनवलोक्य स्थानान्तरे गमनं ममावश्यकमभूत्। किं तत्स्थानान्तरं स्यादिति विचार्यमाणे पितृचरणानां मम च मनसि विचारोऽयं समुदितो यद् डा. सूर्यकान्तमहोदया यतः सम्प्रति वाराणसीमुपेतास्ते चास्माकं सुपरिचिता इति मया तत्रैव गन्तव्यं काशीहिन्दूविश्वविद्यालये च प्रवेशो लब्धव्य इति। तद्विचारानुसारेणाहं वाराणसीं प्रास्थिषि हिन्दूविश्वविद्यालये प्रवेशं चालप्सि। प्रतिमासं शतरूप्यकमिता छात्रवृत्तिरपि मयाऽधिगता। कस्मिन्विषये मया गवेषणाकार्यं प्रवर्तनीयमित्यासीन्मम संमुखे तदा प्रश्नः। डा. सूर्यकान्तमहाभागानहमेकस्मिन्दिन उपासीदमेतस्मिन् विषये च चर्चां प्रावर्तयम्। तैरुक्तं पुस्तकालयं गच्छ, यावतीः शोधपत्रिकास्तत्र पश्येस्तावतीनां विगतवर्षीयेष्वङ्केषु लेखसूचीं वाचय। एवं कुर्वाणस्य तव शोधविषयः स्वयमेव स्फुरितो भविष्यति। यद्यपि निर्देशोऽयं मे न भूयोऽभ्यरोचत तथापि तत्र प्रक्रान्तं मया। नैके दिवसा एवं व्यापृतस्य मम। न च कस्मिंश्चिदपि विषये स्थिरा मम मतिरभूत्। यस्मिन्वर्षे मया प्रवेशो लब्धः काशीहिन्दूविश्वविद्यालये तस्मिन्नेव वर्षे रसिकविहारीजोशीनाम्नैकेन जनेनापि। तेन च शोधकार्यार्थं 'संस्कृतवाङ्मये कृष्ण कल्ट' इति विषयो गृहीतोऽभूत्। तदनुकृत्या मयाऽपि कमपि कल्टम् अधिकृत्यैव शोधकार्यं प्रवर्तनीयमिति विचिन्त्य 'संस्कृतवाङ्मये स्कन्द कल्ट' इति विषयः शोधार्थं प्रस्तुतः, स च स्वीकृतोऽ-प्यधिकृतैः। परं हासप्रहासबुद्ध्यैव गृहीतोऽयं विषयो न मह्यं बह्वरोचत। अतस्स परिवर्तनीय इति प्रार्थिता मयाऽधिकृताः। वाक्यपदीयसम्बद्धः कोऽपि विषयो यदि भवेत्तर्हि शोभनं स्यादित्यहमचिन्तयम्। किञ्च, तस्य शीर्षकं किं स्यादिति परामष्टुमहं विद्वत्तल्लजान् महामहोपाध्यायगोपीनाथकविराजमहाभागानुपागां तैश्च किञ्चिद्विचिन्त्योक्तं 'स्टडीज़ इन दि वाक्यपदीय' इति शीर्षकमुपयुक्तं स्यात्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अतस्तस्य विशिष्टं पक्षमाश्रित्यैव मया प्रवर्तनीया गवेषणा। दिक्समुद्देशविषये कालसमुद्देशविषये च तदानीं यावन्न केनापि गवेषणा प्रवर्तिताऽऽसीत्। मयाऽत्र प्रवर्तितव्यमिति मयाऽचिन्ति। भर्तृहरिदृष्ट्या दिक्कालमीमांसा 'टाइम एण्ड स्पेस एकार्डिंग टू भर्तृहरि' इति विषयो मया शोधार्थं प्रस्तुतः स्वीकृतश्च विश्वविद्यालयानुसन्धानसमित्या। इममेव विषयमधिकृत्य पीएच्. डी. इत्यर्थं मम गवेषणाकार्यं प्रावर्तत। जुलैमासे १९५३ वर्षेऽहं काशीहिन्दूविश्वविद्यालये प्रविष्टः। सिताम्बरे मासि तस्य वर्षस्य मम विषयः स्वीकृतिमलभत। अक्तूबरमासि दुर्गापूजावकाशवशादहमम्बालां प्राप्तः। तत्र च मासं स्थित्वा पुनर्वाराणसीं गतः। तत्पश्चादेव मम गवेषणाकार्यं प्रारभत।

गवेषणाकार्यार्थं मया वाक्यपदीयमध्येतव्यमासीत्। तद्रहस्यविदस्तदाऽऽसन् विद्वत्कुलावतंसाः पण्डितश्रीरघुनाथशर्माणः। वाराणस्यां कबीरचौरास्थाने तेषामावास आसीत्। तत् तेऽध्यापयन्त्विति प्रार्थयितुमेकस्मिन्सायाह्नेऽहं तानुपसन्नः। अवश्यमेवाध्यापयिष्यामि त्वामिति ते प्रत्याययन्। अहं तदा काशीहिन्दूविश्वविद्यालयस्य 'डे'छात्रावासे न्यवसम्। छात्रावासतः कबीरचौरास्थानं मन्ये पञ्चदशकिलोमीटरदूरे भवेत्। गतागतार्थं द्विचक्रयानमेव मयोपायुज्यत यन्मयाम्बालानगरे इण्टरमीजियेटकक्षायां सम्प्राप्ताद् राजकीयच्छात्रवृत्तिराशेः सञ्चित्य सञ्चित्य क्रीतमासीत्। गुरुचरणैः पण्डितरघुनाथशर्मभिरुक्तमपरेद्युरपराह्णे चतुर्वादने त्वमायाहीति। अहं तद्वचनानुसारेण चतुर्वादने तदावासं प्राप्तः। ते तदानीं निद्रामग्ना आसन्। अहं तन्निद्राभङ्गं प्रत्यैक्षिषि। सार्धपञ्चवादने जाते निद्राभङ्गे ते समुत्थिताः। प्रतीक्षमाणं मामवलोक्य तेऽवोचन् – अहो त्वमागतोऽसि। अद्य तु भूयान् विलम्बो जातः। स्वयम्पाकिना मया भोजनादिकमपि साधनीयम्। त्वं श्वश्चतुर्वादन आगच्छ। तच्छ्रुत्वोमिति[१४] चोक्त्वा सामान्यभावेनैवाहं ततः परापतम्। अन्येद्युर्यावदहं तदावासमुपसीदामि तदा मध्येपथं तान् कुत्रापि प्रस्थितान्निभालयामि। मां दृष्ट्वा त आहुः — ओह, त्वमुपेतोऽसि। किं करणीयम्। अद्य श्रीसत्यनारायणकथां कथयितुं निमन्त्रितोऽस्मि। तदर्थं त्वरमाणोऽस्मि। त्वं परेद्यवि चतुर्वादन आयाहीति। ओमित्युक्त्वा निर्विकारभावेन ततोऽहमपेतः। परेद्युश्च पुनर्यथाकालमुपेतस्तान् भोजनं साधयितुमुद्यतानपश्यम्। मां दृष्ट्वा तेऽवोचन् कुत्राप्यहं गतस्ततः प्रत्यागमने विलम्बो जातः। इदानीं यावन्मया भुक्तमपि न। अद्य पाठो न सम्भवी। त्वं श्व आगच्छेति। अहं तथाऽस्त्वित्युक्त्वा ततः परागतः। परेद्यवि च चतुर्वादने पुनरुपेतः। ते मां प्रतीक्षमाणा आसन्। एहि। वाचय ग्रन्थम्

---

१४ ओमाङोश्च (६.१.९५) इत्यनेन पररूपम्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

इति तैरहमुक्तः। पाठः प्रारब्धः। पञ्चवादनवेला गता। षड्वादनवेलाऽप्यतीता। सप्तवादनमितः कालो जातः। पाठोऽनवरतं प्रावृतत्। क्षणमपि विरामो न। अन्धकारो जातः। लालटैनदीपः प्रज्वलितः। तत्प्रकाशेऽध्ययनं प्रवृत्तम्। होरात्रयमतीतमासीद् वाक्यपदीयसदृशं ग्रन्थमधीयानस्य मे। गुरुचरणास्त्वध्यापने तथा मग्ना यथा ते नैव किञ्चिदन्यदवाबुध्यन्त। ग्रन्थग्रन्थिभेदने रतानां तेषां कियान् कालो यात इत्याभास एव नाभूत्। सुतरां श्रान्तिमनुभवता मया तदोक्तं भूयान् कालो व्यतीतोऽध्यापयतां भवतां, मन्ये श्रान्ताः स्युर्भवन्तः। तन्मिषेण मया स्वकीयः श्रान्तिबोधस्तेभ्यः प्रतिपिपादयिषितः। तैरुक्तं नाहं श्रान्तः। एतदुक्त्वा ते पुनर्विषयोद्भेदन आत्मानं व्यापीपरन्। तदनु क्षणं ते विरताः। तैश्चिन्तितं ननु सुकुमारबुद्धिरयं बालः। जटिलं ग्रन्थं शृण्वतोऽस्य भवेदेवायासः। तर्हि विराम एव साधुः। इत्येतच्चिन्तयित्वैव मन्ये तैरुक्तमद्यैतदेव पर्याप्तम्। शेषं श्वः प्रक्रंस्यावह इति। तद्दिनानन्तरं नैवाध्ययने कदाचिद् व्यवधानमभूत्। यथैवाहं तानुपासीदंस्तथैव ते मामध्यापयितुं सज्जा अभवन्। एवं चिन्तयामि मम स्वशिष्यत्वेनांगीकरणात्पूर्वमहं तैः सुपरीक्षितः। अस्ति मयि यथार्थतो विद्योपार्जनलालसा न वेति, पात्रमहं विद्याया न वेति वा। नाना दिनानि येन केन मिषेण पराकृतोऽपि यदा न कञ्चिदुद्वेगं वा क्षोभं वाऽहं प्रादर्शयं नियतं च यथाकालं तानुपातिष्ठं तेनानुमितं तैर्यदहं हृदयेन ज्ञानेनार्थी। तदनुमित्य सर्वात्मना मयि ज्ञानं ते सङ्क्रमयितुमुद-युञ्जत। एवं गुरवः परीक्ष्यैव ब्रह्मचारिणोऽध्यापिपन्। 'पात्रप्रतिगता विद्या पात्रप्रतिगतं धनमि'ति प्राचीनोक्तिः। पात्रप्रतिगतैव विद्या फलति। अद्यतना भृतकाध्यापका छात्राणां पात्रत्वापात्रत्वनिर्णये प्रभविष्णवः किम्? छात्रेषु रुचिरध्ययने भवेद्वा न वा, विषयावबोधे ते क्षमाः स्युर्न वा कुशाग्रबुद्धयो वा ते स्युर्मृत्पिण्डबुद्धयो वाऽस्माभिस्तु तेऽध्यापनीया एव, ते विद्याशुल्कं (फ़ीस) प्रददत इति। कुतस्तत्र पात्रत्वापात्रत्वविचारः?

## १६

'डे' छात्रावासप्रवेशात्प्रागहं कञ्चित्कालं 'बिरला'छात्रावासमप्यध्यवसम्। तदनु 'भगवानदास'छात्रावासेऽपि स्थितिमकलयम्। शोधच्छात्राः प्रायस्तत्र वा 'डे'छात्रावासे वाऽस्थाप्यन्त। बिरलाछात्रावासस्यध्यक्षा (वार्डन) तदानीन्तना दर्शनविभागाध्यक्षा डा. भीखनलालात्रेयमहाभागा आसन् यैर्योगवासिष्ठस्य दर्शनम् (दि फ़िलासोफ़ी आफ़ दि योगवासिष्ठ) इतिशीर्षकशोधप्रबन्धं विरच्य डी. लिट्. इत्युपाधिः प्राप्त



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

आसीत्। अहं द्विर्वा त्रिर्वा तानुपास्थिषि परमात्मीयताबोधो मे नाभूत्। मनाग् गर्विता एव ते मां प्रत्यभासुः। आत्मीयताबोधस्तु मे 'डे'छात्रावासाध्यक्षाणां विधिशास्त्रपारङ्गतानां डा. देशपाण्डेमहाभागानां सम्पर्के समजनि। ते सुतरां संस्कृतानुरागिण आसन्। प्रतिसायं ते कंचित्संस्कृतग्रन्थं कक्षे कृत्वाऽध्ययनार्थं साङ्गवेदविद्यालयमगमन्। अहङ्कारस्य गन्धोऽपि तेषु नासीत्। बहुकालं यावन्मया सह ते शास्त्रचर्चामकार्षुः। कालेनाहं तेषां परं स्नेहभाजनतामुपागमम्।

एकदा १९५५ वर्षे जनवरीमासे मध्यरात्रे कश्चिज्जनः छात्रावासे मामुपेतः। गुरुचरणाः पण्डितरघुनाथशर्माणो मां द्रष्टुमिच्छन्तीति तेनोक्तम्। अहं तत्क्षणमेव विमुच्य शय्यां देशपाण्डेमहाभागावासं छात्रावासप्रथमभूमिस्थितं गतः। सर्वेऽपि तत्रत्या सुप्ता आसन्। किं मया तस्मिन्नवसरे कर्तव्यमिति निश्चेतुं नाहमपपारम्। विश्वविद्यालयनियमानुसारेण यदि केनापिच्छात्रेण विश्वविद्यालयपरिसराद् बहिर्गन्तव्यमभूत्तर्हि छात्रावासाध्यक्षादनुमतिपत्रं (परमिट) तेन प्राप्तव्यमासीत्। तद्दर्शनेनैव बहिर्द्वारमुद्घाट्यते स्म। मध्यरात्रे द्वादशवादने को नाम जागरितो भवेत्। सुप्तान् गुरुकल्पान् प्रवयसो देशपाण्डेमहाभागान् कथमहं जागरयेयम्? यदि न जागरयेयं कथमनुमतिपत्रं प्राप्नुयाम्। अकाले निद्राभङ्गेन ते मह्यं कुप्येयुः, कुपितेषु च तेषु का वा मे गतिर्भवेत्। एकतो ममैतादृशं चिन्तनमपरतश्चाज्ञा गुरूणां ह्यविचारणीयेति गुरुपादोपसर्णत्वरा, गुरूणां केनापि कार्येण भवितव्यं येन गुरुभिर्मध्यरात्रे स्मृतोऽस्मि सन्देशं च वाहितोऽस्मि केनापि। एवं स्थिते सन्देहपदेऽन्तःकरणप्रवृत्तिमेव प्रमाणयता मया परिणाममकिञ्चित्कृत्वा देशपाण्डेमहोदयावासकपाटमाहतम्। कश्चित्कपाटमाहन्तीति श्रुत्वा तद्धर्मपत्नी समागता द्वारं चानावृतकपाटं कृतवती। मां दृष्ट्वा विस्मयोत्फुल्ललोचनाऽवादीत् किमित्यस्मिन्नसमये? —— तदनन्तरं नेत्रे प्रमृजन्तो देशपाण्डेमहाभागा अपि प्राप्तास्तान् दृष्ट्वा तानविनयार्थं क्षमां[१५] भिक्षमाणोऽहं गुरुचरणप्रेषितं जनमिङ्गितेन निर्दिशन्नवोचम् प्रेषितोऽयं जनो गुरुचरणैस्ते मामकालक्षेपं द्रष्टुमिच्छन्तीति। तच्छ्रुत्वाऽतीव सौम्यभावं मयि बिभ्रद्भिर्देशपाण्डेमहाभागैरुक्तं यदि गुरुचरणैः स्मृतोऽसि तर्हि गन्तव्यमेव। कस्यां होरायां ते प्रत्यावर्तनं सम्भवि? त्रिवादने वा चतुर्वादने वेति प्रत्युक्तं मया। अतिदूरे हि तेषामावासः। अस्तु तावत्सम्पूर्णां रात्रिमेव त्वं बहिः स्थातुमर्ह इति पत्रमारोपयामि। इत्युक्त्वा पत्रे स्वहस्तस्तैर्दत्तः पत्रं च मह्यं प्रदत्तमुक्तञ्च बहिस्तीव्रं शीतमस्ति। सम्यक् संवृताङ्गो याहि। मा ते शीतबाधा भूत्। अहं तदावासात्प्रतिगत्याचिचिन्तमहो औदार्यम् ! अहो वात्सल्यम्!

---

१५ अकथितं च (२.४.५१) इत्यनेन द्विकर्मकतायां द्वितीया।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

प्राप्तेऽनुमतिपत्रे गुरुचरणप्रेषितेन जनेन सत्राहं गुरुसदनं प्रति प्रास्थिषि। उभयोरप्यावयोर्वाहनं द्विचक्रयानमेवाभूत्। घने निशीथे हिम्ये वाति वाते महच्छैत्यमावामन्वभूताम्। मयि केवलं कार्पासं प्रावारकमेवाभूत् तेन च यथाकथञ्चिदात्मानमवृणवम्। कटकटायमानदन्तः पिण्डीभूतसर्वावयवः शीतेन कम्पमानोऽहं यामिन्यास्तृतीये प्रहरे गुरुगृहमुपेतः। ते शय्यायामर्धनिद्रिता आसन्। प्रणामं निवेदितवति मयि नेत्रे उन्मील्य ते प्राहुः – समागतस्त्वम्। अहं परेद्यवि प्रातरेव ग्रामं गमिष्यामि। तत्र किञ्चित्कार्यं ममास्ति। एतत्सूचनार्थमेव त्वमाकारितोऽसि। अहं तच्चरणसंवाहनतत्परोऽभवम्। किञ्चित्कालानन्तरं ते निद्रावशं गताः। ताञ् शयानानालोक्याहं ततः परागतः पुनरप्यरुन्तुदं शीतं सोढ्वा छात्रावासं प्राप्तः। किं नाम तदात्ययिकं कार्यं गुरुचरणानामासीद्यदर्थमहं तैर्मध्यरात्रे समाहूत इति बहु चिन्तयतोऽपि न मे किञ्चिदप्याभात्। तद्रहस्यं कतिपयमासानन्तरमुद्भिन्नम्।

## २०

१९५५ वर्षे मार्चमासस्यैकत्रिंशे दिवसे मया स्वकीयः शोधप्रबन्धः परीक्षार्थं प्रस्तुतः। वर्षस्य द्विरेव तदा शोधप्रबन्धः प्रस्तोतुं शक्य आसीत्, मार्चमासस्यान्तिमे सप्ताहे सिताम्बरस्य मासस्यान्तिमे सप्ताहे वा। अतीते मार्चमासि अप्रैलादिमासेषु शोधप्रबन्धनिबन्धने पर्यवसितेऽपि सिताम्बरं मासं यावत्प्रतीक्षणीयमासीद्विद्यार्थिना। एतत्प्रतिबन्धवशान्मया शोधप्रबन्धपरिसमापने भूयः प्रयत्तं विशेषतोऽन्त्येषु दिवसेषु। रात्रावष्टवादने भुक्त्वा किञ्चिद् विहृत्य दशवादनमेकादशवादनं वा यावदहमध्ययन आत्मानं व्यापीपरम्। एवमासीन्मम तदानीन्तनी दिनचर्या। एकदा मार्चमासोत्त–रार्धेऽध्ययने व्यापृतोऽहमभवं रात्रौ। कियान् कालो व्यतीत इति मम नासीद् बोधः। अध्ययनव्यापृतेनैव मया दन्तधावनशब्दः श्रुतः। केचिच्छात्रास्तथाऽलसा आसन्यथा स्नानागारमगत्वैव स्वागारस्य पुरस्ताच्छन्नपथे (कोरिडोर) स्थित्वा दन्तधावनादिकं कुर्वन्ति स्म। श्रुते दन्तधावनशब्दे कोऽयं यो मध्यरात्रेऽपि दन्तान् धावतीति कुतूहलवशाद्यदाऽहं द्वारमनावृतकपाटं करोमि तदा पश्यामि प्रभातप्राया शर्वरीति। तदा मया चिन्तितं कथं व्यत्येति कालः। अध्ययने तथाऽहं न्यमाङ्क्षं यथा रात्रिरेव व्यरंसीत्।

एवं मया श्रान्तं शोधप्रबन्धप्रणयने। अध्यर्धवर्षेणैव मया परिसमापितः सः। अल्पीयांस एव तादृशाश्शोधच्छात्राः स्युर्यैरेतावताऽल्पीयसाऽनेहसा शोधप्रबन्धः



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

परिसमापितः स्यात्। डा० सूर्यकान्तमहाभागा मम शोधनिर्देशका आसन्। तैस्तु दृङ्मात्रेणापि न सम्भावितो मम प्रबन्धः। किमहमधीये, किं वा निबन्धे तद्विषये किमपि ते नाजानन्। अहं गुरुजनसाहाय्येन यथामति शोधप्रबन्धं व्यरीरचम्। न केवलमिदमेव। शोधप्रबन्धप्रस्तुतिकाले डा. सूर्यकान्ता वाराणस्यां नासन्। नियमानुसारेण निर्देशकत्वेन विभागाध्यक्षत्वेन च प्रबन्धे तैर्हस्तो देय आसीत्। तदनुपस्थितौ भारतीयमहाविद्यालय (कालेज आफ इण्डोलोजी तदानीं संस्कृत–पालि–कला–पुरातत्त्व–भारतीय धर्मदर्शनपुरातनेतिहासविषयाध्यापनं तन्नामके महाविद्यालये प्रावृतत्) प्राचार्यैर्डा. राजबलीपाण्डेयमहाभागैस्तत्र स्वहस्तो दत्तो येन तं परीक्षार्थं प्रस्तोतुमहमशकम्।

प्रबन्धप्रस्तुतेः कतिपयदिनानन्तरं डा. सूर्यकान्ताः प्रवासात्प्रतिनिवृत्ताः। तदाहं तानुपासीषदमसुसूचं च यत्प्रस्तुतो मया शोधप्रबन्ध इति। शोभनमिति तैरुक्तम्। अद्यैव सायाह्ने मां तं प्रापय येन परेद्युः प्रभाते तं पश्येयम्। तदाधारेणैव परीक्षकाणां नामान्यपि निर्धारणीयानि। इतः पूर्वं रसिकविहारिजोशीत्यनेनाऽपि शोधप्रबन्धः प्रस्तुतः। स च स्वपरीक्षकनामनी अजानात्। एकस्तयोः सातकडिमुखोपाध्यायोऽपरश्च नरेन्द्रनाथचतुर्धुरीणः। मया चिन्तितं यथा जोशीत्यस्मिन् नामनी प्रकटिते सूर्यकान्तैस्तथा कदाचिन्मय्यपि कुर्युः।

डा. सूर्यकान्तनिर्देशानुसारेण तस्मिन्नेव दिने सायाह्ने शोधप्रबन्धपुस्तकमादायाहं तद्गृहानुपेतः। ते तदानीं तत्रानुपस्थिता इति स मया तत्स्नुषाहस्ते दत्तो डा. सूर्यकान्तेभ्यः स समर्पणीय इत्यनुरोधपूर्वकं तैस्तथाऽहमादिष्ट इति। अपरेद्युर्यदाऽहं डा० सूर्यकान्तगृहमुपेतस्तदा ते मया पृष्टाः शोधप्रबन्धपुस्तकं तैः प्राप्तं न वेति। तैरुक्तं प्राप्तमिति। अवलोकितं वेति मया पुनः पृष्टम्। आमिति त आहुः। मया चिन्तितं स्वयमेव कदाचित्ते ततः परं किञ्चित्कथयेयुः। परं तेर्मौनमेवावालम्बि। कञ्चित्कालं तेषु स्थित्वाऽहमशान्तेन मनसा प्रत्यागमम्। इदं चाभून्मे मनसि जोश्यै तु तैः सर्वं प्रतिपादितम्। मयि पुनरेवंविधा वाचंयमता। केयं विडम्बना? लवपुरावासात्प्रभृति पितृचरणानां तैः परिचयः। नैकदा प्रातर्भ्रमणेऽपि तौ सङ्गतौ। तर्हि केयं मय्युपेक्षा? किं शिष्ययोरपि गुरुजना अन्तरं कुर्वन्ति। सत्यं जोशिवन्नाहं सम्पन्नः। न मया दरिद्रेणोपहारादिना गुरवस्तोषितास्तथापि प्रकृत्या नम्रोऽहं तदादेशमक्षरशोऽन्वपालयम् इति नानातर्कवितर्काकुलस्य मे दिनमत्यगात्। न मे साहसमासीत् प्रष्टुं के मम परीक्षका इति। तदानीन्तनाश्छात्रा गुरुभ्योऽतितरामबिभयन्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

मासद्वयेनैव जोश्या वाक्परीक्षा सम्पन्ना (परीक्षार्थं चागता दिल्लीतो डा. नरेन्द्रनाथचौधुरीमहाभागाः)। काशीवासे ते सुतरां परिचरिता जोश्या, तीर्थाटनं कारिताः, देवायतनानि दर्शिताः, घट्टादिषु नीताः। मुक्तहस्तेन तेन तेषु व्ययितम्। वाक्परीक्षा सम्पन्ना। जोशी उपाधिमर्ह इति विश्वविद्यालयेनोद्घोषितम्। अहं पुनर्वराकः प्रतीक्षारत एव। अप्रैलमासो व्यतीतो, मईमासोऽपि गतः। एकैकशो मासा व्यतियाताः। दिशाम्बरो मासः प्राप्तः। मम वाक्परीक्षाविषये न मया कुतोऽपि किञ्चिदपि वृत्तमुपालाभि। अस्तु 'यद्भावि तद्भावी'त्येव मनसिकृत्याहं तूष्णीं स्थितः। एवंस्थितिके मय्येकस्मिन् दिने दिशाम्बरमासोत्तरार्धेऽम्बालास्थेन मया सायाह्ने दूरलेख आसादितो यत्र सूचनाऽऽसीद्यदपरेद्युरेव मे वाक्परीक्षेति। दूरलेखमिम– मासाद्याकालक्षेपमहं गन्त्रीविरामस्थानं गत्वा दिल्लीमेल इति यानेन वाराणसीं प्रति प्रास्थिषि। तन्नगरीं प्रति गमनाय तदेवान्तिमं यानमासीत् येन परेद्यवि वाराणसीं प्राप्तुं शक्यते स्म। तदानीमारक्षणादिसमस्या नासीत्। विनैव तज्जना गतागते कुर्वन्ति स्म। वाराणसीमुपेतः परीक्षानियन्त्रककार्यालयं गत्वाऽहं वाक्परीक्षापत्रमध्यगच्छं यत्र लिखितमासीद्यन्मया द्विवादनेऽपराह्णे कुलपतिकार्यालये समुपस्थातव्यमिति। कुतः कुलपतिकार्यालय इति जिज्ञासा मे जागरिता। तां शमयितुमहं डा० सूर्यकान्तमहाभागानुपेतः। मम निर्देशका विभागाध्यक्षा इति चान्यथापि मे ते द्रष्टव्या आसन्नेव। तैरुक्तं यन्मम परीक्षकेष्वेके स्वयं कुलपतय एव। ते हि दार्शनिकधुरन्धराः सी. पी. रामस्वामीअय्यर महाभागाः। स्वयं कुलपतिभिरहं परीक्षणीय इति श्रुत्वैव महद् भयं मामाविशत्। ते कठोरप्रकृतय इति प्रकाशम्। तेषामायतोच्छूननेत्रे एव भाययितुमलम्। धाराप्रवाहेणाङ्ग्लभाषया भाषमाणास्ते सर्वान् व्यस्मापयन्। कुलपतिरिति नामैव तदा छात्राणां मनसि कमप्युद्वेगमजीजनत्। तत्रापि रामस्वामीअय्यरसदृशा नानाशास्त्रधुरन्धराः कुलपतयः। किं मय्येवं व्यवहृतं डा. सूर्यकान्तैः। जोश्या नरेन्द्रनाथचौधुरीसदृशाः परीक्षका मम पुनः स्वकीयस्य विश्वविद्यालयस्य कुलपतय एव। यद् भावि तद् भवत्वित्यात्मानं दृढीकृत्याहं यथाकालं कुलपतिकार्यालयमुपेतः। प्रारब्धा वाक्परीक्षा। सर्वेऽपि प्रश्ना आङ्ग्लभाषयैव।

प्रश्नोत्तरी एवं प्रकारेण प्रवृत्ता –

कुलपतयः – त्वया 'थीसिस्' विरचितोऽस्ति। कथय 'थीसिस्' इति शब्दस्य कः पदार्थः (यू हैव रिटन ए थीसिस, टैल मी ह्वट इज़ दि लिटरल मीनिंग आफ् दि वर्ड थीसिस) इति



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अहम्– थीसिस् इति ग्रीकभाषायाः शब्दः। अन्तिमः सकारोऽत्र प्रथमाविभक्त्येकवचनप्रत्ययः। थीसिरिति प्रकृतिः संस्कृतभाषाया धाधातोः सजातीया। अक्षरार्थोऽस्यास्ति उपन्यासः (कस्यापि मतस्य) (थीसिस् इज़ ए ग्रीक वर्ड, एस इज़ ए नौमिनेटिव सिंगुलर सफ़िक्स, थीसि इज़ काग्नेट विद दि रूट धा आफ़ संस्कृत, इट्ज़ लिटरल मीनिंग इज़ ए न्यू पोआइंट विच इज़ पुट फार्वर्ड)

तच्छ्रुत्वैवोल्लसितास्तेऽवोचन् – अहो वैदुष्यम्, त्वमेवेदम्प्रथमोऽसि येन प्रश्नोऽयं मे समाहितः। अनेके जना मयेमं प्रश्नं पृष्टा ये स्वकृतिं थीसिस् इत्युद्घोषयन्ति परं तेषु नैकेनापि न मे प्रश्नः समाहितः। तदनन्तरं कालविषये तैर्नैके प्रश्नाः पृष्टाः। कालः क्रिया वा न वा? –तेऽप्राक्षुः। मयोक्तं यदि सूर्यसञ्चाररूपः कालस्तर्हि क्रियैव, अन्यथा द्रव्यमेव यथा वैशेषिका अभ्युपयन्ति। सन्ति केचन कालानस्तित्ववनादिनोऽपि? पुनः पृष्टं तैः। सन्तीत्यहमवोचम्। योगवासिष्ठकारेण महता कण्ठेनोक्तम् – कालोऽयं नैवास्ति न च विद्यत इति। अन्ते शोभनः प्रबन्धस्त्वया विरचित इति तेऽचकथन्। वैदेशिकेन लुई रेणु नाम्ना परीक्षकेणापि सुतरामभिष्टुतोऽयम्। तन्मुखाज्ज्ञात्वा यद्योरुपीयविद्वन्मौलि-मुकुटायमाना लुई रेणवो मच्छोधप्रबन्धपरीक्षका आसन्निति तैश्च मम प्रबन्धोऽभिनन्दित इति परां कोटिमानन्दस्याहमध्यरुक्षम्। 'हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वे'ति महाकविवचः। शोधप्रबन्धो मम परीक्षितुमग्नौ प्रक्षिप्तः, परमग्निस्तस्य दाहको नाभूदिति यावज्जीवं मम सुखाय कल्पिष्यते।

अतिक्रान्ते कतिपयकाले डा. सूर्यकान्ता मया पृष्टाः परिहासमुखेनैव गुरुचरणाः, जोश्या बाह्यपरीक्षकावुभावपि भारतीयावेव तावपि न प्रथमकोटिकौ। मदर्थे किं वैदेशिको नियुक्तः सोऽपि विद्वत्कनिष्ठिकाधिष्ठितः। यदि कदाचित्सोऽन्यथाऽकरिष्यत् का वा मे गतिरभविष्यत्। तेऽवोचन्– मया तव शोधप्रबन्धोऽवलोकितो जोश्या अपि। सुविमृश्यैव मयैतत्कृतम्। त्वं विद्वन्मूर्धन्यानां प्रशंसापात्रं भवेरित्यासीन्ममाभिलाषो येन यावज्जीवं गर्वं वहेः। तव शोधप्रबन्ध उत्तमकोटिक इत्युत्तमकोटिकैरेव परीक्षणीय इत्यभून्मे मतिः। विद्वानेन विजानाति विद्वज्जनपरिश्रमम्। तद्वचोऽमृतमिव मे श्रोत्रशष्कुल्यावस्पृशत्। अहमात्मानं सुतरामगर्हयम्। मुधैव गुरुचरणा मया दोषं ग्राहिताः। सत्यमेवोक्तं 'लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति'। मम त्वात्मन्यप्रत्ययं चेत इति व्यर्थमेव मया कदर्थित आत्मा।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

## २२

'डे' छात्रावासे प्रवेशकाले ऊनषष्टितमः कक्षो मदावासार्थं परिकल्पितोऽभूत्। मासद्वयमेव तत्र वसतो मम यदा तदनन्तरवर्ती कक्षोऽष्टपञ्चाशत्संख्याको रिक्तो जातः। तत्रस्थश्शोधच्छात्रः कनाडादेशाच्छोधवृत्तिं प्राप्य तं देशं प्रति गतः। तत्कक्षे रिक्ते जाते छात्रावासीयः परिचारको रामचन्द्रो मामुपागादवादीच्च मंगल्योऽयं कक्षो यदि भवाननुमन्यते तर्हि तत्रावासं कल्पयतु। नात्र कक्षे कश्चिच्चिरं तिष्ठति। अत्रस्थस्योत्कर्ष एव मया परिलक्षितः। अहं तु स्वकक्षं विहाय पार्श्ववर्तिकक्षावासे तदर्थं चच्छात्रावासाध्यक्षानुमतिं प्रार्थयितुं कञ्चित्संकोचमिवान्वभूवम्। उदासीनतां भजमाने मयि कश्चिदन्यस्तं कक्षमध्यवात्सीत्। सोऽपि मासत्रयमेव तत्रास्थात्। प्राध्यापकरूपेण तस्य कुत्रापि नियुक्तिर्जाता। सोऽपि ततो गतः। स कक्षः पुना रिक्तो जातः। रामचन्द्रः पुनर्मामुपेतः। अगादीच्च सम्प्रति कथं भवान् पश्यति। अमृषोद्यं मम वचो न वा? यदि भवान् इच्छति तर्ह्यात्मनः क्रियतामयं कक्ष इति। मयोक्तमविलम्बमेव मदीयं वस्तुजातं तत्र स्थापय। छात्रावासाध्यक्षानुमतिविषये पुनर्द्रक्ष्यामि। रामचन्द्रेण कतिपयैरेव क्षणैर्मदीयानि वस्तूनि तत्र स्थापितानि। पार्श्वस्थ एव कक्षे तानि नेतव्यान्यभूवन्निति तेषां बन्धनादिकमपि नापेक्षितमभूत्। यथा पूर्वमुक्तं मया, छात्रावासाध्यक्षाः श्रीदेशपाण्डेमहोदया मयि सुतरामस्निह्यन्। तदनुमतिर्मयाऽनायासमेव प्राप्ता। मम तत्कक्षप्रवेशान्मासत्रयेण मासचतुष्टयेन वा मयाऽपि शोधप्रबन्धः प्रस्तुतः। तदनु मासं तत्र स्थित्वाऽहमपि ततो निरगाम्। आसन्नवर्तिनोरपि कक्षयोरिदमन्तरं निश्चयेन विस्मापकमेव। तदेतद्यत्स्थान–माहात्म्यमित्युच्यते। ममानुभव एवात्र प्रमाणम्।

रामचन्द्रप्रसंग एकोऽन्योऽपि तत्सम्बद्धः प्रसंगः स्मृतिपथमवतरति। 'डे' छात्रावासे विविधविषयाध्येतारश्छात्रा अवसन्। तेषु केचित् स्नातकोत्तरकक्षाछात्राः, केचिद्विधिशास्त्रच्छात्राः, केचित्पुस्तकालयविज्ञानच्छात्राः, केचिद्विश्वकर्मशास्त्र (इञ्जिनीयरिंग) च्छात्राः केचिच्च शोधच्छात्राः। तत्र विविधशास्त्रच्छात्रेषु मेहरोत्रेति नामा कश्चनच्छात्र आसीत्। स आस्तच्छात्रनेता। छात्रनेतृषु ये गुणा सामान्यतो लक्ष्यन्ते तेषमासीत्तस्मिन्प्राचुर्यम्। कायेन प्रांशुस्तारस्वरेण वदन् भर्त्सयन्वा यं कमपि जनं स दृग्गोचरीभवति स्म। भोजनालयभृतकास्तस्य कक्ष एव तदर्थं भोजनमाहरन्मूल्यं तस्माद् ग्रहीतुं कस्यापि न साहसमभूत्। न जाने कथं तेन सह मम मैत्री जाता। सर्वेषां छात्रावासस्थानां कृत इदं विस्मापकमभूत् परस्परविपरीतस्वभावयोः कथमावयोः परस्परेण मैत्रीसम्बन्ध इति। शिशिरर्तौ तीव्रे शीते तेनैकदा रामचन्द्रश्छात्रावासपरिचारक आहूतः। अन्यदाऽऽकारितमात्र एव सपद्यापतति स्म सः, परं तस्मिन्दिने द्विस्त्रिराकारितोऽपि यदा स नायात्



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तदा क्रुधा परीतो मेहरोत्रा तत्प्रकोष्ठं छात्रावासबहिष्ठं गतः, कथमाकारितोऽपि नैकशो नायातोऽसीति यदा तारस्वरेण स तमधिक्षिपति, तदा भयेन शीतेन च कम्पमानो रामचन्द्रः साञ्जलिबन्धं तमवोचद् भूमौ शयानं कार्पासपरिच्छदेन परिवेष्टितं स्वं सुतमिंगितेन दर्शयन् यत्स ज्वराक्रान्त इति। तीव्रोऽस्य ज्वरो न सामान्य इति च। एतच्छ्रुत्वा भूयोऽपि क्रोधवशं गतोऽवादीन्मेहरोत्रा, यद्येवं कथं नौर्णेन वस्त्रेण परिवेष्टितोऽयं त्वया? श्रीमन् वयं दरिद्राः। कथमस्मासु कम्बलाद्यौर्णवस्त्रसम्भव इति दीनभावेनाभाणीद्रामचन्द्रः। तर्हि कथं नाहं निवेदित इति पुनराह मेहरोत्रा। त्वमसि न जनको, वधक एव, य एवं हिम्येऽपि शीते ज्वराक्रान्तं तनयं स्थलशायिनं केवलं प्रावारकेणाच्छादयसि। त्वादृशा दण्डमर्हा इति ब्रुवाणः कुवाच्यराशिं च तस्मिन्प्रयुञ्जानः स चटुलोत्फुल्लगत्या स्वकक्षमुपेतः गृहीत्वा च ततः स्वकीयं कम्बलं पुना रामचन्द्रप्रकोष्ठमुपेत्य तं तत्तनये प्राक्षिपत्। इमे सन्ततिं जनयन्ति तत्पालनं नैव जानन्ति इत्यादि बह्वस्फुटं वदंस्ततः परागतः। एतत्सर्वं मया प्रत्यक्षमवलोकितम्। तदवलोकनेनैतदभून्मे मनसि, अहो आपाततो ये दुर्जनाः प्रतीयन्ते दुर्वृत्ता वा लक्ष्यन्ते ते सौजन्यभारं वहद्भ्यो जनेभ्यः कदाचिदधिकं श्रेष्ठा भवन्ति। तेषु या परदुःखकातरता न सा सभ्यंमन्येष्वन्येषु परिलक्ष्यते। बहिरङ्गं तेषां कदाचिद् विद्रावकं भवत्युद्वेगं वा जनयति परमन्तरङ्गं तेषामतिकोमलं भवति। एष द्वैधीभाव एव तच्चरित्रवैशिष्ट्यम्। तदन्तरङ्गं यदि कश्चित्साक्षात्कर्तुं पारयेत्तर्हि तत्र सरीसरन्तीमुदात्ततां मृदुतां दयार्द्रतां वाऽवश्यमेवानुभवेत्।

अत्रापरमप्येकं तत्सम्बद्धमुदाहरणमत्र प्रस्तौमि। देवीदत्तशर्मनामैकश्शोधच्छात्रः संस्कृतविषय एव शोधं प्रकुर्वाणोऽस्मच्छात्रावासमध्यवसत्। संस्कृतमेव तस्यापि विषय इति तेन जातं मे सौहार्दम्। हलद्वानीनगराभिजनः पर्वतीयोऽसौ। कृतदारस्यच्छात्रवृत्तिमलभमानस्य तस्यावासादिसाहाय्यं तत्कुटुम्बिजना एवाकार्षुः। तस्य दीनां दशामवलोक्य तस्य साहाय्यमहमप्यकार्षम्। अम्बालास्थे गान्धीमैमोरियलनैशनलकालेजे पितृचरणानामवकाशप्राप्त्यनन्तरं संस्कृतप्रवक्तृपदं रिक्तमभूत्। तच्च वृत्तपत्रेषूद्घोषितम्। तेन मद्वचसा तदर्थं प्रार्थनपत्रं प्रेषितम्। अवकाशकाले मयाऽम्बालां गन्तव्यमासीत्। तमहं सहैवाकरवम्। प्रार्थनापत्राणि कालेजे प्राप्तान्यासन्। साक्षात्कारस्तु न सम्पन्नः। अहं देवीदत्तशर्माणं कालेजप्राचार्याणां श्रीजसवन्तरायमहाभागानां गृहमनयं तं च तान् पर्यचाययम्। मया प्राचार्यमहोदया निवेदितास्तन्नियुक्तये। तैः कतिपये सामान्याः प्रश्नाः पृष्टा उक्तं च नियुक्तोऽसीति। तदानीमेव सहसा देवीदत्तशर्मणोक्तं सन्ति मयि मम प्रमाणपत्राणि (सर्टिफिकेट्स)। यदि तदवलोकनेच्छा भवतां तर्हि दर्शयानि।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तैर्मामुन्मुखीभूयोक्तमयं ते प्रमाणपत्रम्। यद्ययमाह त्वमुत्तीर्णैम. ए. परीक्षोऽसि, तर्हि त्वं तथाऽसि। अहमस्मिन् प्रत्येमि। नास्ति मे प्रमाणपत्रदर्शनेनार्थः। अहं तद्वचसा स्तब्ध इव, जडीभूत इव, निष्पन्दीकृत इवासम्। अहो! मयि बालेऽपि तथा प्रतियन्ति पूज्यचरणाः प्राचार्याः। देवीदत्तशर्मा कालेजकार्यालयान्नियुक्ति-पत्रमादाय वाराणसीं गतः। साक्षात्कारादिकं तस्य नैवाभूत्। स एव देवीदत्तशर्मा कालान्तरे पञ्जाबविश्वविद्यालये रीडरपदं प्रोफेसरपदं च प्राप्तवान् विभागाध्यक्षपदं चापि। मद्विधस्य तुच्छजनस्य निमित्तेन तेन पञ्जाबप्रदेशे लब्धः प्रवेशः। स मम[१६] कच्चित्स्मरति वा? नैवेति तर्कयामि। दिल्लीं स नाम नैकदा प्राप्तो भवेत्, नैकदाऽपि सोऽस्मद्गृहान् निजागमनेन सम्भावितवान्। अपत्यजातस्य विवाहाद्यवसरे निमन्त्रणपत्रमपि न प्रेषितवान्। सर्वथा स्मृतिपटलतो मां स पृथगकार्षीत्। प्रायशो लोके जना एवमेव व्यवहरन्ति। सिद्धे स्वकार्ये तन्निमित्तभूतमेव जनं विस्मरन्ति, तद्दर्शनमपि परिहरन्ति, तमेव वाऽधिक्षिपन्ति। सत्यमेवोक्तं केनापि पाश्चात्येन कविना 'जगती कृतमकृतज्ञतया प्रतिददाति।' 'कृते च प्रतिकुर्वीत एष धर्मः सनातन' इति प्राचीनोक्तिः। तत्र प्रतिकरणस्य तु का कथा। कृतं जनाः स्मरन्त्येव नहि। मयाऽनेकधाऽनुभूतमेतदिह जीवने। पूर्वमेतन्मे मनः किञ्चिदपिपीडदपि। सम्प्रति तु पीडां नानुभवामि। एषैव जागतिकी रीतिरिति सर्वं सामान्यभावेन गृह्णामि।

वाराणसीं प्रत्यावृत्तो देवीदत्तशर्मा। तस्य नियुक्तिर्भविष्यत्यम्बालायामिति न सोऽजानात्। स तु मया सह प्राचार्यमहोदयान् द्रष्टुं गतोऽभूत्। तस्य वस्तुजातं तु वाराणस्यामासीत्। तत्संगृह्यैव तेनाम्बालां प्रति गन्तव्यमासीत्कार्यं प्रारब्धुम्। शिशिरावकाशः समाप्त इत्यहमपि वाराणसीं प्रत्यागाम्। देवीदत्ते मध्येमार्गं शीतबाधानिवारणायौर्णं कञ्चुकं नासीत्। तद्विषये किंकर्तव्यमिति चिन्तयति तस्मिन् मेहरोत्रा तस्मै स्वकीयं प्रलम्बकञ्चुकं (ओवरकोट) तस्मायददभाणीच्च गृहाणैतत् तवैवेदं कञ्चुकमिति। तस्यौदार्यं मां मन्त्रमुग्धमकरोत्। तस्यैव विषये देवीदत्त एकदोक्तवान् नासौ सुजनः, अवगुणैराच्छादितः स इति।

स मेहरोत्रा सम्प्रति क्वास्तीति न जानामि। परं तस्य लोकेनासुजन इति गृहीतस्य सुदृढा स्मृतिर्मेऽन्तरङ्गं मथ्नाति। लोकेन भ्रष्टचारिण इति गृहीता जनास्तथा कदाचिच्चारित्रसम्पन्ना भवन्ति गुणानां वा शेवधयो भवन्ति यथा तापसा अपि कदाचिन्न स्युः।

---

१६ अधीगर्थदयेशां कर्मणि (२.३.५२)
इत्यनेन अधीगर्थे (=स्मृत्यर्थे) षष्ठी।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

## २३

मासोऽपि नासीद्व्यतीतो मम शोधप्रबन्धं परीक्षार्थं प्रस्तुतवतो यदा पितृचरणा मम वाराणसीमुपेताः। तत्रत्यविद्वज्जनदर्शनप्रसंगेन ते पण्डितरघुनाथशर्मपाण्डेय-महाभागानुपसन्नाः। मद्विषयिण्यां प्रवृत्तायां चर्चायां ते मां मुक्तकण्ठमस्तौषुरवा-दिषुश्चातीव विनीतोऽयं बालः। मयैकदा शीतकाले मध्यरात्रेऽयमाहूतः। अविचार्यैव किञ्चिदन्यदविलम्बं मामुपेतोऽयम्। तदा पूर्वोल्लिखिता घटना हठान्मे स्मृतिपथमुपेता। परीक्षितोऽहं गुरुचरणैरिति मे तदा तदाकारणस्याह्वानस्या-कूतमहमवाभुत्सि। न केवलमादावेव मध्येऽपि गुरुपादाः परीक्षन्तेऽन्तेवासिनः। न केवलं परीक्षाभवने या परीक्षा, सैव परीक्षा, इयमपि परीक्षैव। इमामुत्तीर्ण एव वस्तुतो विद्याया भवत्यधिकारी।

शोधप्रबन्धप्रस्तुतेः किञ्चित्कालानन्तरमेव डा. सूर्यकान्तैरहमाकारित उक्तश्च यत्ते स्वकीये शोधकर्मणि मम साहाय्यमभिलषन्तीति। तेषां कुमारसम्भवविषये कार्यं प्रचलति स्म। तैरुक्तं विश्वविद्यालयपुस्तकालयं गच्छ तत्र पाण्डुलिपिकोषान् विचायं विचायं कुमारसम्भवपाण्डुलिपीनां विवरणं ततः संगृहाण तच्च मह्यमर्पय। मया तथैव प्रक्रान्तम्। प्रत्यहमहं विश्वविद्यालयग्रन्थागारमगच्छम्। तत्र च पाण्डुलिपिकोषानवाचयम्। ततश्च कुमारसम्भवमातृकाविषयिणीं सामग्री यावदुपलभ्यं समगृह्णाम्। मन्ये सप्ताहत्रयं यावन्मया तत्रानारतं श्रान्तम्। पञ्चाशत्पृष्ठात्मिका ततः संकलिता सामग्री टंकयित्वा मया गुरुचरणेभ्योऽर्पिता, गुरुचरणा उपच्छन्दिता इति कृतकृत्यता चानुभूता। न केवलमनेन गुरुचरणानामेवेष्टं सिद्धं ममापि महाँल्लाभोऽभूत्। के के पाण्डुलिपिकोषाः सन्ति कैस्कैर्वा कथं वा संकलिता इति सर्वं मम हृदयंगममभूत्। योऽयं विपुलो ज्ञानराशिर्मयि तदानीमर्जितस्तेनाद्याप्य–हमुपक्रिये। पाण्डुलिपिकोषप्रसंगे त्वरितमेव ब्रवीमि आउफ्रैश्तसंकलितः कोषो द्रष्टव्यो हरप्रसादशास्त्रिसंकलितः कोषो वाचनीय इति। मातृकाग्रन्थानां विवरणं परिचयं वा कथं ददति तच्छास्त्रनिपुणा विचक्षणा इत्यप्यहं सम्प्रति सम्यग्वेद। एतत्सर्वं तदानीमेव कृतस्य परिश्रमस्य फलम्। अद्यतनाश्छात्रा एतद्विषयेऽन्यथा पश्येयुर्नाम। स्वकार्यसिद्धये गुरवश्छात्रान् साधनीकुर्वन्ति तच्छ्रमं चोपजीवन्तीति गुरून् दोषदृष्ट्या पश्येयुः। न ते विदुः कियदुपकृतं भवति स्वयं तेषामिति। अहमेवात्र खलु निदर्शनम्।

काशीहिन्दूविश्वविद्यालयच्छात्रावासनिवाससम्बद्ध एकोऽन्यः प्रसंग एतत्पंक्तिलेखनावसरे स्मृतिपथमुपयाति। रात्रिशयनात्पूर्वं पयःपानं मेऽस्वदत। आबाल्यादेवं कुर्वाणस्य मे तन्नित्यप्रवृत्तिरूपेण पर्यणमत। लवपुरे ततश्चाम्बालायां पितृचरणा गोपालगृहं गत्वा प्रत्यक्षं गोपालेभ्यो गां महिषीं वा पयोऽदोहयन् येन



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

ते तत्र जलं न मिश्रयेयुः। छात्रावासे पुनः जलमयमेव पयोऽलभ्यत तेनोदरविकारो मे जातः। तद्विषये किं करवाणीति यदाऽहं चिन्तयामि तदा छात्रावाससहवासी कश्चिन्मामवोचत् किञ्चिन्मात्रं कालमरिच (काली मिर्च) चूर्णं पयसि मिश्रय तेन तद्विकारोऽपैष्यति। तदाप्रभृति मया तथैव कृतम्। न च जलमिश्रेणापि पयसा कश्चिदपि विकारो मे जनितः। इदं तु सत्यमेव यत्पूर्वमनभ्यासवशान्मरिचस्य च तिक्तत्वान्न मे पयोऽस्वदत परं कालेन तथैवाभ्यासो जातः। तदप्यहमास्वादयितुं प्रारप्सि।

मरिचप्रसंग इदमप्यत्रोल्लिलेखिषामि यत्तस्य लेपः शीर्षवेदनायां मस्तके यदि क्रियते तेन सद्य एव वेदनाऽपैति शान्तिश्चानुभूयते। नैकदा मया कृत एष उपचारः। अहं बहुशः शीर्षवेदनया बाध्ये। उपचारोऽयं ममैकेन सुहृदा छात्रावासीयेनैव मह्यं चर्चितः।

## २४

गुरुचरणा पण्डितरघुनाथशर्ममहाभागाः स्वकीयात्कबीरचौरास्थानादाराजकीयं संस्कृतमहाविद्यालयं (गवर्नमेण्टसंस्कृतकालेजं, लोके क्वीन्स कालेज इति प्रसिद्धम्) प्रतिदिनं पद्भ्यामेवागच्छन्। त्वरितपदक्रमास्तेऽल्पेनैव कालेनाध्वानमत्यक्रामन्। नित्यानन्दवेदविद्यालयच्छात्रावासः कबीरचौरासमीपस्थ एवेति तन्निवासकाले बहुशोऽहं तैः सह महाविद्यालयमयाम्। मध्येमार्गं नैकविधा चर्चा तैः सह प्रावर्तत। एकदा मया ते पृष्टा निघण्टुरचयितृविषये मतत्रयं प्रसिद्धं यत्तस्य (निघण्टोः) कर्ता प्रजापतिः, पूर्वाचार्या वा तत्कर्तारो यास्को वा तत्कर्तेति तत्र तेषां किं दर्शनम्। तेऽवोचन् नाहं वेद निघण्टोः को रचयितेति। निघण्टौ किमस्तीत्यहं वेद। अद्यापि तदुक्तिं गच्छामि शृण्वन्निव। अद्यतनं वैदुष्यमेतादृशमेव यत्र विद्वांसो बहिरङ्गपरीक्षायामधिकं भवन्ति रताः कोऽमुकस्य ग्रन्थस्य प्रणेता, कोऽस्य कालः, कोऽस्य वंशः का वाऽस्यान्याः कृतयोऽमुकादयं पूर्ववर्ती अमुकाच्च पश्चाद्वर्तीत्यादि, अल्पमेव चान्तरङ्गपरीक्षायाम्। इदमेवान्तरं प्राच्यपाश्चात्यपद्धत्योः। प्राच्यपद्धत्यनुसारिणः पंक्तिपण्डिताः। ग्रन्थमर्मग्रहणे तेषामभिप्रायः। बहिरङ्गपरीक्षणे न तेषामभिरुचिर्न वा प्रवृत्तिः। पाश्चात्यानां केषाञ्चन प्राधान्येन बहिरङ्गपरीक्षणे केषाञ्चन चोभयत्रापि। तथापि ग्रन्थं यथा 'लापयितुं' प्राच्यपद्धत्यनुसारिणः शक्ता न तथा पाश्चात्यपद्धत्यनुसारिणः। अस्तु। मतवैविध्यमत्र सम्भवीति नात्र बहु वच्मि।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अल्पीयानेव कालो व्यतीतोऽभूत्पाकिस्थानदेशस्य जातस्य। एकदा सहसा व्रजन्तं मां गुरुचरणा अब्रुवन् गीतासूक्तम्–अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभमिति तत्सर्वथाऽवितथम्। तैः पद्यमप्येकमुच्चारितं–

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः।
अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते।।

(हितोपदेशः, मित्रलाभः, ८३)

यो यथा कर्म करोति स तथाविधमेव तस्य फलमश्नाति। पश्य, जिन्नाख्येन जनेन वाचा विषवमनं कृतं यद्वशाद् हिन्दूषु मुसल्मानेषु च वैमनस्यमतिभूमिं गतम्। तेन च हिंसाऽग्निदाहो नारीधर्षणं चेत्यादि बहुविधं कुत्स्यं कर्म जातम्। एतस्य कुकर्मणः फलं तेनास्मिञ्जन्मन्येव भुक्तम्। विधात्राऽन्तकाले तस्य वाक्शक्तिरेवापहृता। जिन्नाः जिह्वाकैंसररोगेण पीडितः प्राणानजहादिति प्रकाशम्। तद्रोगवशादासन्ने मृत्यौ नैकमप्यक्षरमुच्चारयितुं स शशाक। अलौकिकज्ञैरपि गुरुचरणैर्यदुक्तं तत्सर्वथा हृदयस्पर्शि। वाचा तेन बीभत्सं दुरुक्तं सा वाक्शक्तिरेव तस्मादपगता कर्मसिद्धान्तसत्यतां सर्वथा प्रमाणयति। तदुक्तमनेकत्रोद्धृतं मया जनांश्चमत्करोति।

## २५

१९५४ वर्षे यदाऽहं वाराणस्यां पीएच्. डी. इत्यर्थं शोधकार्यं प्रवर्तयन्नासं तदैव दिल्लीस्थे हंसराजकालेजे संस्कृतप्रवक्तृपदं विज्ञप्तमभूत्। यद्यपि पितृचरणैर्नैव कदापीङ्गितं यन्मद्व्ययं ते वोढुमसमर्थास्तथापि वयस्कोऽहं न मया पित्रोर्भाररूपेण भाव्यं वृत्तिश्च मया स्वयं कल्पनीयेति विचारो मे मनसि जागरितः। शोधकार्यार्थं या छात्रवृत्तिः प्राप्यत सा कतिपयमासानन्तरं प्रस्तुते शोधप्रबन्धे विरतिं यास्यति तत्पश्चाच्च यावन्न मे वृत्तिलाभस्तावत्पित्राश्रितेनैव मया स्थेयं स्यात्तच्च न मेऽभिरुचितमतः सति काल एव मया वृत्तिः कल्पनीयेति विचार्य तदर्थमहं प्रार्थनापत्रं प्रैषयम्। साक्षात्काराय निमन्त्रितश्चाप्यभवम्। अक्तूबरमासप्रारम्भे दिल्ल्यां साक्षात्कारो निर्धारित इति सूचनामवाप्याहं दिल्लीं प्रति प्रास्थिषि। न मया पदं विज्ञापितं, तदर्थं प्रार्थनापत्रं मया प्रेषितं साक्षात्कारार्थं चाहमुपतिष्ठ इति पितृचरणेभ्यः सूचितम्। यदि नियुक्तिर्लभ्यते तदैव पितृचरणान् सूचयिष्यामीति बुद्धिर्मेमोदिता। दिल्ल्यां हंसराजकालेज एव हिन्दीप्राध्यापकस्य सत्यदेवचौधरीति नामधेयस्य मालरोडस्थे गृहेऽहं स्थितः। साक्षात्कारो जातः। नियुक्तिर्मया लब्धा। अहमचिचिन्तं


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

नियुक्तिपत्रमादायाऽम्बालां प्रत्यहं गत्वा पितृचरणेभ्यः शुभमिदं वृत्तं निवेद्य तदनुमतिमासाद्य कालेजीयं नवं जीवनं प्रारभेयेति। सत्यदेवचौधर्योक्तं नियुक्तपत्रप्राप्तिदिन एव कार्यं प्रारब्धव्यम्। ततः परस्ताद्रविवासरः। ततः परस्ताच्च दिनद्वयं दीपावल्यवकाशः। कार्यप्रारम्भदिवसे त्वध्यापनादि नैव भवेत्। स हि प्रथमदिवस इति तस्मिन् परिचयादिकमेव जायेत। तदनन्तरं दिनत्रयात्म-कोऽवकाशः। यदि नियुक्तिपत्रप्राप्तिदिवस एव कार्यं प्रारभ्यते तर्हि तस्य दिनत्रयस्यापि वेतनं लभ्येत यत्र कार्यं न भवेत्। कुतः पुनस्तत्त्याज्यम्। कार्यं प्रारब्धमिति अम्बालां गत्वा पितृचरणाः सूचनीयाः। मयाऽपि तन्मतं युक्तियुक्तं शुभेच्छाप्रेरितं चेति मत्वोरीकृतं कार्यं च प्रारब्धम्। तदा हंसराजकालेजे डा. रामगोपालनामक एकः संस्कृताध्यापक आसीदपरश्चाहं नवनियुक्तः। तेनापि मे परिचयः कार्यप्रारम्भदिने जातः। परिचयानन्तरं प्रारब्ध आलापः। तत्र तेनोक्तम् अस्मद्विश्वविद्यालय आङ्ग्लभाषामाध्यमेनाध्यापनं भवति। आङ्ग्लभाषामाध्यमेन? विस्मितेन मयैतदुक्तम्। आमिति ससंरम्भं तेनोक्तम्। वाराणसीतः समायातस्य मम कृतेऽतीव विस्मयावहमिदभमूद्यत्स्वातन्त्र्यावाप्त्यनन्तरमपि संस्कृतसदृशस्य विषयस्याध्यापनं विदेशिभाषामाध्यमेन भवेत्। वाराणस्यां तु भूगोलेतिहासादि-विषयाणामप्यध्यापनं हिन्दीभाषयैवाभवत्। संस्कृतस्याध्यापनमाङ्ग्लभाषयेत्य-कल्पनीयमेव मम कृत आस्त। स्वकीयोऽविश्वास एव मया सहसोत्थितेन किमाङ्ग्लभाषामाध्यमेनेति प्रश्नेनाऽऽविष्कृतः। नैतद् यदाङ्ग्लभाषायां मम गतिर्नासीत्तद्भाषामाध्यमेनाध्यापने काठिन्यं वा मे भवेदिति शङ्काकुलमभून्मे मनः। सामान्यभावेन विस्मयवशात् निर्गतं कथमन्यथार्थापितं रामगोपालेन कथं च तत्कृतो दुष्प्रचारोऽम्भसि तैलबिन्दुरिव प्रासरदिति विषये पुनश्चर्चां प्रवर्तयिष्यामि। हंसराजकालेजे कार्यं यद्दिने प्रारब्धं तद्दिन एव गोधूलिवेलायामहमम्बालां प्रास्थिषि बसयानेन होराचतुष्टयेनैव च तन्नगरमागमिकर्मीकृत्य पितृचरणैः समगंसि दिल्लीगतं सर्वं च वृत्तं तान्यवीविदम्। तच्छ्रुत्वा तुषारावृतं जलदपटलमिव तदाननं विच्छायमभूत्। किमिति त्वयैतदाचरितं मत्तो नियुक्त्यादिविषयं निगूहमानेन। प्रार्थनापत्रप्रेषणात्पूर्वं कथं न त्वं मया सह पराम्राक्षीः। किञ्च, कार्यं प्रारब्धमपि न चाहं तत्संकेतमपि ग्राहितः। पीएच्. डी. प्रबन्धपरिसमाप्तिस्ते प्रथमः कल्पः। तदेव ते मुख्यं कार्यं गौणमितरत्। किमिति तव गौणमुख्ययोर्मुख्ये सम्प्रत्ययो नाभूत्? पर्यवसितपीएच्. डी. कार्यस्त्वं यत्र कुत्राप्यभीष्टां भृतिमलप्स्यथा एव। तर्हि कुतस्त्वं तत्रात्वरिष्ठाः?

अवाङ्मुखोऽहं पितृचरणानामेतानि वचांस्यश्रौषं न च सहसा किञ्चिदप्यवोचम्। मम नियुक्तिविषये तेषां प्रतिक्रिया सर्वथाऽतर्कितैवासीत्। तदा कतिचित्क्षणैः प्रत्यागतचेतन इव साहसमारुह्य मन्दं मन्दं तानभाणिषम् –



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तत्सत्यमेव यदवाचि भवद्भिः। कालेन पीएच्. डी. प्रबन्धसमाप्तिर्ममापीप्सिततमा। परं साध्यापनकार्यसाहचर्येणापि सम्भविनी। नास्त्युभयोः शाश्वतिको विरोधः। पीएच्. डी.कार्यसमाप्त्यनन्तरमभीष्टा भृतिर्लभ्येतैवेति कोऽत्र निर्णयः। यदि लभ्येतापि तर्हि सा भारतराजधान्यां दिल्ल्यामेव भवेदिति कः शक्नोति वक्तुं निश्चयेन? श्रुत्वैतन्मे वचःसन्दोहं गभीराकृतिं दधानाः पितृचरणाः प्रण्यगादिषुर्मद्वचःसारं त्वं न वेत्सि प्रज्ञावादांश्च भाषसे। अध्यापनक्रिया कालसव्यपेक्षा भवति। तत्सहचरितं भवत्यन्यदपि बहुकृत्यजातं यत्र त्वं नियोजयिष्यसे। नानाकृत्यव्यापृतस्त्वं कियन्तं वा कालं लप्स्यसे शोधप्रबन्धप्रणयनाय? यदि लप्स्यसेऽपि श्रममनुभविष्यसि। यदि श्रममगणयित्वाऽऽत्मानमायासयिष्यसि शरीरसादाय ते तत् कल्पिष्यते। न च तच्छ्रेयः। तस्मात् प्रेयो विहाय श्रेयो गृहाण। प्रथमं पीएच्. डी. कार्यं समापय। पश्चाद् वृत्तिं चिन्तयेः। एवमुक्त्वा विरतेषु पितृचरणेषु चिन्ताचान्तचेता अहं न क्षणमपि क्षणमलप्सि। पितृचरणाः पूर्वं नैवं कदाचित्स्वमते दृढा अवालोक्यन्त। किमनन्तरकरणीयं मयेति पृष्टास्ते स्पष्टम् अवादिषुः – प्रेषय पत्रं दूरलेखं वा कालेजप्राचार्यं नाहं भृतिं स्वीकर्तुमलमिति। मया तु भृतिः स्वीकृता कार्यमपि च प्रारब्धमित्युक्ते तेऽचकथंस्तर्हि प्रेषय त्यागपत्रम्। अत्र विषये किञ्चिदनुक्त्वैवाहं तेभ्यः परागां सुतरामाकुलितान्तरंगः। आज्ञा गुरूणां ह्यविचारणीयेति मते स्थितोऽहं तदानीं यावत्पितृचरणानामाज्ञां निर्विकल्पमपालयिषम्। परं तद्दिने मे मनसि किञ्चिदन्यथैवाभूत्। असंस्तुतलोकव्यवहारोऽप्यहमेतदवेदिषं यद् भृतिर्न सुलभेति। यद्येकमपि पदं रिक्तं भवति शतशोऽभ्यर्थिनस्तदर्थं क्षुधार्त्ताः श्येनाः कपोतपोतमिवानुधावन्ति। अहं पुनर्लब्धामपि भृतिं पराक्रियाम्? पीएच्. डी. इत्यनेन किम्? श्रेष्ठभृतिलाभ एव। स तु ममास्त्येव। एवं बहु चिन्तयतो ममाक्ष्णोरेव प्रभातमासीत्। परेद्यवि पितृचरणाः पुनर्मां प्रैरिरंस्त्यागपत्रप्रेषणाय। अयमहं प्रहिणोमीत्येवं ते मयोक्ताः। अद्य रविवासर इति पत्रं न निर्गच्छेदिति किञ्चित्क्षणानन्तरं ते मयोक्ताः। अस्तु श्वः प्रेषयेत्युक्त्वा ते तूष्णीमभवन्। श्वस्तु दीपावलीदिवसः। आनन्दमग्नः सर्वो जनः। अहं पुनश्चिन्तामग्नः। पितृचरणाः प्रातःप्रभृत्येव मां पत्रप्रेषणाय प्राचूचुदन्। तत्प्रेरणया सन्दृब्धं मया पत्रम्। न केवलमहं मातृचरणा अपि मेऽभूवन् व्याकुलाः। मया भृतिर्लब्धेति तेषां कृते महानुत्सव आसीत्। परं सैव भृतिः स्वयमपाक्रियत इति तेषामपि मनो व्यथितमासीत्। सन्दृब्धे पत्रे तानहमवोचम् – अद्य दीपावलीदिवसः। लक्ष्मीमावाहयन्ति जनाः। अहं पुनस्स्वयं प्राप्तामपि तां पराकरोमि।

मत्पत्रे हंसराजकालेजं प्राप्ते विस्फोट इवाभूत्। कुतस्त्याग इति तत्रत्या नानुमातुमशकन्। तेषां कृत इदमकल्पनीयमासीद्यत्कश्चिद् कार्यं प्रारभेत दिनेनैकेन च तत्पराकुर्वीत। मद्विषये प्रवृत्ते बहुविधे वितर्के रामगोपाल आहोपुरुषिकयाऽन्यानाह


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

वेद्म्यहं कारणं तद्भृतित्यागस्येति। आङ्ग्लभाषाऽत्राध्यापनमाध्यमम्। तत उद्विजमानेन वराकेण भृतिरेव त्यक्ता। नासावाङ्ग्लभाषां सम्यग्वेद। तद्वचस्तथा प्रसिद्धिं गतं यन्नगेन्द्रसदृशेन विदुषाऽपि कस्मिंश्चित् प्रसंगे मत्त्यागपत्रप्रेषण इदमेव हेतुत्वेनोपस्थापितम्।

दिल्लीगता भृतिस्तु मम गतैव। पीएच्. डी. कार्यमेवाग्रे सारयितुं मया वाराणसी गन्तव्यासीत्। यतः केवलं दिनत्रयार्थमेवाहमम्बालां गत आसमतः प्रसेवमात्रमेव मय्यासीदवशिष्टं सर्वं तु सत्यदेवचौधर्या गृह एवासीत्। दिल्ली मयाऽऽगन्तव्यैवेति दृष्ट्याऽहमम्बालां गतः। तद्गृहस्थमवशिष्टं वस्तुजातं ततो ग्रहीतुमहं तद्गृहं सम्प्राप्तः। अपराह्णकालस्तदाऽऽसीत्। रात्रौ वाराणसीं प्रति मया प्रस्थानीयमासीत्। सत्यदेवचौधरीमुपेतेन मयाऽम्बालायां यद्वृत्तं तत्सर्वं न्यक्षेण निवेदितम्। तेनोक्तम्– भवान् एतत्सर्वं प्राचार्यमहोदयमपि निवेदयतु। मयोक्तं नैतत्सम्भवि। कथमहमात्मानं तान् दर्शयिष्यामि। मदीयेन बालचापलेन किं मयि ते न कुपिताः स्युः? प्रथमं भृतिस्वीकरणं ततः कार्यप्रारम्भस्ततश्च दिनमेकमेव तत्कृत्वा तत आत्मनः पृथक्करणम् किमेतत्तेषां सह्यं भवेत्। कथमेतत्सर्वं तैर्गृहीतं भवेत्। कृतागा अहं तत्कोपाद्बिभेमि। नाहं तत्पुरतः स्थातुं शक्नोमि। एवं भाषमाणे मयि सत्यदेवेनोक्तं जनेन तन्नाम कार्यं येन पुनरपि संगमः सम्भवी स्यात् (इन्सान को वह करना चाहिए कि फिर भी माथे लगा जा सके)। अर्थ्यं तद्वच इति गृहीत्वाऽहं प्राचार्यमहोदयगृहं गन्तुमभ्युपागाम्। सत्यदेवे द्वे द्विचक्रयाने आस्ताम्। एकं स्वकमपरं च तद्भ्रातुरर्जुनदेवस्य। एकेन चक्रयानेनाहमपरेण च स प्राचार्यगृहं प्रत्यावां प्रास्थिषातां कतिपयैरेव क्षणैश्च तत्प्रापताम्।

## २६

भोजनवेलेति प्राचार्यमहोदया भुञ्जाना आसन्। भोजनकक्ष एव तैराकारितावावाम्। मद्दर्शनेनाऽपि न कश्चिद् विकारः पर्यलक्ष्यत तदानने। अतीव सौम्यभावेन 'तादृशं किं वृत्तं येन स्वीकृतामपि वृत्तिं त्वमत्याक्षी'रिति तेऽप्राक्षुः। मयाऽम्बालायां पितृचरणैर्यदुक्तं तत्सर्वं न्यक्षेण निवेदितम्। तच्छ्रुत्वा मनाग् विचारमग्नास्तेऽवोचन्– किं नास्ति तादृशी पद्धतिः काशीहिन्दूविश्वविद्यालये यया त्वं दिल्लीस्थ एव पीएच्. डी. कार्यं कर्तुं शक्नुयाः। वर्षद्वयं तत्रावस्थितिरावश्यिकी ननु? अथवा किंचित्कालानन्तरं वाराणसीतोऽन्यत्र स्थित्वाऽपि त्वया कार्यं कर्तुं शक्यते। मयोक्तं–यथाऽहं जानामि वर्षं वाराणस्यामेव स्थेयं भवति। तदनु शोधनिर्देशक–विभागाध्यक्षयोरनुमत्याऽन्यत्रापि स्थातुं शक्यते, न च विश्वविद्यालयच्छात्रता



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

प्रणिहन्यते। कस्ते शोधनिर्देशकः कश्च विभागाध्यक्षः इति ते तदाऽन्वयुक्षत। डा. सूर्यकान्तः, स एव शोधनिर्देशकोऽपि विभागाध्यक्षोऽपि चेत्यहं प्रत्यवोचम्। अहो सूर्यकान्तः, स तु लवपुरादेव मम परिचितः। यदि तम् अहम् पत्रं प्रेषयेयमवश्यं त्वामनुमन्येत सः। इत्युक्त्वा ते लेखनीमादाय त्वरिताक्षरैः पत्रमलेखिषुः (यतो गृहेऽहं तैः समागंस्यतष्टंकणं नासीत् सम्भवि) मां च प्रण्यगादिषुः – गृहाणैतद् देहि च सूर्यकान्तायेति। यतो रेलशकटीयानेन तस्यामेव रात्रौ मया गन्तव्यमासीदतः कालक्षेपं विहाय तदवाप्य गतोऽहं सत्यदेवचौधरीगृहं ततश्च स्वकीयं वस्तुजातं संगृह्य रेलशकटीविरामस्थानं च प्राप्य यथाकालं च शकटीमारुह्य वाराणसीं प्रापम्। प्राप्तमात्र एव च डा. सूर्यकान्तमपश्यं प्राचार्यपत्रं च तस्मै समार्पिपम्। पत्रं वाचयित्वोत्फुल्लनयनः सोऽवोचदहो, भृतिं लब्धवानसि। प्रियं मे। सानन्दं दिल्ल्यां कार्यं कुरु। अहमनुमन्ये। अनुपदमेव तेन प्राचार्यमहाभागेभ्यः पत्रं संदृब्धमहं च निर्दिष्टः– गच्छ, पंजीकृतडाकद्वारा प्रेषयेदम्। अद्यत्वे भृतिर्न सुलभा। लभ्यते चेदस्वीकृतेः प्रश्न एव न। याहि, शुभास्ते सन्तु पन्थानः। अहं पुनर्व्यामूढ इव कृत्याकृत्यनिर्णये सुतरामशक्तो यया दिशा धावति वेधसः स्पृहा तयैव मयाऽनुगन्तव्यमित्यात्मानं वेधसो हस्त एव समार्पिपमचिचिन्तं च यो जगत आदिकारणं स सर्वं साधूकरिष्यतीति। प्राचार्यमहोदयं प्रति पत्रं मया प्रेषितं पितृचरणाञ्चापि यत्र प्राचार्यसूर्यकान्तयोर्मध्ये यद् वृत्तं तत्सर्वं विशदीकृतम्। कतिपयदिवसानन्तरं पितृचरणानां पत्रं मया प्राप्तं यत्र स्वकीयो विरोधस्तैरित्थ–माविष्कृतः–साम्रेडं प्रतिबोधितोऽपि मदभिप्रायं नाग्रहीरिति चित्रमेतत्। पीएच्.डी. कार्यं समाप्यैव त्वयाऽध्यापने मनो देयम्। उभयोः सहप्रवर्तने सुशकेऽपि कस्यचन तत्रानापत्तावपि न ते तच्छ्रेयस्करं स्यात्। शोधप्रबन्धविरचना तेन विलम्बेत, उपाधिलाभात् पूर्वमेव भृतिर्लब्धेति। प्रायः पीएच. डी. उपाधिं सोपानायन्ते जना भृतिलाभाय। तल्लाभे तं विनैव जाते किमनेनेति कदाचिद् अनास्थैव तं प्रति समुन्मिषेत् तच्चानिष्टाय भवेदिति तदुपलब्धावेव मनो देयम्। किंचैकः प्रबन्धो यदि साफल्येन विरच्यते तर्हि प्रबन्धान्तरविरचने रुचिर्जागर्ति। एवञ्च गवेषणाकार्यमग्रे सरति। अध्ययनाध्यापनयोः सहप्रवृत्तिरेव साधीयसी। अतः प्रबन्धरचनायामेव मनो देहि। विरमान्यचिन्तनात्। वृत्त्यर्थं नाति चेष्टेतेति स्मर प्राचां वचः। अध्यापनमपि न जीविकाकृत्य सेवनीयम्। न तद् वृत्तिरपि तु प्रवृत्तिः। न तत्केवलं जठरपिठरीपूरणायैव। तां तु काकादिका अपि पिपुरति। यद्यध्यापकः सन् स्वकीयेऽध्ययनकर्मण्येव रंस्यसि नाध्यापनाय तन्न्याय्यं भविष्यति। सम्प्रति सर्वात्मना त्वमध्ययने स्वं व्यापारय पश्चादध्ययनं चाध्यापननं च सममेव प्रवर्तयिष्यसि। अधुना यद्यध्ययनं प्रधानं करोष्यध्यापनं च गौणं न तत् सम्यक्



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

करोषि। वृत्तिकाले सर्वथा युक्ताध्ययनाध्यापनेन त्वया भाव्यमिति। यावदेवाहं तत्पत्रं प्रापं तावदेव तत्सूर्यकान्तमदर्शयं प्राचार्यमहोदयांश्च तत्प्रैषयं क्षमां चाहं तानयाचिषि ममाविनयाय। एतत् सर्वं कृत्वैकतानेन मनसा प्रबन्धरचनायामेवात्मानं व्यापीपरं कालेन च प्रबन्धं समाप्य परीष्ट्यै प्रास्तौषमिति पूर्वमुक्तमेव मया।

## २७

प्राचार्यमहोदयडा.सूर्यकान्तपितृचरणपत्रादीनां गतागतत्वेनाध्यर्धमासमितः कालो गतः। दिशाम्बरो मासः प्राप्तः। अध्यापनसत्रस्य केवलं मासत्रयमेवावशिष्टमिति प्राचार्यमहोदयैस्तदर्थं कस्याप्यस्थायिरूपेण कृता नियुक्तिः। मईमासे आगामिवर्षस्याहं पितृचरणैः सहाम्बालां प्रतिनिवृत्तः।

मम शोधकार्यहेतोर्वाराणसीनिवासकाले पितृचरणैर्महता यत्नेन प्रणीतस्य प्रस्तावतरङ्गिणीत्याख्यस्य संस्कृतनिबन्धपुस्तकस्य पाण्डुलिपिर्मयि प्रैष्यत निरदिश्यं चाहं तत्प्रकाशनार्थं चौखम्बा संस्कृतसीरिज आफिस इत्याख्यायाः पुस्तकप्रकाशनसंस्थाया अधिपतिभिः सम्पर्कं साधयितुम्। पाण्डुलिपिमादायाहं तानुपासदम्। पितृचरणैः सह तेषां साक्षात् परिचयो नासीत्। कदापि ते तैर्न दृष्टाः। नाम्ना पुनः परिचिताः। पाण्डुलिपिमवलोक्य तैरुक्तमस्मासु कञ्चित्कालं तिष्ठत्वेषा। यथाकालमस्याः प्रकाशनाप्रकाशनविषये स्वमभिप्रायं वयं प्रकटीकरिष्याम इति। मासो व्यतीतः, मासद्वयं व्यतीतम्, ततोऽप्यधिकः कालो गतः। अन्ते तैरुक्तं प्रकाशनं वयमभ्युपेमस्तदर्थं च पञ्चाशधिकशतद्वयमितं पारिश्रमिकं वयं दास्यामः। तच्चात्यल्पमिति पितृचरणानां तदभ्युपगमो नाभिप्रेतः। तैः सूचितं पाण्डुलिपिं तेभ्यो गृहाणेति। अहं नैकवारं तानेतदर्थमुपेतो न च ते तां परावर्तयन्। अनन्यथागत्या ग्रन्थः प्राकाश्यमेष्यति, प्रसिद्धा प्रकाशनसंस्थेति तस्य प्रचारोऽपि भूयान् भवेदितिधिया पितृचरणैरल्पराशिं स्वीकृत्य तत्प्रकाशनमभ्युपेतम्। स च बहूनि वर्षाणि वाराणसेयसंस्कृतपरीक्षासु पाठ्यग्रन्थरूपेण निर्धारितः परस्सहस्रैश्छात्रैरधीतः महते यशसेऽकल्पत पितृचरणानाम्।

१९५५ वर्षे तेषां वाराणसीप्रवासकाले तैर्नाना विद्वांसो वाराणसेया दृष्टाः। तेषु श्रीदेवदत्तशर्मोपाध्याया अप्यासन्। परस्परालापकाले श्रीदेवदत्तशर्मभिरुक्तं यच्चौखम्भाप्रकाशनसंस्थाधिकृतैः प्रस्तावतरङ्गिणीपुस्तकपाण्डुलिपिरवलोकनाय प्रकाशनार्हत्वानर्हत्वनिर्णयाय च मयि प्रेषिताऽऽसीत्। सा च मयाऽऽमूलचूल–मालोचिता। अतीव शोभना कृतिः। नैकत्रापि मया स्खलितमुदभावीति।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पितृचरणपार्श्वस्थेन मया श्रुतमिदं वचो मे महते विनोदायाकल्पत। अहो! चित्रा प्रवृत्तिः संस्कृतपण्डितानाम्। सर्वथा दोषदर्शन एव तेषां दृष्टिः। च्युतसंस्कृतिक–प्रयोगाभाव एव शोभनत्वम्। यदि कश्चित् प्रमाद्येत्सोऽकिञ्चिज्ज्ञ इत्युद्घोष्येत। स्खलिताद् भीता एव जनाः संस्कृतभाषणेऽपि नोत्सहन्ते। दोषज्ञेन भाव्यं सहृदयेन न तु दोषैकदृशेति ममात्र मतम्। सत्यमेवोक्तमाचार्यदण्डिना–दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते।

## २८

१९५५ वर्षे मईमासे वाराणसीतोऽहं प्रत्यावृतम्। अम्बालानगरं मया गन्तव्यमासीत्। मध्येमार्गमहं दिल्ल्यां यात्रां स्थगयित्वा हंसराजकालेजप्राचार्यदर्शनार्थं गतः। उक्तं च मया पीएच. डी. शोधप्रबन्धः परिसमापितो मया प्रस्तुतश्च परीक्षार्थम्। तैरुक्तं त्वं सम्प्रति कालेजे कार्यं कर्तुं शक्तोऽसि। न किञ्चित्प्रतिबन्धकं तत्त्वमधुना भवेत्। नेति मयोक्ते तैरुक्तं तर्हि विश्वविद्यालयमनुमत्यर्थमहं पत्रं प्रेषयिष्यामि। गतवर्षे साक्षात्कारानन्तरं विधिवत्त्वं चयनसमित्या चितोऽसि चयनं च तव कालेजप्रबन्धसमित्या विश्वविद्यालयेन चाप्यनुमोदितमासीत्। पीएच्. डी. शोधप्रबन्धं समाप्य त्वमत्र कार्यं कर्तुं शक्त इति तद्विश्वविद्यालयोऽनुमोदतामिति। मन्ये विश्वविद्यालयस्य नात्र काचनापत्तिः स्यात्। अनुमोदितायां तव नियुक्तौ नियुक्तिपत्रं लप्स्यस इति। कतिपयैरेवाहोभिर्लब्धं मया नियुक्तिपत्रं जुलैमासस्य षोडशे दिवसे नवसत्रस्य प्रारम्भे च कालेजे कार्यं प्रारब्धम्। विधिरहो बलवानिति मे मतिः। यं कालेजमहं परित्यज्य गतस्तत्रैवाष्टमासाभ्यन्तरे मया पुनः कार्यं प्रारब्धम्।

कालेजे रामगोपालः संस्कृतविभागाध्यक्षोऽभूत्। प्रख्यातानां वैयाकरणानां पण्डितगङ्गारामशर्मणां रामजसकालेजसंस्कृतविभागाध्यक्षाणां स आसीत् प्रियश्छात्रः। अहं वरिष्ठः प्राध्यापक इत्यहम्मन्यतया एम्.ए. कक्षायाः कालेजीयं ट्यूटोरियलीयाध्यापनम् बी. ए. आनर्स (संस्कृतविषये) कक्षाया अध्यापनं तेनैव कार्यं बी. ए. पास कक्षाया अधिकांशतस्तदानीं प्रवृत्ताया प्रेपरेटरी इत्याख्याया एकवार्षिक्याः कक्षाया अध्यापनं केवलं मयकैव कार्यमिति कृता तेन व्यवस्था। कालेजेषु विश्वविद्यालयेषु चाचार्यपदमतिरिच्यान्येषु पदेषु नियुक्तानामध्यापकानां नियुक्तिसम्पुष्टिर्वर्षानन्तरमेव भवति यदि भवेत्तत्कार्येण सन्तुष्टिः। अन्यथात्वे सम्पुष्टिकालो वा वर्ध्यते नियुक्तिर्वा निरस्ता भवति। यदा कार्यं कुर्वाणस्य मे वर्षं गतं तदा मन्नियुक्तिसम्पुष्टिप्रश्नः समुपस्थितः। विभागाध्यक्षेण तद्विषये



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

स्वमतमुपस्थापनीयं भवति। न मम कार्येण सन्तुष्टिरतो मन्नियुक्तिसम्पुष्टिर्न करणीयेति रामगोपालेन मतं पत्रमारोप्य प्राचार्येभ्यः सूचितम्। असहायस्य सहायः प्रभुरित्युक्तिः सर्वथा चरितार्थतां गता मद्विषये। विश्वविद्यालयेन घोषिते प्रेपरेटरीकक्षायाः परिणामे प्रथमं स्थानत्रयं पञ्चमं च स्थानं हंसराजकालेजच्छात्रै-रेवाधिगतमासीत्। सा च प्रेपरेटरीकक्षा केवलं मयैवाध्यापिताऽऽसीत्, न तत्रान्यः कोऽप्यध्यापको मम सहायोऽभूत्। विवेकचणैर्विचक्षणैः प्राचार्यमहोदयैश्चिन्तितं यत्कथमुत्तमोत्तमे परिणामे मम कार्यं न सन्तोषप्रदमिति शक्यते वक्तुम्। सत्यं द्वेषकलुषितधिया रामगोपालेनैतन्मतमुपन्यस्तं तच्च सर्वथा त्याज्यमिति। एतद्विनिर्धार्य मन्नियुक्तेः सम्पुष्टिस्तैः संस्तुता कालेजीयप्रबन्धसमित्या विश्वविद्यालयेन च सा स्वीकृता। एवं दैवसहायैस्तैर्घोरे संकटे पतितोऽहं समुद्धृतः।

यद्यपि डा. गोवर्धनलालदत्त इति सुगृहीतनामधेयाः प्राचार्यवर्याः भौतिकीत्याख्यस्य शास्त्रविशेषस्यासन् प्रकाण्डपण्डितास्तथाप्यार्यसामाजिका इति वेदादिशास्त्रेष्वप्यभूद् गहना तेषां रुचिः। काले काले मां समाहूय ते मया सह तत्तद्विषयिणीं चर्चां प्रावर्तयन् याऽकल्पत मम बोधप्रकर्षाय। एकदा ते मामपृच्छन्—श्रुतिराह मित्रादभयममित्रादभयं ज्ञातादभयमज्ञातादभयमित्यादि। तत्रामित्रादभयमिति तु बुद्धिमुपारोहति। कथं मित्रादभयं प्रार्थ्यतेऽत्र। यदि कश्चिन्मित्रं तर्हि तस्माद् भयं भवेदेव न। यावदहं प्रश्नमिमं समादधामि तावत्ते स्वयमेवोक्तवन्तः— यदि मित्रं प्रतिकूलतां याति तर्हि यावतीं हानिं स कर्तुं शक्नोति न तावतीममित्रम्। तस्मात्तु वयं सावधाना एव। मित्रं पुनर्द्वितीयमिव हृदयं भवति। गुह्याद् गुह्यतरमपि रहस्यं स जानाति। तदुद्भेदे जनस्य सर्वथा विनाश एव। अत उक्तं मित्रादभयमिति। न केवलमिदमेव। अमित्रादभयमित्यतः पूर्वं तदुक्तम्। एतद्व्याख्यानं श्रुत्वा चमत्कृत इवाहमभूवम्। नातः पूर्वमयं विषयो मया विचारितोऽपि।

कदाचित्तथा सारं मितं च वचस्तेऽवोचन्यथा सूक्तिरूपतामेव तदभजत्, मच्चित्ते च बद्धमूलमभवत्। एकदा मामस्वस्थमवलोवक्य तेऽभाणिषुः किमित्यस्वस्थोऽसि। मयोक्तं वनस्पतिघृतं न मे सह्यं भवति। तत्स्पर्शमात्रेणैव जायते मे कण्ठोपरोधस्तेन चोद्भवतः प्रतिश्यायः कासश्च। दिनद्वयात्पूर्वं मया समोसेत्याख्यं व्यञ्जनं सेवितं तस्यैवायं परिणामो यद्धर्घरितो मे कण्ठः पीडा चापि तत्रोग्रा। त्वया तन्न सेवितव्यमासीदिति त उक्तवन्तः। नाहं सेवितुमैच्छं परं कैश्चिन्मित्रैर्बलवत्प्रेरितोऽहं तदसेविषि। कथं त्वं तत्प्रेरणावशं गत इति ते पुनराहुः। किञ्च, यन्निषेधं विना गतिर्नास्ति तन्निषेद्धव्यमेव। — say no when you must. अद्यापि तेषां वाक्यमिदं श्रुतिकुहरं मे स्पृशतीव।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

## २६

प्रथमे दिने यदाऽध्यापनायाहं गतस्तदा कश्चिच्छात्रो मां दृष्ट्वाऽवोचत् – भवान् कस्यां कक्षायां पठति? अभिनववया अहं तदानीं छात्र इवाभामथवा व्यङ्ग्यमिदमासीत्तस्य। मयोत्स्मयमानेनोक्तमहं पुस्तकालये पठामि, स्वगृहे वा, इह (कालेजे) त्वादृशानध्यापयितुमेवागच्छामि। मद्वचः श्रुत्वा स किञ्चिलज्जित इवाभात्। अहं चिरं तद्वचः स्मरन्नहसम्।

दिल्ल्यां (हंसराजकालेजे) नियुक्तोऽहमिति मया स्वकीय आवासोऽपि कल्पयितव्य आसीत्। कतिपयानि दिनान्यहं डा. सत्यदेवचौधरीगृहमेवाध्यवात्सम्। मध्याह्ने कालेजसमीपवर्तिनि बंगलोरोड इत्याख्ये मार्गे, लिली इत्याख्ये भोजनालयेऽहमाशिषम्। एकदा भुञ्जाने मयि कश्चिज्जनस्तत्र समागत्य भोजनालयाधिपतिं मन्दस्वरेणासुसूचद्यत्तन्निकट एव कश्चिदावासो भाटकार्थं सुलभ इति। तद्वचो मयाऽपि श्रुतम्। अहमासं तदाऽऽवासार्थी। अहं भोजनालयाध्यक्षमवोचम्–अहमस्यावासार्थी। स तमावासं मां दर्शयितुमन्वमन्यत मया समं तत्रागच्छदपि च। स आवासो हंसराजकालेजच्छात्रावासस्यैकपार्श्वे पारेपथं गुप्तबिल्डिंगइत्याख्यस्य वेश्मनः प्रथमभूमावास्त। केनचित्कुटुम्बेन त्रिकक्षात्मक आवासो भाटकेनावक्रीत आसीत्। तेभ्य एव त्रिभ्यः कक्षेभ्य एकं कक्षं मार्गपुरोभागस्थं तत्कुटुम्बप्रधानपुरुषोऽवक्रयार्थं दित्सति स्म। स्नानागारं शौचागारं च तत्कुटुम्बकेनान्येन जनेन तत्कक्षस्थेन यथाक्रमं यथापेक्षं चाप्युपयोज्ये आस्ताम्। यदा तत्कुटुम्बिनः स्त्रीपुंसा मां न्यशाम्यन्नाहं कृतदार इति चाजानंस्तदा चिन्ताचान्तचेतसः समभूवन्। असंस्तुतोऽयञ्जनोऽभिनवे वयसि स्थितः सुदर्शनश्च, आचारवान् वा भवेद् दुराचारो वेति मम तत्कुटुम्बेऽवस्थितौ ते सहसा कमपि निर्णयमारोढुं न प्राभवन्। तदा तद्गृहिणी निपुणं मां निभालयन्ती शनैः शनैरवदत्–आकृत्या तु दुराचारो न प्रतीयते। आकृतयश्चाविसंवादिन्यो भवन्ति प्रायेण। तथापि यद्यस्य कदाचिच्छीलभंगो लक्ष्येतापि तर्हि भाग्यमेव नोऽपराध्येत्। तद्वचः श्रुत्वा सर्वैरपि निर्णीतं तमावासमधिवस्तुमहमर्ह इति। अपेक्षितं भाटकं मया कुटुम्बप्रधानपुरुषाय प्रदत्तं यथापेक्षितं शुल्कं (कमीशन) च भोजनालयाध्यक्षाय यस्यावासानां भाटकारोपणमपि व्यवसाय आसीदिति मया तद्दिन एव ज्ञातम्। अविलम्बमेव मया सर्वाऽपि स्वकीया सामग्री तस्मिन्कक्षे स्थापिता। हंसराजकालेजस्यानतिदूरे स कक्ष इति मम तत्र वासः सौविध्यायाकल्पत। वर्षं तत्राहं स्थितः। दिल्ल्यां नियुक्तोऽहमिति मम पितरावपि तत्रागन्तुमैहेताम्। तद्वशाद् बृहत्तर आवासो ममापेक्षित आसीत्। एकदा मम स्वसा मां द्रष्टुं तं कक्षमुपेता गुप्तकुटुम्बकं मद्भ्रात्रा पित्रागमनवशादन्य आवासोऽपेक्षित इत्यवोचत्। तद्वचस्तस्य


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कृते वज्रपातसममेवासीत्। अतीव शालीनः शिष्टश्चायमिति मुक्तकण्ठं तन्मामभ्यष्टौत्, अवादीच्च महानसे पाकादिकमपि यथापेक्षं क्रमेण कर्तुं शक्यम्। नानेनास्मद्गृहादन्यत्र गन्तव्यमिति। असम्भवं तत्रावस्थानमितिकृत्वाऽहं ततोऽपगत एव। कमलानगरे कोल्हापुररोडस्थे कस्यापि शिष्यधर्मावलम्बिनो गृहस्य तृतीयवेदिकायामेक आलयो मयाऽऽवासाय कल्पितः। तत्र कक्षद्वयमासीत्।

द्वितीयमाश्रमं संक्रमितुं मे काल इति मे पितृचरणाः पितृव्याश्च मदनुरूपां कन्यामन्वेष्टुं प्रायतन्त। वृत्तपत्रेषु कन्ययाऽहमर्थीति विज्ञापितमपि तैः। अम्बालाछावनी इत्यत्र मैजिस्ट्रेटपदभाजः केचनाधिकारिण आसन्। मम पितृव्यास्तत्कन्यया मे सम्बन्धमैच्छन्। परं यदा तेऽधिकारिणो मम वेतनं केवलं रूप्यकशतद्वयमेवेत्यजानंस्तदा न रुचिं प्रादर्शयन्।

अत्रान्तरे किञ्चिद्विचित्रमिव घटितम्। डा. सूर्यकान्त एकदा सपत्नीको दिल्लीमुपागतो दरियागंजस्थाने मेहरचन्द्रलछमनदासप्रकाशनसंस्थाध्यक्षस्य खज़ांचीरामजैनस्य गृहे च स्थितः। एकस्मिन्दिने तच्छिष्या मिराण्डा हाउस संस्कृतप्राध्यापिका संयुक्ता चौधरी तं रात्रिभोजनार्थं स्वगृहे कालेजपरिसरस्थे न्यमन्त्रयत। डा. सूर्यकान्तेन सहाहमपि तद्गृहं गतः। तद्गृहिणी दरियागंज एव स्थिता। भोजनादिना महान् कालो गतः। रात्र्या द्वितीयः प्रहरः प्रारब्धः। अतिक्रान्तभूयिष्ठायां रजन्यां दरियागंजं प्रति प्रतिगमनं कष्टाय भवेदिति मनसिकृत्य संयुक्तयोक्तं भवान् रजनीं मद्गृह एव यापयत्विति। मद्गेहिनी तु दरियागंज आस्त इति डा. सूर्यकान्तेनोक्तम्। ततः किम्? दूरभाषेण वयं तां सूचयिष्याम इत्यवादीत्संयुक्ता। तर्हि त्वं वाञ्छसि यदावां चातकयुगलमिव सर्वां रात्रिं परस्परविरहेणैव यापयेव – अवोचद् डा. सूर्यकान्तो नर्मगर्भं वचः। तच्छ्रुत्वाऽबोधोपहत आयकरविभागोच्चाधिकारी संयुक्तापतिर्दीनानाथचौधर्यप्राक्षीत् – कोऽयं चातको नाम? तदा सूर्यकान्तेन तस्मै स्पष्टीकृतं यच्चातक इति पक्षिविशेषस्य सञ्ज्ञा। चातकश्चातकी च नद्याः परावरतटयोः स्थितावाक्रन्दन्तौ परस्परविरहेणैव रात्रिं यापयत इति। संस्कृतकविसमय एष इति तस्यासंस्कृतज्ञस्य नासीज्ज्ञातः। तत्सर्वमपि दृष्ट्वाऽभून्मे मनसि यदि मम भार्याऽप्यसंस्कृतज्ञा भवेत्तादृशी दशा मेऽपि भवेत्। साऽपि कथयेत्कोऽयं चातको नाम। अतः संस्कृतज्ञैव मयोढव्येति। तद्रात्रौ संकल्पमिममहमारुक्षम्।

तदनन्तरं नैके प्रस्तावा एतस्माद्धेतोरेवानभ्युपेताः। तेष्वेको विशेषोल्लेखमर्हति। पटियालानगर एकः श्रेष्ठी रक्तमरिचव्यवसायिमूर्धन्यः स्वकन्यासम्बन्धं मयैच्छत्। तन्निमन्त्रणेनाहं तां द्रष्टुं पटियालानगरं गतोऽपि। यौतकमपि पर्याप्तं भविष्यतीति स स्पष्टमभाणीत्। जातमात्राया एव कन्यकाया नाम्ना पञ्चविंशतिसहस्ररूप्यकाणि तेन धनागारे न्यस्तानि। विंशतिवर्षदेशीया तत्कन्यका तदानीमिति वार्षिक्या



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

वृद्ध्या स राशिः कियतीं वृद्धिं नोपगतः स्यात्। तत्त्वन्यदेव। श्रेष्ठिषु मूर्धन्य इति कन्याविवाहकाले स्वसामर्थ्यानुसारेण तेन भूयो धनमुपकरणादिकं च देयं भवेदेव। कन्या कृष्णवर्णा नातिमधुराकृतिर्मयाऽन्वभूयत। केवलं बी. ए. कक्षां यावदेव तयाऽधीतमपि। संस्कृतेन सुतरामसंस्तुता। यद्यपि हावभावादिना कन्या मयि रुचिं प्रादर्शयत्तथाऽपि नाहं तां दारान् कर्तुमभ्युपागाम्। कदाचित् तत्स्मृतिर्मां व्यथयति। ननु मनोभंगस्तस्या मया सम्पादितः। मनोभंगश्च यस्य कस्यापि मां तुदति।

दिल्लीशाखानगरजंगपुरास्थामन्यामेकां कन्यकामहं द्रष्टुं गतः। सा तु संस्कृताध्यापकोऽहमित्येव मयि विरक्ता! तस्या एकः सम्बन्धी लखनऊनगर आसीत्। स मम श्वशुरमजानात् मद्धर्मपत्नीं चापि। एको योग्यो वर उषसः कृते मम मनस्यस्तीति सोऽवोचत्। मम सम्बन्धिन्याः कन्यकायास्तेन सम्बन्धो नाभूदित्यन्यदेतत्। तत्सन्दर्भादेव मया स दृष्टः। स उषसः कृत उपयुक्तो मे भाति। यदि रोचेत भवद्भ्यः क्रियतां तदर्थं प्रयत्नः। मद्धर्मपत्न्या ज्येष्ठस्वसा दिल्ल्यामेवासीत्। सत्यप्रकाशनामा तत्पतिश्चित्रगुप्तरोडस्थे डी. ए. वी. हाईस्कूले प्राध्यापक आसीत्। हंसराजकालेजीय आङ्ग्लभाषाऽध्यापको डा. तुलसीराम आसीत्तस्य सुहृत्। तेन मद्विषये तुलसीरामेण सह कृता चर्चा। एकस्मिन्दिने स हंसराजकालेजं समागतस्तुलसीरामेण चावयोः कारितः परिचयः। परिचाय्य तुलसीरामस्त्वपगतः सत्यप्रकाशः—मम भाविन्याः पत्न्या भगिनीपतिरेतदभिख्य आसीत्—अहं च कलेजीय उद्याने गतागतं कर्तुमारब्धौ। तत्रावयोर्मिथो भाषणमेवमाविरासीत्—

सत्यप्रकाशः – किमूढभार्यो भवान् ?

अहम् – नहि।

सत्यप्रकाशः— अस्ति किं दारान्कर्तुमभिलाषः ?

अहम्— आम्।

सत्यप्रकाशः— अस्ति ममैका श्याली या लक्ष्मणपुरमधिवसति। लक्ष्मणपुरविश्वविद्यालयात्तया संस्कृतविषये एम्. ए. परीक्षोत्तीर्णा द्वितीयं स्थानं च प्राप्तम्। अधिगतनानास्वर्णपदकाऽतीव मेधाविन्यसौ।

अहम् – अत्र विषये पितृचरणा भवता द्रष्टव्याः। त एवात्र प्रमाणम्।

सत्यप्रकाशः— ते तु द्रष्टव्या एव। भवतोऽत्र सहमतिरस्ति न वा ?

अहम् – (स्वगतम्) संस्कृतज्ञेति मे सहमतिरस्त्येव।

(प्रकाशम्) यदि पितृचरणानां सहमतिस्तर्हि ममाप्येव।

सत्यप्रकाशः – कदा वा कुत्र वा ते द्रष्टव्याः?

अहम्— श्वोऽपराह्णेऽस्मद्गृहे (गृहसंकेतं तान् सूचयामि)


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अपरेद्युः सत्यप्रकाशोऽस्मद्गृहमागतः पितृचरणैश्च संगतः।

सत्यप्रकाशः – ममागमनप्रयोजनं जानीयुरेव श्रीमन्तः?

पितृचरणाः– आम्। सत्यव्रतेन सर्वं मे निवेदितम्।

सत्यप्रकाशः – तत्र कथं पश्यन्ति श्रीमन्तः?

पितृचरणाः – संस्कृतज्ञोढव्येति सत्यव्रतस्य प्रथममेव चिन्तितोऽर्थः। तं यदि विधिरेव सम्पादयति तर्हि किमतः प्रियं स्यात्।

सत्यप्रकाशः – अहम् अत्र किञ्चिन्निवेदयितुमीहे। मम श्वशुरस्य न सामर्थ्यं यौतुकप्रदाने। तस्य षडपत्यानि, त्रयः सुतास्तिस्रश्च दुहितरः। ते सर्वेऽपि भूयोविद्याः। तदर्थं तेन व्ययितो महानर्थराशिः। नास्ति तस्मिन् सम्प्रति प्रचुरं द्रव्यम्।

पितृचरणाः – न वयं द्रव्येणार्थिनः। कन्यामेव तु गुणवतीं वयं प्रार्थयामहे।

सत्यप्रकाशः– तदेतदनुरूपं भवताम्। यद्यभिप्रेतं भवतां, कन्यां द्रष्टुमर्हन्ति भवन्तः। सा लक्ष्मणपुरादाकारयिष्यते। भाविदम्पती अपि तारामैत्रकमनुभवताम्।

पितृचरणाः – शोभनम्। यदा सा दिल्लीमुपैति वयं सूचनीयाः।

कतिपयदिनानन्तरं कन्या दिल्लीमुपेता। तत्साक्षात्कारस्तत्स्वसुर्मोक्षलताया गृहेऽभूत्। साक्षात्कारावसरे मम पितृचरणा अम्बा स्वसा च समुपस्थिताः। मोक्षलताऽचिरप्रसूतिरिति न सोपस्थिता। श्वशुरोऽकर्मण्य इति तस्मात्प्रति[१७] श्वश्रूरेव कन्यया सहागता लक्ष्मणपुरात्। व्यञ्जनादिपरिवेषणं कन्ययैव कृतम्। मिष्टान्नादिकं विपणित एवानीतमासीत्। केवलं पक्ववटा एव गृहे साधिता अन्ययोषाभावे सति परिशेषन्यायेन कन्ययैव। स्वादिष्ठास्ते कन्यायाः पाककर्मणि कौशलं रुचिं चाभिव्यञ्जन्। तेन कामपि निर्वृतिमहमन्वभूवम्। अद्यतन्यः शिक्षिताः कन्यका न पाककर्मणि रुचिं दधति। रसवत्यां प्रवेश एव तासां वैरस्याय कल्पते। परम्परावाहि कुलमस्माकमिति तादृश्याः कस्याश्चन वधूरूपेणास्मद्गृहागमनं न सुखाय स्यादिति नापेक्ष्यते बहु वचः।

शीलसंस्कारसम्पन्ना प्राप्तोच्चशिक्षा किञ्चित्सुरूपा च कन्यकेति सर्वेभ्योऽप्यरोचत। पितृचरणा इयम् अंगीक्रियतेऽस्मत्कुलवधूरिति मतमाविरकुर्वन्। विवाहतिथिस्तु पश्चान्निर्णेष्यत इति चाब्रुवन्।

तिथिविषये दैवज्ञैस्तैर्विचारः प्रवर्तितः। मार्चमासप्रथमसप्ताहान्ते तारः (शुक्रः?) अस्तं यास्यति, ततः पूर्वमेव विवाहो भवतु, नो चेत् षण्मासानन्तरं तस्मिन् पुनरुदिते स्यात्तस्य सम्भव इति त ऊचुः। केवलं हिन्दूकालेजसंस्कृताध्यापको ज्यौतिषिकः श्रीरामकृष्णभट्टो मार्चमासस्याष्टमाद्दिवसादनन्तरं ताराया

---

१७ प्रतिः प्रतिनिधिप्रतिदानयोः (१.४.८२) इत्यनेन कर्मप्रवचनीयसञ्ज्ञायां प्रतिनिधिप्रतिदाने च यस्मात् (२.३.११) इत्यनेन पञ्चमी। तस्मात् प्रति=तत्प्रतिनिधिरूपेण।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अस्तगमनमुवाच। अष्टमो दिवस एव विवाहदिवसो भवत्विति कन्यापक्षीया अस्माभिः सूचिताः। पूर्वं विवाहो दिल्ल्यामेव भवत्विति सर्वेषां मतमासीत्। अदूरेऽष्टमो दिवस इति कन्यापित्रा दूरलेखद्वारा सूचितं यदि विवाहसंस्कारो लक्ष्मणपुरे भवद्भिः स्वीक्रियते तर्हि सोऽष्टमे दिनेऽपि शक्य इति। तथास्त्विति पितृचरणैरन्यैश्च स्वीकृतम्। वयं पञ्चविंशतिर्वरयात्रिका रेलयानेन लक्ष्मणपुरमुपेता दिनं रात्रिञ्च तदध्युष्य नवमे दिवसे रात्रौ ततः प्रतिप्रस्थिताः। दशमे दिने प्रातश्च दिल्लीमुपेताः। अन्येषां वरयात्रिकाणां तृतीयश्रेण्यां कृता व्यवस्था कन्यापक्षीयैः। मम च धर्मपत्न्याश्च कृते मध्यमश्रेण्याम् (तदानीम् इण्टर क्लास इत्याख्या द्वितीय–तृतीय–श्रेणीमध्यगताऽप्येका श्रेण्यासीत्)। आवयोः श्रेण्यामेव भाईजी अप्यासीत्।

अस्मदावासे कक्षद्वयमेवासीत्। तयोरेकस्मिन् कक्ष आवाभ्यां मधुयामिनीति लोके विश्रुता विवाहप्रथमरात्रिर्व्यतियापिता। तदनन्तरमावां शिमलां प्रति गतौ तत्र च सामोदं कतिचिद्दिनानि व्यत्ययापयाव। लक्ष्मणपुरतो दिल्ली–प्रत्यागमनानन्तरं द्वित्रैरेव दिवसै रात्रिभोजरूपः स्वागतोत्सवः समायोजितो यत्राशीतिसंख्याकाः सुहृदो बान्धवाश्च समुपस्थिताः। तद्व्यवस्था हंसराजकालेज–कैण्टीनाध्यक्षेण कृता। तत्सौष्ठवमद्यापि स्मरामि।

वध्वा कतिपयदिवसानन्तरं मातृकुलं प्रति गन्तव्यमिति समुदाचारः। वध्वोषसा सार्धमहमप्यगाम्। मध्येमार्गं तया स्वपितुर्लीलाविषये बहूक्तम्। सर्वमपि कार्यं ते यथाकालमेव कुर्वन्ति, कालातिपातस्तेषामसह्यः। कल्यवर्तः प्रातरष्टवादनात्पूर्वमेव सेव्यः। अतिक्रान्ते तत्काले न स सुलभः स्यात्। मया तदा परिहासेन विजल्पितमावां तु न कालेन तद्गृहं प्राप्तुं शक्नुवः। यदि शक्नुवोऽपि स्नानादिकादिभिरष्टवाद–नादधिक एव कालो जायेत। तदोषसा किञ्चिद्व्रीमूढयोक्तं नायं भवत्कृते नियमः, केवलमस्मत्कृत एव। तयेदमप्युक्तमासीद्यत् तत्पिताऽपत्यजातं प्रभातप्रायायां शर्वर्यां जागरयति दन्तधावनादिकाय च प्रेरयति, तदर्थं च दृढमनुशास्ति। मूलतः स कुल्याभियन्ताऽऽसीत् (canal engineer) परं तस्य प्रकृतिरेवैतादृशी यत्स स्थिररूपेण कुत्रापि किमपि कर्तुं न शक्नोति। केनापि विप्रकृतश्चेत्तत्क्षणमेव सेवावृत्तिं त्यजति। सम्प्रति न स किमपि करोति। सर्वामपि गृहसंविधां तत्पत्नी (धर्मपत्न्या माता) समायोजयति। तस्यां यत्किञ्चिद्धनमस्ति तत् तत्पित्रा यौतकरूपेण तस्यै दत्तमासीत्। तद्वृद्ध्यैव सा सर्वमपि सम्पादयति।

पितुर्गुणकीर्तनावसरे धर्मपत्न्या कालान्तरे प्रसंग एको वर्णितो यस्तस्य सूक्ष्मेक्षिकामभिव्यनक्ति। तदीयेयं प्रकृतिर्यत्स सन्देशं पत्रादिमाध्यमेनैव प्रैरिरत्। वाचिकसन्देशप्रेषणं नासीत्तस्य स्वभावः। एकदा कश्चिद्धूर्तो लक्ष्मणपुरस्थेभ्यस्तत्प्रति -वेशिभ्यस्तदपत्यादिविषये सर्वं ज्ञात्वा तत्तनयं पुण्यपत्तनस्थमुपेतस्त्वत्पिताऽमुकं द्रव्यराशिमपेक्षते त्वरितमेव, अहं च लक्ष्मणपुरं गच्छाम्येव, स राशिर्मह्यं दीयता-



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

महं तं तस्मायर्पयिष्यामीत्युवाच। तत्तनयः कृष्णकुमारः पितुः प्रकृत्या परिचितस्तं पप्रच्छ – अस्ति त्वयि पत्रं तत्प्रदत्तम्? नास्तीति स आह। मन्नाम्ना मत्तनयो वाच्य इत्येव स उक्तवान्। नैवं कदाचिन्मज्जनकः करोतीति सन्दिहानेन तेनोक्तं नैवाहं द्रव्यं ददामि। तज्ज्ञात्वा स व्यंसकोऽपगतः। कृष्णकुमारो यदा कालान्तरे लक्ष्मणपुरमगमत्तदा पृष्टस्तेन जनकोऽपि तेन द्रव्येणार्थिना तदाहरणार्थं कश्चिज्जनः प्रेषितः? नैवेति पित्रोक्तम्। अहो पुरुषव्यंसकोऽसौ मां वञ्चयितुमुपागात्। तद्वचसि न विश्वसता मया सम्यगेव कृतम्। भवत्प्रकृतिमहं साधु वेद। अत एव न मां वञ्चयितुमलमभूत्सः।

केवलमाह्निकेषु कृत्येष्वेव स स्वमतं प्राचीकटदन्यत्र तु स स्त्रीप्रमाण एवासीत्। तदपत्यजातमात्मनिर्भरमेवासीत्। मद्धर्मपत्न्या छात्रवृत्तिसाहाय्येनैव स्वकीया शिक्षा प्रवर्तिता। विवाहसम्भारेऽपि तया स्वयमेव प्रक्रान्तमा–निमन्त्रणपत्रमुद्रणादातद्वितरणम्।

## ३०

बी. ए. कक्षायां धर्मपत्नी न केवलं लक्ष्मणपुरविश्वविद्यालय एवापि तु सर्वेष्वप्युत्तरप्रदेशीयेषु विश्वविद्यालयेषु सर्वाधिकानंकान् प्रापदविन्दच्च परोलक्षाणां छात्राणां लोभनीयं कुलपतिस्वर्णपदकमन्यच्च स्वर्णपदकत्रयम्। एम्. ए. कक्षाध्ययनं हिन्दीविषय एव कर्तव्यमिति तदा तस्या मनस्यासीत्। विश्वविद्यालयच्छात्रवृत्त्यर्थं यदा सा कलासंकायाध्यक्षश्री को. अ. सुब्रह्मण्यअय्यर महोदयमुपासीदत्तदा तेनोक्तं छात्रवृत्तिं लप्स्यसे यदि संस्कृतविषयमध्येष्यसे। श्रीसुब्रह्मण्यअय्यरः संस्कृतविभागाध्यक्षोऽप्यासीत्कलासंकायाध्यक्षश्चापि। स्वस्मिन् विषये तस्यासक्तिः स्वाभाविक्येव। सोऽकामयत मेधाविनी छात्रा संस्कृतमेवाधीयीत। अतश्छात्र–वृत्तिप्ररोचनां स तदर्थमुपायुक्त। धर्मपत्न्या अर्थेनार्थ आसीदिति तस्या हिन्द्यां विशिष्टाभिनिवेशे सत्यपि अय्यरमहोदयाज्ञामेव सा बह्वमन्यत तृणाय मत्वाऽन्यत्सर्वम्। एवं तस्या संस्कृते प्रवेशोऽभूत्। द्वितीयं च स्थानं तया एम्. ए. परीक्षायामधिगतम्। वस्तुतस्तु प्रथमस्थानकल्पमेव तदभूत्। प्रथमस्थानभाजा कन्यकया प्राप्तेभ्योऽङ्केभ्यस्तस्या अंका एकसंख्ययैव न्यूना आसन्। विधिरपि कदाचिदेवं विडम्बयति। एम्. ए. परीक्षामुत्तीर्णया तदा रूसीभाषाप्यधीता प्रवेशिकापरीक्षा (सर्टिफिकेट कोर्स इन रशियन) चोत्तीर्णा।

तस्या विवाहसमये तदीयाः सुब्रह्मण्यमअय्यर – कान्तिचन्द्रपाण्डेय – सत्यव्रतसिंहादयो विद्वत्कुलमौलिमण्डनायमानाः संस्कृताध्यापकाः समुपस्थिता



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

आसन्। वैयाकरणमूर्धन्यो वाक्यपदीये कृतभूरिपरिश्रमः पितृचरणव्याकरण-वैदुषीमुग्धान्तःकरणः श्रीअय्यरमहाभागो विवाहदिने मद्धर्मपत्नीमवोचत् – 'यस्मिन् कुले त्वं गच्छसि तत्रानवरतं ज्ञानगङ्गा प्रवहति। तवाध्ययनं तत्र निर्बाधमनवरतं च प्रसरिष्यतीति नाहं सन्देह्मि। परमं ते भागधेयं यत्तत्कुलवधूस्त्वं भवित्री। शिवाः सन्तु ते पन्थानः। स्मृतिचिह्नरूपेण रुचिरमुत्कीर्णैका दारवी मञ्जूषाऽपि तेन तस्यायुपहृता याऽद्याप्यस्मासु स्थिता ज्ञानतपोनिधिं तं स्मारयति।

पीएच्. डी. शोधकार्यं धर्मपत्न्या विवाहानन्तरमेव कृतम्। १९६० तमे वर्षे तया दिल्लीविश्वविद्यालये प्रवेशो लब्धः। तदानीन्तनो विश्वविद्यालय-संस्कृतविभागाध्यक्षो डा. नरेन्द्रनाथचौधुरीमहाभागस्त्वमेवास्याः शोधनिर्देशको भवेति मामाह। ममासीत्तत्र महान् सङ्कोचः। पत्नी शोधच्छात्रा पतिश्च शोधनिर्देशक इति किं नु लोकोऽत्र वक्ष्यति? वाचां साधुत्वे दुर्जनो जन इति विदितमेव। मया साम्रेडं प्रार्थितोऽपि विभागाध्यक्षः स्वस्य शोधनिर्देशकत्वं नांगीकृतवान्। यदा प्रार्थितस्तदा विचारयिष्याम्येतमर्थमिति सोऽवोचत्। परं यदा प्रवेशानुमतिपत्रं लब्धं धर्मपत्न्या तदा ममैव नाम शोधनिर्देशकत्वेनासीत्। किं तस्य मनस्यासीदिति नाद्याप्यवधारयामि। शोधविषयो धर्मपत्न्या आसीद्विंश्याः शताब्द्याः संस्कृतरूप–काणामध्ययनमिति। अध्ययनात्पूर्वं रूपकाणां सङ्ग्रह एव नासीत्सुकरः। न रूपकाण्येकत्र सुलभान्यासन्। माधुकर्या वृत्त्या तत्सञ्चयः कर्तव्योऽभूत्। यतः कुतोऽपि या काऽपि सूचना प्राप्यत तदनुसारेण रूपकग्रन्थप्राप्त्यर्थं प्रावर्त्यत प्रयत्नः। पुस्तकविक्रेतृषु कतिपयान्येव रूपकाणि सुलभान्यासन्, दश वा पञ्चदश वा। अन्यानि त्वन्यत एव प्राप्तव्यान्यासन्। अर्वाचीनसंस्कृतग्रन्थानां विषय इदमेव काठिन्यम्। अधिकांशतः संस्कृतग्रन्थकर्तारः स्वयमेव तान् प्रकाशयन्ति। तद्विक्रयादिविषये ते न किञ्चिज्जानन्ति। प्रकाशितमुद्रितग्रन्थसम्भारस्तेष्वेव तिष्ठति, जनैरज्ञातश्च कालेन विपरिलोपं याति। यतो कुतोऽपि तद्विषयिणीं सूचनां प्राप्य तत्प्राप्तौ यत्नोऽनुष्ठेयो भवति। विंश्यां शताब्द्यां कानि कानि रूपकाणि स्वकीये क्षेत्रे प्रकाशितानीति सूचनां प्रेषयितुं नाना पत्राणि मया तत्तप्रदेशीयान् सुहृदः प्रेषितानि। तेष्वनेकैः प्रेषिता सूचना। कतिपयैः पुस्तकान्येव प्रेषितानि। अत्र विषय एको मर्मस्पर्शी प्रसंगो यमत्रोपस्थापयितुमिच्छामि। गुर्जरप्रदेशे मौर्वीनगरे राजकीयसंस्कृतपाठशालाध्यक्षेण पण्डितशंकरलालमाहेश्वरेण नाना रूपकाणि प्रणीतानीति गुर्जरवाङ्मयेतिहासतो विज्ञाय मया तत्संकेतेन पत्रमेकं प्राहायि। नाना मासान्न मया तत्प्रतिवचः प्रापि। तत्प्राप्तौ नैराश्यं यदाहमवालम्बिषि तदैकस्मिन् दिने बृहदाकारं पिण्डम् (बंडलम्) एकं डाकद्वाराऽहमलप्सि यत्र श्रीशंकरलालमाहेश्वरकृतानि सर्वाण्यपि रूपकाण्यासन्। तत्पिण्डं तत्स्थानापन्नेन



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पाठशालाप्राध्यापकेन प्रेषितमासीत्। तेन लिखितमासीद्यत् श्रीमाहेश्वरो नेहलोके सम्प्रत्यस्ति। तद्गृहं राजाज्ञयाऽऽधिकरणिकस्याधिकारेऽस्ति तालकितञ्च। तत्प्रवेशनिर्गमयोर्निरुद्धयोर्विशेषाज्ञया तत्प्रविश्य तद्ग्रन्थसम्भारं विचायं विचायं तत्प्रणीतानि रूपकाण्यभ्युच्चित्य प्रेष्यन्ते। तेषु द्वित्राणि कीटानुविद्धानि। तदर्थं क्षन्तव्योऽयञ्जन इति।" तत्पत्रं वाचयित्वा नाहं मनःसंयमनेऽलमासम्। तुषारवर्षी सहस्यमेघ इव सहसाऽऽर्द्रनयनोऽहं समवर्तिषि। सन्त्येतादृशा अपि जना अस्मिंल्लोके ये परहितायात्मानमेवमायासयन्ति। सर्वथा वन्दनीया अभिनन्दनीयाः सुकृतिनस्ते कृतिन इति निर्मायं ब्रवीमि। एवमेव केशवच्छत्रेशास्त्रिणा स्वकीयानां सर्वेषामपि रूपकाणां काले काले यत्र तत्र संस्कृतपत्रिकासु प्रकाशितानामनुमुद्रणानि संगृह्य मयि प्रेषितानि। परमादरभाक् छत्रेशास्त्री। तन्नाटकचक्रं च। तदपि स्मृतिरूपेण मय्यस्ति। कालेन विस्तृतभूमिकासंवलितं कृत्वा तत्प्रकाशयितुमिच्छामि दीर्घमायुः स्यान्मे चेत्।

## ३१

कालेन शतत्रयादप्यधिकानि संस्कृतरूपकाणि विंश्यां शताब्द्यामेव रचितानि मया प्राप्तानि मद्गृहशोभां सम्प्रति वर्धयन्ति। अत्र प्रसंगप्राप्तोऽयं विषय इति स्वकीयग्रन्थसंग्रहविषयेऽपि किञ्चिद्विवक्षामि। सन्ति मयि सम्प्रति परःसहस्रा ग्रन्थास्तत्तद्विषयकाः। मद्वेश्मभूतलभागे नाना कक्षेषु ते स्थापिताः। तेष्वल्पीयांस एव पितृचरणैः संगृहीताः। भूयसी संख्या तेषु मत्संगृहीतानामेव। काले काले नाना देशा मया गमीकर्मीकृताः। ततो ग्रन्थसंग्रह एवासीन्मम प्रवृत्तिः। अस्ति हि सुप्रथित आभाणकः – पुस्तकीभवति पण्डित इति। तन्न्यायमक्षरशोऽनुपालयामि। नाना देशिका वा वैदेशिका वा विपश्चिदपश्चिमा ग्रन्थसंग्रहं मे द्रष्टुमुपयान्ति कञ्चित्कालं च तत्र व्यतियापयन्ति। थाईदेशराजकुमार्याऽपि भारतदेशयात्राप्रसंगे ग्रन्थागारं मे दृष्टमभिष्टुतं च। एवं रूसदेशीयो विद्वान् बॉन्गार्ड लेविन् स्वीडनदेशीयः सीगफ्रीड लीनहार्डः, ब्रिटेनदेशीयः ओलिवर गोम्ब्रिच्, इटलीदेशीयाः फिलिपी–स्टिफेनो पियानो–पियान्तेल्ली महोदया ग्रन्थागारं मदीयं दृक्पातेन सम्भावितवन्तः।

संस्कृतपत्रिकाणामप्यपूर्वः संग्रहो मय्यस्ति। भारतस्योत्तरे दिग्विभागे कदाचित्तादृशः संग्रहोऽन्यत्र न स्यादेव। अन्येष्वपि दिग्विभागेषु क्वचिदेकत्र स स्यादिति सन्देह्मि। नं केवलं सम्प्रति प्रकाश्यमानानां पत्रिकाणां संग्रह एव



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

मय्यस्त्यपितु विरतप्रकाशनानामपि नैकासाम्। संस्कृतपत्रिकाणामियं दशा यत् संस्कृतप्रचारेणार्थी कश्चन सुकृती तत्प्रकाशनं प्रारभते नाना वर्षाणि स्वपत्रिकां सञ्चालयति, तस्मिन् दिवंगतेऽथवा साधनानामभावे तदल्पत्वे वा तस्याः प्रकाशनमवरुध्यते। एवंविधाः सन्ति तिरुपतितः पूर्वं प्रकाश्यमाना उद्यानपत्रिका, कालिकातातः पूर्वं प्रकाश्यमानः प्रणवपारिजातः, नवदिल्लीतः पूर्वं प्रकाश्यमाना सम्प्रत्यपि च कदाचिदुद्बुद्धा साहित्यअकादमीसंस्कृतपत्रिका संस्कृतप्रतिभा। मयि सन्त्यासां पत्रिकाणामद्यावधि प्रकाशिताः सर्वेऽप्यंकाः। उद्यानपत्रिकाविषयेऽत्र किञ्चिद्विशिष्य विवक्षामि। तत्संस्थापकाः श्री डी. टी. ताताचार्यमहोदया एकदा प्रसंगवशतो दिल्लीं प्राप्ता मया च दृष्टाः। उद्यानपत्रिकासंस्थापकाः सम्पादकाश्च ते सन्तीत्यहमजानाम्। सम्भाषणप्रसंगे ते मया पृष्टाः सन्ति तेषु तत्पत्रिकाया विगतवर्षाङ्का इति। तैरुक्तं स्युर्नाम। नात्र विषये निश्चयेनाहं किञ्चिद्वक्तुं शक्तः। पञ्चाशद्वर्षाणि पत्रिकायाः प्रारब्धायाः। मासिकीयं पत्रिका अङ्कानामस्य अद्यावधि षट्शती प्राकाश्यमिता स्यात्। महतः पत्रिकानिचयात्तदन्वेषणं वर्षं वर्षं कृत्वा च पृथक्करणं सुतरामायाससाध्यम्। तथापि प्रयतिष्येऽहम्। तिरुपतिं प्रति गतः स मासेनैव सर्वानप्यद्यावधि प्रकाशितानङ्कान् प्रसेवेषु कृत्वा रेलपार्सल-द्वारा प्रहितवान्। सोऽयमतिदुर्लभः पत्रिकासम्भारो मयि वर्तते। वर्षं वर्षं पृथग् ग्रन्थरूपेण द्वादशाङ्का मया रेक्सिनाख्येन पटविशेषेण बन्धनं प्रापिताः, पत्रिकासंख्या वर्षसंख्या च स्वर्णाक्षरैरङ्कैश्च मया कारिते। बहु तत्र व्ययितं मया। एवमेव संस्कृतसाहित्यपरिषत्पत्रिकाया विगतसप्ततिवर्षीया अंका मयि सन्ति। ते परिषदः सचिवैर्डा हेरम्बनाथचट्टोपाध्यायमहोदयैर्मयि प्रेषिताः।

पत्रिकाविगताङ्कसंग्रहप्रसंग एकं दुःखदं प्रसंगमपि चर्चयामि। मम हंसराजकालेजकार्यप्रारम्भात्किञ्चिदनन्तरमेवाहं कालिकातां गतः कार्यविशेष–प्रसंगतः। तत्र मया विद्वन्मूर्धन्यो डा. क्षितीशचन्द्रचट्टोपाध्यायो दृष्टः। स मञ्जूषापत्रिकायाः संस्थापकः सम्पादकश्चासीत्। यथा कालान्तरे उद्यान–पत्रिकाविषये मया ताताचार्यमहोदयः पृष्ट एवं चट्टोपाध्यायमहोदयोऽपि पृष्टो मञ्जूषाया विगताङ्का उपलब्धुं शक्या न वेति। तेनोक्तं बाढमुपलब्धुं शक्याः। मूल्यविषये पृष्टेन तेनोक्तं शतद्वयाधिकसहस्रं रूप्यकाणां तदर्थं देयं भवेदिति। एतावानर्थराशिर्मयि तदानीं नासीत्। मया तु जीविकोपार्जनं प्रारब्धमेवासीत्। किञ्चाष्टत्रिंशद्वर्षपूर्वमेतावद् द्रव्यमतिप्रचुरं गण्यते स्म। चट्टोपाध्यायवचः श्रुत्वा मया न किमपि वक्तुं पारितम्। कञ्चित्कालं तूष्णीमेव स्थितोऽहम्। तदनु पश्चात्सूचयिष्यामीत्युक्त्वा ततोऽहमपेतः। अतीतानि कतिपयानि वर्षाणि। पत्रिकापूर्वतनाङ्कप्राप्तौ पुनरप्युत्सुकमभून्मे मनः, तदर्थं च प्रारब्धो मया यत्नः। परं दुर्भाग्यवशात् तदा चट्टोपाध्यायमहाभागो लोकमिमं विहाय लोकान्तरं गतोऽभूत्


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पत्रिकाविषये च न कोऽप्यजानात्। सम्प्रति चिन्तयामि यदि कथञ्चित्साह–समहमारोक्ष्यम् ऋणादिकं च कृत्वाऽपेक्षितं द्रव्यं समग्रहीष्यं मञ्जूषायाः सर्वेऽपि प्रकाशिता अङ्का मय्यभविष्यन्। परं यद् भावि तु तद् भावि। नैवं विधात्रा विहितमासीत्।

संस्कृतपत्रिकाणां चर्चाप्रसंगे मदीय एकः संकल्पोप्यत्रोल्लेखमर्हति। पितृचरणाः १९८७ वर्षेऽप्रैलमासस्य नवमे दिवसे दिवं गताः। तस्माद्वर्षात्प्रभृति तत्स्मृतिरूपेण प्रतिवर्षं प्रत्येकं संस्कृतपत्रिकायै शतं रूप्यकाणि प्रहेतव्यानीति कृतो मया संकल्पः। तं च दृढतयाऽनुपालयामि। संस्कृतपत्रिकाः पितृचरणानां सुतरां प्रिया आसन्। काले काले तास्वनेकास्ते द्रव्यसाहाय्येन समवर्धयन् समपोषयंश्च। संस्कृतस्य प्रचारोऽधिकाधिकः स्यादिति तेषामासीन्मनोरथः। संस्कृतपत्रिकाणां च तत्रातीव महत्त्वपूर्णा भूमिकेति तेषामासीद् दृढो विश्वासः। अहमपि तथैव पश्यामि। संस्कृतपत्रिकाणां सञ्चालकाः सम्पादकाश्च कियन्ति वा कष्टानि न सोढ्वा ताः सञ्चालयन्ति। १२.६.१९९२ दिनांके दिल्ली संस्कृताकादम्या संयोजिते संस्कृतपत्रकारसम्मेलने मयैतद्विषयकः स्वकीयो भाव इत्थमाविष्कृतः –

लेखस्य कष्टं च धनस्य कष्टं
कष्टं तथा मुद्रणसंविधायाः।
सञ्चालनं संस्कृतपत्रिकाणा–
मसंशयं कष्टपरम्परैव।।

अस्माद् (१९९६) वर्षात्ताभ्यः प्रदीयमानो राशिर्द्विगुणितः। शतं रूप्यकाण्यत्यल्पो राशिः। अद्यतन्यां महार्घतायामयमकिञ्चित्कर एव। वस्तुतस्तु शतद्वयमप्यल्पमेव। कालेन राशिं परिवर्ध्य शतपञ्चकात्मकतां नेतुमिच्छामि। एष मे हार्दो मनोरथः। वयं संस्कृतज्ञाः संस्कृतेन जीवामस्तस्य महत्त्वं च यत्र तत्र गोष्ठीषु महता कण्ठेनोद्घोषयामः। तदर्थम् इदमस्माकमवश्यकर्तव्यत्वेनापतति यत्स्वकीयादाया–त्कञ्चिद्राशिं तदभ्युत्थानार्थं वयं व्ययेम।

मदीये ग्रन्थागारे सन्ति तादृशा अपि ग्रन्था येऽन्यत्र सुदुर्लभाः। महाभारतस्य वादिराजकृता लक्षालंकारटीका पुण्यपत्तनरथे भाण्डारकरप्राच्यविद्यासंस्थानेऽपि नास्तीति मां कश्चिदाह यद्यपि तेन संस्थानेन महाभारतस्य पाठयोजना कृता महाभारतविषयिणी च यावती सामग्री यतः कुतोऽपि प्राप्याऽऽसीत्तां प्राप्तुं पाठयोजनायै च तामुपयोक्तुं कृतः प्रयत्नः। लक्षालंकारटीका उडीपीस्थानात्कर्णाट–राज्यस्थान्मया प्राप्ता।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कतिपयवर्षपूर्वं केन्द्रियसंस्कृतमण्डलेन (सैन्ट्रल संस्कृत बोर्ड) निर्णीतं यज्ज्ञानेश्वरेण महाराष्ट्रभाषया प्रणीता ज्ञानेश्वरीतिनाम्ना ख्याता गीता संस्कृतेनानुवदितव्या। मण्डलीयाः पण्डितपुंगवा नैतदजानन्यज्ज्ञानेश्वरी पूर्वमेवानूदितास्ति खण्डत्रयरूपेण च प्रकाशिताऽप्यस्ति। प्रथमषडध्यायानां कृतो ऽनुवादः प्रथमे खण्डे प्रकाशितः। अष्टमादध्यायाद् द्वादशाध्यायपर्यन्तं कृतो ऽनुवादो द्वितीये खण्डे प्रकाशितः। त्रयोदशादष्टादशमध्यायं यावद् ज्ञानेश्वर्यनुवादस्तृतीये खण्डे प्रकाशितः। इमे सर्वेऽपि त्रयः खण्डा विभिन्नेषु वर्षेषु प्रकाशिता मयि सन्ति।

न केवलं संस्कृतग्रन्था एव विषयान्तरग्रन्था अपि सन्ति मयि भूयांसः। तेषु नैक इतिहासग्रन्थाः पुरातत्त्वशास्त्रग्रन्थाश्च। विंशतिखण्डात्मकः सचित्रो विश्वेतिहासग्रन्थो नानासहस्ररूप्यकमूल्यमितो यो बृहत्सु पुस्तकालयेष्वपि कदाचिन्न भवेत्स मय्यस्ति। एवमैव जैन – बौद्ध वाङ्मयविषयकोऽपि महान् ग्रन्थराशिर्मय्यस्ति। पञ्चखण्डात्मको जैनसाहित्यबृहद्इतिहासग्रन्थः, पञ्चखण्डा–त्मको विवेकानन्दप्रवचनग्रन्थः, नाना खण्डात्मकं शिष्य (सिक्ख) धर्मसम्बद्धं विपुलं संस्कृतवाङ्मयं मय्यस्ति यन्मया महता परिश्रमेण संगृहीतम्। कोशवाङ्मयमपि मय्यस्ति विपुलम्। तस्मिन् विशेषोल्लेखमर्हति पञ्चखण्डात्मको 'वोर्तरबुख़' इत्याख्यो रोट्–बोटलुङ् नाम्न्या विद्वद्द्वय्या संकलितः संस्कृत–जर्मन कोशः। वैदेशिककोषसंग्रहोऽप्यस्ति मयि विपुलः–आङ्ग्लभाषाकोषः, जर्मनभाषाकोषः, फ्रैंचभाषाकोषः, रशियनभाषाकोषः, मलयाङ्ग्ल–आङ्ग्लमलयकोषः, थाय्याङ्ग्ल–आङ्ग्लथाईकोषः, लाओ–आङ्ग्लकोषः, कम्बोडियन–आङ्ग्लकोषः। विंशतिखण्डात्मको होशिआरपुरस्थविश्वेश्व–रानन्दवैदिकशोधसंस्थानेन प्रकाशितो वैदिकपदानुक्रमकोषस्तेनैव संस्थानेन, लुड्विकस्टर्नबाखसंकलितो महासुभाषितसंग्रहो यस्याद्यावधि प्रकाशिता अष्टखण्डाः प्रसिद्धिं गताः, डेक्कन कालेजेन पुण्यपत्तनस्थेन प्रकाश्यमानस्यैतिहासिकसिद्धान्तानाश्रित्य प्रणीयमानस्य संस्कृतशब्दकोषस्याद्यावधि प्रकाशिताः नव खण्डा विशेषोल्लेखमर्हन्ति। प्राचीना अमर–वैजयन्ती–विश्व–मेदिनी–हलायुधकोषादयः सर्वेऽपि सन्ति मयि प्रायशः। नानाखण्डात्मकः शब्दकल्पद्रुमोऽप्यस्ति। न केवलं मूलपाठ एवास्ति मयि कोषाणामपितु तत्तट्टीकायुतोऽप्यस्ति स पाठः। तथाहि–अमरकोषस्य क्षीरस्वामि–महेश्वर–भानुजिदीक्षितकृताष्टीका मत्कोषग्रन्थगौरवभूताः। ज्योतिषग्रन्था वैद्यकग्रन्थाश्चापि सन्ति मयि भूरिशः। एवं महान् ग्रन्थराशिर्मयि तिष्ठति यं दर्शं दर्शमध्यायमध्यायं च कमप्यमन्दानन्द– सन्दोहं विन्दामि। अयं ग्रन्थराशिः प्रमाणभूतो मम ग्रन्थसंग्रहरुचेर्ज्ञानार्जनाभिनिवेशस्य च।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

परश्शतेषु संस्कृतरूपकेषु केवलमेकपञ्चाशद्रूपकाण्येव समीक्षितानि धर्मपत्न्या। परं तस्याः समीक्षणमस्त्यतिविस्तृतम्। प्रथमं कथावस्तु प्रत्येकं रूपकस्य तया निर्दिष्टं, तदनन्तरं प्रत्येकं पात्रवैशिष्ट्यं तया निरूपितमन्ते च भाषाशैलीविषये टिप्पण्यः कृता नाट्यशास्त्रदृष्ट्या च नाट्यकृतिः समालोचिता। तया प्रकाशितः स्वकीयः समीक्षाग्रन्थो यः सहृदयैः साधु प्रशंसित 'इदम्प्रथमः' प्रयास इति चाभिनन्दितः। अन्येषामप्युपलब्धानां रूपकाणां समीक्षां विरचयिष्यामीति मनसिकृत्यैव तया स्वग्रन्थः प्रथमः खण्ड इति निर्दिष्टः। द्वितीयखण्डस्तु न तया पारितः कर्त्तुमित्यन्यदेतत्।

तस्मिन्नेव वर्षे (१९५७) यदाऽहं दारानकरवं नवाम्बरमासि सद्यःप्रारब्धे कुरुक्षेत्रविश्वविद्यालये वरिष्ठप्रवक्तृ (सीनियर लैक्चरर) रूपेणाहं नियुक्तः। किञ्चित्कालात्पूर्वमेव स विश्वविद्यालयः प्रारब्ध आसीत्। प्रथमो विभागः संस्कृतविभाग एव तत्र स्थापितोऽभूत्। तदर्थं कतिपया नियुक्तयः कर्तव्या आसन्। तदर्थमहं, श्रीमान् इन्द्रो, डा. बलदेवसिंहो, डा. रामचन्द्रपाण्डेयश्च नियुक्ताः। संस्कृतविभागस्थापनात्पूर्वं केवलमेक एव जनस्तत्रास्त स च लवपुरीयाद् राजकीयात्कालेजात्प्राप्तावकाशः श्रीगौरीशंकरो यः संस्कृतविभागाध्यक्षपदं विशेषाधिकारि (आफिसर ऑन स्पेशल ड्यूटी) पदं चाध्यतिष्ठत्। सर्वेषु नवनियुक्तेषु प्राचीनभारते सन्धिविग्रहकलेत्यादीनामितिहासग्रन्थानां रचयितृकत्वेन लब्धप्रतिष्ठः श्रीमान् इन्द्रो वयसा ज्येष्ठ आसीत्। विश्वविद्यालयेष्वन्यत्र चायमेव नियमो यत्समानवेतनमाने पदे ये नियुक्ता भवन्ति तेषु यः पूर्वं कार्यं प्रारभते स ज्यायान् (सीनियर) भवति, भवतु नाम स वयसा कनीयानपि। श्रीगौरीशंकरः केनापि कारणेन मज्ज्यायस्त्वमवाञ्छदतोऽहं प्रथमं कार्यं प्रारभेयेत्यभ्यलषत् तदर्थं च मां प्राचोदयत्। अहमप्यनुभवशून्यः। परप्रत्ययनेयबुद्धिर्ज्यायस्त्वलोभवशं गतस्तथैवाचरम्। उपलब्धमात्र एव नियुक्तिपत्रेऽहं हंसराजकालेजप्राचार्यानु-पासीदमन्वरुन्धं च यथाशीघ्रं कालेजकार्यमुक्त्यर्थम्। नियुक्तिपत्रमहं तान् अदर्शयम्। एकस्मिन्नेव नियुक्तिपत्रेऽन्येषामपि पूर्वोक्तानां नियुक्त्यर्हाणां नामान्यासन्। तस्यैव विभिन्नाः प्रतिलिपयो मन्ये श्रीगौरीशंकरेण सर्वेष्वपि प्रेषिताः। कुरुक्षेत्रे मम नियुक्तिर्जातेति प्राचार्यमहोदयान् सूचयता मया गीतावाक्यांशमुद्धृत्योक्तम् – धर्मक्षेत्रे कुरुक्षेत्रे इति। तदा परिहासबुद्ध्योपरितोऽधोयावन्नियुक्तिपत्रेऽङ्गुल्या नामानि स्पृशद्भिः प्राचार्यमहोदयैरुक्तं – समवेता युयुत्सव इति। कालान्तरे नैकश इदं वृत्तं मत्स्मृतिपथमुपेतम्। अहो! कथं सत्येयं वाक् तन्मुखान्निर्गता। सत्यमेवोक्तम्–ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

यद्यपि विश्वविद्यालयनियमानुसारेण मासत्रयात्मकोऽवधिः कार्यमुक्त्या- यावश्यको भवति तथापि कालेजप्रबन्धसमितिर्यदीच्छेत्तर्हि तं नियमं नानुपालयेदपि। प्राचार्यमहोदयास्तथा निर्णयं कृत्वा प्रबन्धसमित्या तमङ्गीकारयन्तीत्यस्ति तादृश्यपि परम्परा। तां परम्परामनुपालयद्भिः प्राचार्यैर्दिवसेनैकेनैवाहं कार्यमुक्तः कृतः। परेद्युरहं कुरुक्षेत्रं गतः तत्रत्यं स्वं कार्यं प्रारप्सि। श्रीमतेन्द्रेण तावताल्पेन कालेन तन्न कर्तुं पारितमिति वयसा मत्तः सुतरां ज्येष्ठोऽपि स कनीयान् संवृत्तः। तदेव कालान्तरे मामतितरामपिपीडत्। मम पितृतुल्यः स आसीत्। मया तस्मिन्ननुचितमाचरितमिति यावत्कुरुक्षेत्रस्थित्यागस्कृतमेवात्मानमहममंसि। श्रीगौरीशंकरप्रेरणया मयेदमाचरितमिति न मेऽपराधं लघूकरोति। किमित्यहं लोभवशं गत औचित्यविचारचर्चां न प्रावर्तयिषीति साम्रेडमात्मानं धिक्करोमि। श्रीमतेन्द्रेण तु तन्मनसि क्षोभलेशोऽप्यस्तीति न कदाप्याविष्कृतम्। स मय्यतीवास्निह्यत्। काले काले स कृत्याकृत्ये मामबोधयत्। कुरुक्षेत्रनिवासकाले कन्यकापिताऽहमासं संवृत्तः। किं तस्यै पथ्यं किञ्चापथ्यमित्यपि च मां मद्धर्मपत्नीं तद्विषयानभिज्ञां सोऽवदत्।

कुरुक्षेत्रे कार्यप्रारम्भवर्षाभ्यन्तर एव स दिवं गतः। तदभावो मत्कृते सुतरामसह्योऽभूत्। यदैवाहं तं स्मरामि मुहुरुपचितैरस्रैर्मम दृष्टिरालुप्यते। पुण्यश्लोकोऽसौ पुण्येन जिताँल्लोकान् गतः।

## ३३

मम कुरुक्षेत्रनिवासकाले विश्वविद्यालयार्थं भूमिरेवाऽधिगृहीताऽभूत्। कार्यालयो गीताभवनेतिनाम्नि कुरुक्षेत्रसरोवरपुरोभागस्थ उच्चैर्निर्मिते स्थान आसीत्। संस्कृतविषये स्नातकोत्तरीयमेव तदाऽध्ययनं विश्वविद्यालये प्रावर्तत। कक्षाश्च सन्निहितसरोवरनिकटे नाभाहाउसेत्याख्येऽतिपुराणे जीर्णशीर्णे नाभामहाराजेन पुराकाले निर्मापिते पूर्वं छात्रावासरूपेणोपयुज्यमाने भवने समायोज्यन्त। विश्वविद्यालयपुस्तकालयोऽपि तत्रैवैकस्मिन् कक्ष आसीत्। छात्राणामावासाय तत्समीपस्थमपरमेकं भवनं पटियालाहाउसेत्याख्यं पटियालामहाराजेन निर्मितमुपायुज्यत नाभाहाउसवत् दीनां हीनां च दशां गतम्। पुस्तकालयाध्यक्षश्च तदा दुर्गादत्त कपिल इति नामा कश्चिदासीत्। संस्कृतविषय एम.ए. परीक्षामुत्तीर्णो होशिआरपुरमण्डलाभिजनः स कुरुक्षेत्रविश्वविद्यालये पीएच्.डी छात्रोऽप्यासीत्। मन्निर्देशने स शोधप्रबन्धं व्यरीरचत्। यदाऽहं लवपुरस्थे प्राच्यमहाविद्यालये शास्त्रिकक्षाछात्र आसं तदाऽऽसीत्तस्यामेव कक्षायां जम्बूपुराभिजन उत्तमचन्द्राभिधान



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

एकश्छात्रः। स कालान्तरे कुरुक्षेत्रस्थे गीताहाईस्कूल इत्याख्य उच्चतरमाध्यमिकविद्यालये संस्कृताऽध्यापको जातः। यदा विश्वविद्यालयः कुरुक्षेत्रे स्थापितस्तदोच्चशिक्षावसरो मया लभ्यत इति बुद्ध्या स तत्र एम.ए.कक्षाध्ययनार्थं प्रविष्टः। एवं पूर्वं मम सतीर्थ्योऽपि स ममान्तेवासी संवृत्तः। एतद् 'विधिरेव तानि घटयति यानि पुमान् नैव चिन्तयती' त्युक्तिं प्रमाणयति।

नवस्थापितो विश्वविद्यालय इति प्रथमं तत्राल्पीयांस्येव पुस्तकान्यासन् पुस्तकालये पुस्तकसङ्ग्रहस्य कालसव्यपेक्षत्वात् पुस्तकानां च क्रमिकवृद्धित्वात्। मया कुरुक्षेत्रमुपेतेन कथं कालो यापनीय इति प्रश्ने समुपस्थिते गीताभवनस्थं प्राचीनग्रन्थागारमेव मच्छरणं समपद्यत। तत्रास्ति समग्रं पुराणवाङ्मयं, रामायणमहाभारतश्रीमद्भगवद्गीतादयो ग्रन्थाश्च। मातृकाग्रन्थानामप्यस्ति तत्र विशिष्टः सङ्ग्रहो येषां विवरणसूचीं (Descriptive catalogue) निर्मातुं विश्वविद्यालयेन मातृकाग्रन्थविशेषज्ञो विद्वद्धुरन्धरः पण्डितस्थाणुदत्तशास्त्री नियुक्त आसीत्। अष्टादशपुराणानि गीताभवने सन्तीति परमं सन्तोषमजीजनन्मे मनसि। एकैकं पुराणस्य परिशीलनेऽपि भूयान्कालोऽपेक्ष्यते अष्टादशपुराणानां पुनः सर्वमायुर्गमितं स्यात्। कुरुक्षेत्रे कथं कालो मे व्यतियास्यतीति नासीत्संप्रति मे चिन्ता। पुराणानामध्ययने सर्वात्मनाऽहं प्रसितो वाङ्मनसयोरगोचरं कमप्यानन्दातिरेकमन्वविन्दम्। प्रथमं मया वामनपुराणाध्ययनं प्रारब्धम्। तदाधारेणैव मया 'वामनपुराण में काव्यच्छटा' इति हिन्द्या Poetry in the *Vāmana-purāṇa* इति चाङ्ग्ल्या विरचितोऽतिदीर्घः प्रबन्धो यस्तद्भाषाशोधपत्रिकयोः प्राकाश्यं गतः। वामनपुराणस्य तदिदम्प्रथमं परिशीलनम्। अधीतवामनपुराणेन मया मार्कण्डेयपुराणाध्ययनं प्रारब्धम्। एवं पुराणाध्ययनेन सुखं व्यतियापितो मया पुस्तकान्तराऽभावेऽपि कालः। यदि कञ्चित्कालमधिकं तत्रावास्थास्ये पुराणान्तराण्यप्यहं पर्यशीलयिष्यं तत्र निहितमपरिमेयं ज्ञानराशिं चार्जयिष्यम्। कुरुक्षेत्रस्थेन मया नाना लेखा अपि प्रणीता ये ट्रिब्यूननाम्नि अम्बालातः प्रकाश्यमान आङ्ग्लवृत्तपत्रे मुम्बापुरीतः प्रकाश्यमानायां धर्मयुगेतिनाम्न्यां साप्ताहिक्यां पत्रिकायां प्रकाशिताः। किञ्च, बहोः कालादासीन्मे मनसि यत् काशिकाटीकायाः हरदत्तमिश्रविरचितायाः पदमञ्जर्याः पाठयोजना क्रियेतेति। अद्यत्वे प्रामाणिकं संस्करणं सम्पादनं च यदुच्यते (critical edition) तदस्याः सम्पाद्येत। अतिविस्तृता टीकेयं शतवर्षपूर्वं काशीतः प्रकाश्यमानायां पण्डितपत्रिकायां क्रमशः प्रकाशिता। पत्रिकायास्तेषु तेष्वङ्केषु प्रकाशिता अस्य अङ्काः पत्रिकासम्पादकैः सङ्गृह्य पृथक् पुस्तकरूपेणाऽपि सुलभाः कृताः। एवंरूपेण नाना पुरातना ग्रन्थाः तत्तत्संस्कृतपत्रिकासु प्राकाश्यं गता, यद्यपि प्रकाशकैस्ते नैव प्रकाशिताः। तादृशः पदमञ्जरीग्रन्थः पितृचरणैः कुतश्चित् प्राप्त आसीत्। तस्यैव पाठयोजनां कर्तुं



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कृतो मया सङ्कल्पः, सेयं बृहती योजना बृहद्द्रव्यसापेक्षेति विश्वविद्यालयकुलपतिस्तद्द्रव्यसाहाय्यार्थं प्रार्थितः। गवेषणाकार्येऽनन्यरुचिरमरचन्द्रजोशीनामकुलपतिस्त्वरितमेवाभ्युपागात्तत्साहाय्यमहञ्च पाण्डुलिपीनामन्वेषणे तत्प्रतिलिपिप्राप्तये, तत्सूक्ष्मचित्र (microfilm) प्राप्तये वाऽऽत्मानं व्यापीपरम्। पाण्डुलिपिकोषाणान्तु डा. सूर्यकान्तकार्यसम्पादनवशान्मम ज्ञानमासीदेव। ते कोषा मया निपुणमेतदर्थं परामृष्टाः। तत्तत्पाण्डुलिपिसङ्ग्रहालयाध्यक्षैः कृतो मया पत्रव्यवहारः। सेयं विपुला सामग्री मया भारतस्य प्रत्येकं दिग्विभागात् सङ्गृहीता देशान्तरेभ्यश्चापि। किञ्च, उत्तरवर्तिव्याकरणग्रन्थेषु यत्र यत्र पदमञ्जर्या उद्धरणानि दृष्टानि तानि विचायं विचायमभ्युच्चितानि, पाठयोजनायां सहायकानि स्युरिति। सेयं विपुला सामग्री मयि अद्याप्यस्ति। पाण्डुलिपिप्रतिलिपिसङ्ग्रहस्तु कुरुक्षेत्रविश्वविद्यालय एवास्ति। १९५९ वर्षे यदाऽहं दिल्ल्यां नियुक्तस्तदा तदानीन्तनेन कुरुक्षेत्रविश्वविद्यालयकुलपतिना श्रीहरद्वारीलालेन पदमञ्जरीपाठयोजनविषये कुतश्चित् ज्ञात्वा प्रहितो संदेशो यत्स मां कुरुक्षेत्रे द्रष्टुमिच्छतीति। अहं तत्र गतः। तेनोक्तं विश्वविद्यालयेनाऽत्र बहु व्ययितम्। कार्यमिदं यदि फलेग्रहि स्यात् साधु स्यात्। मयोक्तम्—मयाऽप्यत्र बहु श्रान्तम्, ममापि तथैवाभिलाषः। यदि सर्वोऽपि मातृकाग्रन्थसम्भारो दिल्ल्यां मदर्थं सुलभीक्रियते कार्यमिदमहं सम्पादयामि। तेनोक्तं विषयेऽत्र विचार्य भवन्तं सूचयिष्यामि। किञ्चित्कालानन्तरं प्रापि मया तस्य पत्रं यत्र तेनोक्तमासीद् यदस्मद्विश्वविद्यालयीयाः प्राध्यापका एवैतत्कार्यं सम्पादयिष्यन्ति। अद्यातीतपञ्चाशद्वर्षाधिकावधिकः कालो न च तत् कार्यं तद्विश्वविद्यालयीयेन केनापि प्राध्यापकेन सम्पादितम्। इतः परमपि कश्चित् सम्पादयेदिति सन्देह्मि। ममेयं परिकल्पनेति यथाऽहमत्रात्मानं व्यापारयितुमिच्छुर्न तथाऽन्यः स्यात्कश्चन। न चाधिकृता इदमवबुध्यन्ते। अयं निजः परो वेति गणनैव तेषां कृते प्रथमः कल्पो न तु साध्यस्य सिद्धिः। अत एव नैकानि कार्याण्येकेन प्रारब्धानि परवर्तिभिश्चोपेक्षितानि न परिणतिं यान्ति। तेन च यातो वैयर्थ्यमर्थश्च परिश्रमश्च।

## ३४

सुदूरवर्तिभिरपि विद्वज्जनैः पदमञ्जरीकार्यहेतुकेन कार्यान्तरहेतुकेन वा पत्रव्यवहारेण जातो मे परोक्षपरिचयः। तेन कुरुक्षेत्रविश्वविद्यालयप्रतिष्ठाऽपि वृद्धिं गता। एकदा कुरुक्षेत्रविश्वविद्यालयीया अस्मच्छात्राः शिक्षायात्राप्रसङ्गेन मद्रपुरीं प्राप्ताः। तत्र च ते अड्यारग्रन्थागारशोधकेन्द्रनिदेशिकया राधाबर्नियरमहोदयया सङ्गताः। कुरुक्षेत्रविश्वविद्यालयाद्वयमुपेता इत्युक्तवत्सु तेषु सा द्रागेवाऽवोचत् 'किं डा.



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

सत्यव्रतस्य विश्वविद्यालयात्?' कुरुक्षेत्रविश्वविद्यालयस्तदा डा. सत्यव्रतस्य विश्वविद्यालय इत्यभिज्ञातोऽभूत् संस्कृतविद्वभिरितरप्रदेशस्थैः।

विश्वविद्यालयपरीक्षार्थमेका नवीना पद्धतिरुद्भाविताऽभूच्छ्रीगौरीशङ्करेण विश्वविद्यालयविशेषाधिकारिणा सा चान्तरिकबाह्यपरीक्षकरूपा। छात्रास्तत्तद्विषय-प्राध्यापकैस्तद्योग्यताऽनुसारेण परीक्ष्यन्ते स्म। एतद्धि यदुच्यते आङ्ग्लभाषया (Internal assessment) इति। तदेतत् परीक्षणं परीक्षकद्वयाऽङ्कप्रदानरूपम्। स एवच्छात्र उत्तरपुस्तिकामाध्यमेन परीक्ष्यते केनापि विश्वविद्यालयबहिर्भूतेन परीक्षकेन। स भवति बाह्यपरीक्षकः। तेनाङ्काश्छात्रेणोत्तरपुस्तिकायां लिखितान्युत्तराणि वाचयित्वा तत्सम्यक्त्वाऽसम्यक्त्वे च विचार्य दीयन्ते। आन्तरिकपरीक्षा तु केवलमनुभवाधारेणैवाऽनुमानेनैव वा। बाह्यपरीक्षा लिखितानामुत्तराणामाधारेण। तत्र किञ्चिद् विचित्रमिव जातम्। पञ्चदशसु छात्रेष्वेकादशच्छात्रेभ्यो मया च बाह्यपरीक्षकेण च प्रदत्ता अङ्काः समाना एवासन्। चतुर्णां छात्राणामङ्केष्वपि किञ्चिदेवान्तरमासीत्। तद् दृष्ट्वा केचनैवमचिन्तयन् यन्मया बाह्यपरीक्षकेण सह साधितः स्यात् सम्पर्को मदनुरोधेनैव च तेन त एवाङ्काः प्रदत्ता ये मया। परमेतादृशं किंचिंदपि नासीत्। दैवयोग एव सः। बाह्यपरीक्षकः क इति नैवाऽहमज्ञासिषम्। अस्त्येकः सुप्रथिताङ्ग्लभाषाऽऽभाणकः 'फैक्ट्स आर स्ट्रेन्जर देन फिक्शन,' कदाचिद् यथार्थः कल्पनातोऽपि विलक्षणो भवति। उपरिष्टान्निर्दिष्टया घटनयेदमपि प्रमाणीभवति यद् यद्यध्यापकः सम्यग्दर्शन उद्बुद्धसत्त्वश्च तर्हि स स्वकीयच्छात्राणां तारतम्यं सुष्ठु वेदितुं क्षमः। कियान्बोध एकस्य कियत्तरश्चापरस्य कियत्तमश्चान्यस्येति न तिरोहितं तस्य। सेयन्नाम सूक्ष्मेक्षिकेति योच्यते।

कुरुक्षेत्रविश्वविद्यालये संस्कृतविषयिण्यां एम.ए. कक्षायामधिकांशतश्शास्त्रि-परीक्षोत्तीर्णाश्छात्राः एव प्रविष्टाः। शास्त्रिपरीक्षाया बी.ए. परीक्षासमकक्षत्वेन तत्परीक्षोत्तीर्णानामपि तत्कक्षाप्रवेशार्हत्वात्। तेषु नैके वयसा ज्यायांसोऽपि एम. ए. परीक्षामुत्तीर्य तत्तन्महाविद्यालयेषु नियुक्ताः सुखेन जीवितं यापयन्ति। कदाचिदेव तैस्सह जायते सम्पर्कः। तेषु केचन सम्प्रति दिल्लीमधिवसन्ति।

## ३५

कुरुक्षेत्रविश्वविद्यालयः किमभिलक्ष्य स्थापित इति विषयेऽप्यत्र किंचिद्विवक्षामि तद्विषयस्य प्रसक्तानुप्रसक्तत्वात्। विश्वविद्यालयोऽयं प्रथमतया संस्कृत-



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विश्वविद्यालयरूपेण परिकल्पितः। नानादिनानि वृत्तपत्रेष्वेतादृश्युद्घोषणा संस्कृतानुरागिणां मनः प्रमोदभरेणाऽपिपः।[१८] विश्वविद्यालयस्थापनाऽवसर एव विश्वसंस्कृतपरिषदोऽधिवेशनं कुरुक्षेत्रे समपद्यत। यदर्थमहमपि तत्रोपेतः। विश्वविद्यालयस्थापनोत्सवार्थं विशालं पटवेश्माऽस्थाप्यत यद्बहिः स्थूलाक्षरेषु पटखण्डेषु कुरुक्षेत्रविश्वविद्यालय इत्यङ्कितमभूत्। तदवलोक्येदमभून्मे मनसि संस्कृतविश्वविद्यालयः कुरुक्षेत्रे स्थाप्यत इत्युद्घोषणा कुतश्च विश्वविद्यालयनाम्नि नास्ति संस्कृतशब्दः। कुतो नास्य संस्कृतविश्वविद्यालय इत्यभिधा। यक्षप्रश्न इवायं प्रश्नः समुदितो मे मनसि।

सायाह्ने गीतामन्दिरमण्डपे विश्वसंस्कृतपरिषदोऽधिवेशनं प्रारब्धम्। परिषदः संस्थापकोऽध्यक्षश्च श्रीकन्हैयालालमाणिकलालमुंशी स्वयं तत्रोपस्थितोऽभूत्। तेन सह मुम्बापुरीस्थभारतीयविद्याभवनसंस्कृतपण्डितो धाराप्रवाहरूपेण संस्कृतेन वक्तुं क्षमः पण्डितराजो रामचन्द्रदीक्षितोऽप्यासीत्। श्रीमुंशी आङ्ग्लभाषया यदेवावोचत् स तदेव संस्कृतेनान्ववादीत्। परिषदधिवेशनस्य प्रारम्भ एव श्रीमुंशीमहाभागेन सदस्यानामनुमोदनार्थं प्रस्ताव एषः समुपस्थापितः—'परिषद इदं सत्रं पञ्जाबसर्वकाराय कुरुक्षेत्रे संस्कृतविश्वविद्यालयस्थापनाहेतोः साधुवादमर्पयति।' तच्छ्रुत्वैव मयाऽऽक्षिप्तम् श्रीमन्! कुरुक्षेत्रविश्वविद्यालयोऽयं न तु कुरुक्षेत्रसंस्कृत-विश्वविद्यालयः, तर्हि कुतः कस्य वा साधुवादः? येन जनेन स्वजीवने स्ववचसः प्रतिवादो न कदापि श्रुतः स मादृशस्य तत्रापि चोद्भिन्नयौवनस्य वचः कथं सहेत? सहसैव तस्य क्रोधाग्निः प्रज्वलितः। तेन दह्यमानः सोऽवोचत् अस्य विश्वविद्यालयस्य स्थापनार्थं यानि लक्ष्यानि परिकल्पितानि तत्र स्पष्टं निर्दिष्टं यदयं विश्वविद्यालयः संस्कृतसंवर्धनायैव स्थाप्यत इति। यद्येवं तर्हि नाम्ना किम्? मया पुनरुट्टङ्कितं यदि संस्कृतसंवर्धनमेव लक्ष्यं तर्हि कुतो नाऽयं विश्वविद्यालयो महता कण्ठेन संस्कृतविश्वविद्यालय इत्युच्यते? किं तत्र प्रतिबन्धकम्? यदुक्तं नाम्ना किमिति तत्र इदमेव ब्रवीमि, नाम्नैव सर्वमिति। काशीहिन्दूविश्वविद्यालयोऽपि संस्कृतस्यैव प्रचाराय प्रसाराय च स्थापितोऽभूत्। षटत्रिंशद् ग्रामाः श्रीमदनमोहनमालवीयाय काशिराजेन विश्वविद्यालयस्थापनार्थं प्रदत्ताः। तत्र दानपत्रे संस्कृतस्य प्रचाराय प्रसाराय च ग्रामा इमे दीयन्त इति स्पष्टोल्लेखः। सम्प्रति कीदृशी दशा तस्य विश्वविद्यालयस्य। संस्कृतस्य कृत एको महाविद्यालयः कलासङ्काय एकः संस्कृतविभागश्च संस्कृतस्य तत्राऽस्तित्वं द्योतयतः। ख्यातिस्तु तस्य विश्वविद्यालयस्य विश्वकर्मशास्त्रवशाद् वैद्यकशास्त्र-

---

१८ पॄ पालनपूरणयोरित्यस्य लङि प्रथमपुरुषैकवचने रूपम्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

वशादनेकान्यशास्त्रवशादेव। तादृश्येव स्थितिरस्य विश्वविद्यालयस्यापि भवित्री। एवमुक्त्वा विरते मयि आर्यसमाजप्रधानपुरुषः परिव्राजकाचार्यः स्वामी समर्पणानन्दः (पूर्वाश्रमे पं. बुद्धदेवविद्याऽलङ्कारः) मदीयं मतं दृढस्वरेण समर्थयामास। उभयोरप्यावयोर्वचस्तृणाय मत्वा श्रीमुंशी विषयान्तरं समक्रामीत्। उपस्थिता अन्ये विद्वांसोऽप्यस्मदाक्षेपगाम्भीर्यमबुद्ध्वा विषयान्तरोपक्षेपे मनो ददुः। तेन च कुरुक्षेत्रविश्वविद्यालय एव जनिमलब्ध न तु कुरुक्षेत्रसंस्कृतविश्वविद्यालयः। मया यथाऽऽशङ्कितं तथैव जातम्। संस्कृतमत्र नानाविषयेष्वेकतमो विषयः, स चापि न प्रधानम्। अधिकारिणां वचसि किञ्चिदन्यदेवासीत् मनसि च किंचिदन्यदेव। यथाऽहं स्मरामि तथा विश्वसंस्कृतपरिषदः सत्रे मयेदमप्युक्तमासीद्यदि विश्वविद्यालयस्थापन एव तात्पर्यं तर्हि कुतः कुरुक्षेत्र एव तत्स्थापनम्, किन्न रोहितके वाऽऽम्बालायां वा यत्र सन्ति नानाशिक्षालयाः ये विश्वविद्यालयाङ्ग-भूतास्तद्दार्ढ्याय कल्पिष्यन्ते। कुरुक्षेत्रे विश्वविद्यालयस्थापनमत एव यतो हि तीर्थस्थानमिदं, भगवताऽत्रैव महद् गीताऽमृतं दुग्धं वत्सः पार्थश्च तत्पायितः। अत्रैव परस्सहस्राणि वर्षाणि शतशस्तपस्विभिः तपस्तप्तं शास्त्राणि च शीलितानि। विश्वविद्यालयस्थापनया यदि पावनं तीर्थमिदं सुरसरस्वत्याः केन्द्रमभविष्यत् तर्हि सफला अभविष्यन् नो मनोरथाः। परं तन्न जातम्। तदाशाऽपि नासीदेव। ये विश्वविद्यालयाय 'संस्कृत विश्वविद्यालय' इति नामापि दातुमसमर्थास्तेषां कियती वा रुचिः संस्कृते स्यात् इति नापेक्ष्यते बहु वचः।

## ३६

कुरुक्षेत्रसम्बद्धाऽन्याप्येका घटना मे स्मृतिपथमुपारोहति। डा. सूर्यकान्तेन ऑक्सफोर्डविश्वविद्यालयादाङ्ग्लदेशस्थाड् डी.फिल. इति शोधोपाधिरधिगत आसीत् पञ्जाबविश्वविद्यालयाच्च डी.लिट्.इति। स्वनाम्ना स इदमुपाधिद्वयं संयोजयति स्म डा. सूर्यकान्त डी. लिट्. पंजाब, डी.फिल., ऑक्सन (Oxon)। विदेशादुपाधिरधिगन्तव्य इतीच्छा प्रबलरूपेण ममाऽपि मनसि जागरिता। कुरुक्षेत्रविश्वविद्यालये कार्यरतेन मया ऑक्सफोर्डविश्वविद्यालये प्रवेशार्थं प्रेषितं प्रार्थनापत्रम्। तत् तदधिकारिभिः स्वीकृतमपि। तत्रत्ये बेलियल् कालेज इत्यत्र मया शोधकार्यं प्रवर्तनीयमासीत्। छात्रावासे निवासार्थं व्यवस्थाऽपि तद्विश्वविद्यालयाऽधिकृतैः कृता। तदनु मया ऑक्सफोर्डविश्वविद्यालये प्रवेशो लब्ध इति कुरुक्षेत्रविश्वविद्यालयकुलपतिः सूचितो वर्षद्वयावधिकमवकाशञ्च



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

प्रार्थितः। कुलपतिनाऽवकाशो न केवलं स्वीकृत एवापि त्ववकाशकालावधौ प्रतिमासं पञ्चाशदुत्तरशतद्वयं रूप्यकाणां वेतनमहं लप्स्ये नैरन्तर्येणेत्यप्यङ्गीकृतम्। एतावत्पर्यन्तं सर्वं ममानुकूलमासीत्। चिरसंचितो मे मनोरथः पूर्णतोन्मुख इति नासीदन्तो मे परितोषस्य। सम्प्रत्येकैव समस्यासीन्मत्पुरतः। धर्मपत्नीं द्विवर्षां पुत्रीञ्च कस्मिन् न्यस्येयमिति। पितरौ मम तदा होशियारपुर आस्ताम्, आचार्यविश्वबन्धोः सेवायां रतौ तदाश्रम एव कृतवसती। मज्जननी प्रकृत्यैव कठोरा रूक्षभाषिणी च। प्रथमं तावदाश्रमे मद्भार्यासदृश्यास्तरुण्या निवास एव नोचितो विशेषतः स्तन्नधयासहचरितायाः, अपरतो मदसन्निधौ मज्जननी न साधु तस्यां व्यवहरेदिति चिन्ता। मया चिन्तितं यदि सा स्वज्येष्ठभ्रातरि तदानीं जालन्धरस्थे वर्षद्वयं यापयेत् तर्हि साधुतरकं स्यात्। एतद्विचिन्त्य तस्या ज्येष्ठभ्राता मया पत्रद्वारा सर्वमपि वृत्तं बोधितः। प्रार्थितश्च स्वस्वसारं वर्षद्वयं स्वस्मिन् स्थापयितुम्। तेन मत्पत्रस्य यत्प्रतिवचः प्रेषितं तेनाऽहं बाढं मर्मसु विद्धः। तेनोक्तमासीद् विदेशं गन्तुमिच्छसि चेत् गच्छ, परं गमनात्पूर्वं भार्यायाः सम्यग्व्यवस्था त्वया कर्तव्या। व्यवस्था नामार्थिकी व्यवस्थेति तस्यासीदाकूतम्। नाऽहं भारं वोढुं क्षम इत्यपि तेनोक्तमासीत्। अचिरलब्धवृत्तिकस्य मम कुत एतावानर्थसञ्चयो यं श्यालकेऽधि कर्तुमहं स्यां शक्तो येन च स स्वस्वसुस्स्वस्वस्रेय्याश्च शक्तः स्यात्कर्तुं संविधाम्। ऑक्सफोर्डविश्वविद्यालये मया प्रवेश एव लब्धोऽभून्नतु वृत्तिः। निजार्थमपि मयाऽर्थसंचयः करणीय आसीद्येन विदेशङ्गतस्य मम शरीरयात्रा प्रसिध्येत्।

एवं स्थिते मया चिन्तितं यद्यदि धर्मपत्नी कुत्राऽपि वृत्तिं लभते तर्हि कदाचिदात्मम्भरिः[१६] सा स्यादेव न तु परमुखापेक्षिणी। तदानीमेव कर्णालस्थे डी.ए.वी. महिलामहाविद्यालये संस्कृताऽध्यापिकापदं रिक्तमिति ज्ञात्वाऽहं धर्मपत्नी च तत्र गतौ। प्रबन्धसमितेरध्यक्ष एव तत्र कर्तुमकर्तुमन्यथा च कर्तुं प्रभुरिति लोकतो विदित्वाऽऽवां तमभ्युपेतौ। खट्वाऽऽरूढो लम्बोदरो निर्वस्त्रोत्तरकायः स कूणिताक्षिभ्यामवलोक्य धर्मपत्न्या जीवनवृत्तपरिचयपत्रं पठित्वा सर्वं योग्यतादिकमस्याः समीचीनमेवेत्युक्त्वा यावद्वेतनमुद्घोषितं तावदस्माभिर्न दातुं शक्यते, तेन वेतनस्वीकृतिपत्रे (रसीद) ऽधिकद्रव्यप्राप्तिसूचकेऽनया हस्तो देयो भवेत्। ततोऽर्धञ्च द्रव्यं ग्रहीतव्यं भवेदित्यवोचत्। यद्येतदभ्युपेयते तर्हि सद्य एवेयं कार्यं प्रारभताम्। विचार्य वक्ष्याम इत्युक्त्वावां ततोऽपगतौ। इमे ज्ञानपण्या वणिजः सर्वत्र वणिग्वृत्तिमेव बिभ्रतीति सर्वथा प्रव्यथितान्तरङ्गावावां कञ्चित्कालं न किमपि निर्णेतुमपारयाव। कर्णाले स्वतन्त्राऽवासकल्पने भाटकमपि देयं भवेत्,

---

१६ फलेग्रहिरात्मम्भरिश्च (३.२.२६) इत्यनेन निपातनम्। आत्मानं बिभर्तीत्यर्थः।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

शिशुरपि कुत्रचन शिशुनिकेतने, क्रेश इत्याङ्ग्ल्यां, स्थापयितव्यः स्यात्। तदर्थमपि किञ्चिद् द्रव्यमपेक्षितं स्यादेव। रोगादौ चिकित्सार्थमपि व्ययो भवेदेव। भोजनादिसंविधाऽप्यर्थसव्यपेक्षा। अल्पीयसा द्रव्येण कष्टार्जितेन न किमपि सेत्स्यतीति बहुशो विचार्य विदेशगमनविचार एव मया परित्यक्तः। एवं चिरसंचितो मे मनोरथो विलयं गतः। सत्येयमुक्तिः 'उत्थायोत्थाय लीयन्ते दरिद्राणां मनोरथा' इति। १९९२ वर्षे थाईदेशस्थशिल्पाकरविश्वविद्यालयान्मानदोपाधिः (ऑनोरिस कौज़ा) मया लब्धः। ततः पूर्वं शल्यमिव मां मम मनोरथस्याऽसाफल्यं तुदति स्म। मानदोपाधिप्राप्त्यनन्तरं शल्यवेधपीडा किञ्चिदूनताङ्गता। विदेशं गत्वा शोधप्रबन्धं विरच्य य उपाधिर्मयाऽधिगन्तव्य आसीत् ततोप्युच्चतर उपाधिर्विनाऽपि शोधप्रबन्धविरचनं मत्कृतित्वमभिलक्ष्यैव मया लब्ध इति ममान्तरङ्गं किञ्चित् सुखाकरोत्येव।

## ३७

यावन्तं कालमहं कुरुक्षेत्रे स्थितिमचकलं तावन्तं कालं न मे पितृचरणा मामुपसन्ना न वाम्बालातो मे पितृव्यः। एकदा सम्भाषणप्रसङ्गे तेनाऽहमुक्तः—अपि कुरुक्षेत्रं तत्स्थानं यत्र कोऽपि निवस्तुमर्हतिं? कुरुक्षेत्रे निवसतो मम. तस्येदं वचः पीडामजनयत् गरीयसीम्। विधेर्विलिखितमेवेदं यत् तस्यैव सुतस्तस्मिन्नेव निवासाऽनर्हे कुरुक्षेत्रे विश्वकर्मशास्त्र (इञ्जिनियरिङ्ग) शिक्षां गृहीतवान्। तं द्रष्टुं च सोऽनेकशस्तत्स्थानमुपगतः।

यस्मिन् वर्षे (१९५७) ऽहं दारानकार्षं तस्मिन्नेव वर्षे कुरुक्षेत्रे नवाम्बरस्य द्वितीयदिवसे मया कार्यं प्रारब्धम्। तस्मिन्नेव च वर्षे मम धर्मपत्नी जुलैमासे नवदिल्लीस्थे लेडीश्रीराममहिलामहाविद्यालये संस्कृताऽध्यापिकारूपेण नियुक्ता। तस्मिन्नेव च वर्षे दिशाम्बरमासस्य दशमदिवसे सा कन्यामसोष्ट। लेडीश्रीराम–महिलामहाविद्यालयोऽस्मद्वसतिरूपनगरादतिदूरस्थ इति कठोरगर्भा मद्धर्मपत्नी प्रतिदिनं दूरमध्वानमतिक्रान्तुमक्षमेति तस्याः कृतेऽस्माभिः विद्वद्धुरन्धरस्य पण्डितस्य अमीरचन्द्रशास्त्रिणो दरियागंजवसतौ सनातनधर्ममन्दिराऽन्तर्भूते वेश्मन्यावासः कल्पितः। शास्त्रिवर्योऽस्मासु कृपालुस्तदा मन्दिरस्य प्रधानपुरोहित आसीत्। बहुप्रजा असाविति तस्य स्वस्य कृतेऽपि स्थानं पर्याप्तं नासीत्। तथाऽपि तेन चातिवत्सलया तद्धर्मपत्न्या च सा स्वकुटुम्बकाङ्गरूपत्वेनाङ्गीकृता। परं यादृशं सौविध्यं तदर्थमपेक्ष्यते स्म तत्तत्र सुलभं नासीत्। भोजनमपि मद्धर्मपत्नी स्वस्य कृते



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पृथगेव साधयति स्म बहुशः। गृहे सांराविणमिति कदाचित् निद्रामपि न साध्वलब्ध। आसन्नप्रसवया तया प्रजननावकाशो महाविद्यालयादधिगतः।

मम कुरुक्षेत्रे कार्यमिति स्वकीयां महाविद्यालयसेवां त्यक्त्वा सा मया सार्धं कुरुक्षेत्रमध्यवसत्। दिल्लीस्थं गृहमस्माभिः परित्यक्तम्। पितृचरणा अवैतनिकसेवार्थं मातृपादैः सह होशिआरपुरमुपेताः। होशिआरपुरगमनाय तत्रत्ये साध्वाश्रमे च कालं यापयितुं तेषां चेतः सदैवोदकण्ठत। कुरुक्षेत्रे शोभना वासगृहास्तदानीं दुर्लभा एवासन्। गन्त्रीविरामस्थानोपकण्ठ एव राजमहल इति नामा कस्यापि वृद्धपुरुषस्य राजाराम इति नामधेयस्याऽगारसम्भार आसीत्। तत्रैव कस्मिंश्चिदगारे मया वसतिः कल्पिता। मदीय एव चागारे कञ्चित्कालं मत्सहकर्मिणा पाण्डेयेन रामचन्द्रेणापि। श्रीबलदेवसिंहोऽगारान्तरे न्यवात्सीत्। यावन्तं कालं धर्मपत्नी दिल्ल्यामासीत् तावन्तं कालं राजमहलबाह्यभागस्थे भोजनालयेऽहमाश्नाम्। तत्रत्यं किञ्चिद्वैशिष्ट्यमद्यापि मे स्मृतिं न मुञ्चति। भुञ्जानोऽहं यदा करपट्टिका (रोटी) मेकां देहीत्यवोचं तदा भोजनालयाध्यक्ष–स्तत्कर्मकरा वा करपट्टिकाद्वयमेवाददुरेककरपट्टिकादानमशोभनमत्रत्यपरम्परा–ननुकूलमिति ब्रुवन्तः। अद्यत्वे पुनर्भोजनालयाध्यक्षाः मितमेव परिवेष्टुमिच्छन्ति परं तत्रत्यो भोजनालयाध्यक्षस्तु विलक्षण एवासीत्।

राजमहल इत्याख्यां बिभ्रदपि तदगारं शीर्णप्रायमेवासीत्। प्रावृट्काले छदितो जलधाराऽच्यवत। कुट्टिममपि खण्डितप्रायमेवासीत्। येन मूषकाणामासीन्महानुपद्रवो विशेषतो निशीथे। मशकाश्च यूकालिक्षं[२०] चापि यथेच्छमस्मद्रक्तं पपुः।

कतिचन मासा अस्माभी राजमहले यापिताः कष्टश्रितैः[२१] तदनु स्थण्वीश्वरनगर आवासोऽस्माभिः कल्पितः। पुत्र्या इन्दुबालाया मुण्डनसंस्कारो–ऽस्मामी[२२] राजमहल एव सम्पादितः। जानुभ्यामितस्ततः प्रसरन्ती सा सर्वेषां स्नेहभाजनमासीत्।

इन्दुबालाया नामविषयेऽप्यत्र किञ्चिच्चर्चयितुमिच्छामि। एम.ए. कक्षायां जालन्धरनगरे माधवस्वरूपबहलो धर्मसिंहोऽहञ्च सतीर्थ्या आस्म। एषु केवलमहमेवास– मकृतदारः। धर्मसिंहस्य बहलस्य च प्रत्येकं तनयाऽऽसीत्। एकदा गोत्रस्खलित– वशादिन्दुमती–स्थाने इन्दुबालेति शब्दो मयोच्चारितः।

---

२० क्षुद्रजन्तवः (२.४.८) इत्यनेन समाहारद्वन्द्व एकवद्भावः।
स नपुंसकम् (२.४.१०) इत्यनेन च नपुंसकत्वम्।

२१ द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः (२.१.२४) इत्यनेन द्वितीयातत्पुरुषसमासः।

२२ रो रि (८.३.१४) इत्यनेन प्रथमरकारलोपे द्रलोपे पूर्वस्य दीर्घोऽणः (६.३.१११) इत्यनेन पूर्वेकारस्य दीर्घः।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तदा धर्मसिंहेन परिहासोत्फुल्लगल्लेन तर्जन्या बहलं निर्दिश्योक्तमिन्दुमतीति, स्वं च निर्दिश्योक्तमिन्दुकलेति माञ्च निर्दिश्योक्तमिन्दुबालेति। अकृतदारस्यापि मम पुत्र्या नाम तदा कृतमासीत् सतीर्थ्येन। तद्यदा पुत्री मम जाता तदा पूर्वनिर्दिष्टां घटनामनुस्मृत्य इन्दुबालेति तस्या नाम मया कृतम्। मम धर्मपत्न्यै नातितरामिदम– रोचत। एतद्विषये स्वाभिप्रायस्तयाऽऽविष्कृतोऽपि परं मच्छन्दानुरोधेन नात्र प्रतिहस्तितम्।

## ३८

दिल्लीतो यो जनः कुरुक्षेत्रसदृशं स्थानं गच्छति तस्य मनस्युद्वेगः स्वाभाविक एव। कुरुक्षेत्रमपि नाद्यतनं कुरुक्षेत्रं यत्रातिशोभनं प्राङ्गणमभ्रंलिहाग्रा अट्टालिकाश्छात्राणां पूर्णा आवासा विविधपण्यपरिपूर्णाऽऽपणसुसज्जिता विपणयोऽपितु तत्कुरुक्षेत्रं यत्रावश्यकानां वस्तूनामप्यभावो विशेषतो गोधूलिवेलायां, निर्जनता नीरवता च। स्मराम्यहं प्रातर्भ्रमणार्थं राजमहलतः पिप्पलीमार्ग एवाऽहमगाम्। सायाह्ने गन्त्रीविरामस्थानयात्रिवीथ्यामेव सुदीर्घायां (सूर्यग्रहणा–दिकाले यात्रिसम्मर्दमुपलक्ष्य कृता तादृशी व्यवस्था रेलाधिकारिभिः) अहं पर्याटिषम्, रेलयानेषूपविष्टांस्तान्यारोहतां ततो वाऽवरोहतां जनानां दर्शनेनैकाकिताबोधः क्षणं यावदपेयादिति। प्रतिसप्ताहं शनिवासरे रविवासरे वा केनापि प्रेरित इव दिल्लीमगां निजावासाभावे बिरलामिलसमीपस्थे कमलानगरीय आर्यसमाजमन्दिरातिथिनिवासे च स्थितिमचकलं तत्पुरोहितकुटुम्बेन मय्यत्यन्तं स्निग्धेन निपुणं सेव्यमानः। पण्डितो गौरीशङ्करो न मे दिल्लीगमनमरोचयत समालखास्थानं प्रति घरौण्डास्थानं प्रति वा गच्छामीति तमुक्त्वा दिल्लीमेवाहमगाम्। क्व नाम कुरुक्षेत्रे तादृशो जनसम्मर्दो यादृशो दिल्ल्यां क्व वा तादृशं चाकचक्यम्? क्व तत्र विद्वद्गोष्ठ्यः सांस्कृतिका वा कार्यक्रमाः। तत्राऽवस्थानं तु जीवनयापनमेव। किं तेन। काकोऽपि जीवति चिराय बलिं च भुङ्क्ते। एवं विचिन्त्य दिल्लीमेव मया प्रतिगन्तव्यमिति बुद्धिर्ममोदिता। परं कथं तत्र प्रतिगच्छेयं यावन्न तत्र नियुक्तिं लभेय। तदर्थं मया प्रारब्धः प्रयासः। मम दिल्लीप्रतिगमनेच्छा तथाऽतिभूमिं गता यथा दिल्लीस्थे तदानीं दिल्लीकालेज इत्याख्ये परस्ताच्च जाकिरहुसैनकालेज इति नवं नाम बिभ्रति कालेजे संस्कृतप्रवक्तृपद[२३]मभिलाषुकोऽहं तदानीन्तनं कालेजसंस्कृतविभागाध्यक्षं मे प्रियसुहृदं श्रीमन्तं एस.एन. निगममेतदर्थं प्रार्तथै।

---

२३ न लोकाव्ययनिष्ठाखलर्थतृनाम् (२.३.६९) इत्यनेन षष्ठीनिषेधे द्वितीया।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विश्वविद्यालयात्कालेजेऽपि नियुक्तिर्ममाभीप्सिताऽभूद्यदि नाम सा दिल्ल्यां भवेत्। भाग्यवशादल्पेनैव कालेन दिल्लीविश्वविद्यालयसंस्कृतविभागे प्रवाचक (रीडर) पदं विज्ञप्तमभूत्। मयाऽपि तदर्थं प्रार्थनापत्रं प्रेषितं दिल्ल्यां नियुक्त्यवसरो लभ्येतेति धिया साक्षात्कारार्थञ्चाहमाहूतः। तदानीं प्रथितयशा अर्थशास्त्रपारङ्गतो डा. वी.के. आर.वी. रावमहाभागो दिल्लीविश्वविद्यालये कुलपतिपदमध्यास्त। दिल्लीविश्वविद्यालयीयस्नातकोत्तरविभागप्रवक्ता इन्द्रचन्द्रशास्त्र्यपि तत्पदाभ्य–र्थ्यासीत्। स तदा नेत्ररोगेण ग्रस्तोऽभूत्। तेनाऽन्धत्वं तस्य प्रादुरासीत्। तथापि स साक्षात्कारार्थमुपास्थात्। मम साक्षात्कारावसरे कुलपतिमहोदयैर्यदुक्तं तन्मच्छ्रोत्रयोरमृतनिष्यन्द इवासीत्। इत्थमावयोर्मिथो भाषणमाविरासीत्।

कुलपतिः – यद्यपि प्रार्थनापत्रं भवतः प्रवाचकपदार्थमेव तथापि किं भवान् प्रवक्तृपदं स्वीकर्तुमलम्? इन्द्रचन्द्रशास्त्री अस्मत्संस्कृतविभागे प्रवक्तृपदे कार्यं करोति। तस्य नियुक्तिर्भवतु नाम प्रवाचकपदे। तेन रिक्ते प्रवक्तृपदे यदि भवान्नियुज्यते तत्किमभ्युपेयेत भवता? भवतो विषये तु यथाऽहं पश्यामि भवांस्तत्सर्वमप्युत्कृष्टतममधिगमिष्यति यन्नियत्या भवदर्थे कल्पितं भवेत्। (As for you, I am sure you will get all the very best that destiny has to offer you)।

मम कृते तु दिल्ल्यागमनमेव प्रधानमासीदन्यत्सर्वमुपसर्जनम्। सन्तुष्टेनान्तरात्मना मयोमि[२४]त्युक्तम्। ओमित्युक्ते दिल्लीविश्वविद्यालयेन नियुक्तिपत्रं मयि प्रेषितं, कतिपयैरेवाहोभिश्च मया तत्र कार्यं प्रारब्धम्। डा. इन्द्रचन्द्रशास्त्रिणा प्रवाचकपदकार्यभाराधिग्रहणानन्तरं यत्पूर्वाधिगृहीतं प्रवक्तृपदं रेचितं न तत् कुलपतिनिर्णयानुसारेणोद्घोषितं न तदर्थे प्रार्थनापत्राण्यामन्त्रितानि न साक्षात्कारः प्रवर्तितः। अद्यतनोऽवरकोटिकः कुलपतिरेतदकरिष्यत् रिक्तं पदमवश्यमेव विज्ञपनीयं साक्षात्कारश्च प्रवर्तनीय एषैव प्रक्रियेति मतिमुपपन्नः। परं डा. वी.के.आर.वी.राव सदृशाः दिगन्तविश्रान्तयशसः शास्त्रपरपारदृश्वानो बुधप्राग्रहरा यदेवोचितम–पश्यंस्तदेव तेषां कृते प्रक्रियाऽभूत्। अद्यापि तद्वचोमाधुरी मच्छ्रोत्रशष्कुल्यौ स्पृशतीव। सुतरामसंस्तुतस्येदंप्रथमञ्च दृष्टस्य जनस्य प्रतिभाया ईदृशमुद्भावनं दिव्यदृष्ट्यैव सम्भवेन्नाम। दिव्यपुरूषाश्च त आसन्।

## ३६

दिल्ल्यां कार्यं प्रतिपन्नेन मया शक्तिनगरस्थ एकस्मिन् वेश्मनि स्वकीय आवासः कल्पितः। मम धर्मपत्न्यन्तर्वत्न्यासीदिति पितरावपि तत्रोपपन्नौ। वासगृहान्वेषणे

२४ ओमाङोश्च (६.१.९५) इत्यनेन पररूपम्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

मया भूयः प्रायत्यत। यतः कुतश्चिदपि विज्ञाय वासगृहं रिक्तमिति तत्राहमुपागतः। तद्वासगृहं रेलकर्मचारिणा केनापि पण्डितपदभाजा ब्राह्मणेन (भारतोत्तरदिग्विभागे ब्राह्मणानां पण्डितेत्याख्या, पाण्डित्यं तेषु भवेद्वा न वा वैश्यकर्म ते सम्पादयेयुः शूद्रकर्म वा) निर्मितमभूत्। तद्धर्मपत्नी तत उच्चैस्तरां प्रगल्भा तमेकतः कृत्वा स्वयमवक्रयार्थमुपेतैर्जनैश्चर्चां प्रवर्तयामास। मां च दृष्ट्वा सद्य एव भाटकेन प्रथमभूमिस्थितं गृहैकभागमावासाय मह्यं प्रकल्पयितुमन्वमन्यत। एकदा मद्धर्मपत्न्या सह चर्चाप्रसङ्ग उक्तमासीत्तया बहु विचार्यैव भाटकेन गृहैकदेशः कस्मैचिदप्यावासाय दातुमहमनुमन्ये विशेषतस्त्वज्ञाताय, परं त्वत्पते[२५]र्मस्तकमवलोक्यैव सहसा तदावासोऽङ्गीकृतः। सत्यं धन्याऽसि यस्यास्तवेदृशः पतिः। अपरस्तदीयो गृहैकदेशोऽपरस्मै गङ्गालालकसेवेत्याख्यायावासाय दत्त आसीत्। तेन तत्कुटुम्बकेन च कालेन जातोऽतीव मधुरो नः सौहार्दसम्बन्धो योऽद्यापि, व्यतीतेषु नैकेषु दशकेष्वप्यक्षुण्ण एव। तद्गृह एव मे पुत्रलाभो जातः। यदा मद्धर्मपत्नी प्रसवार्थं प्रसूतिकेन्द्रं गता तदा मत्तनयां द्विवर्षामिन्दुबालां तत्कुटुम्बकमेवावैक्षत। सापि तात! ('पापा' इति आङ्ग्ल्यां) श्रीमन्तं गङ्गालालं सम्बोधयामास तत्क्रोडमारूढा तेनोपलालिता च परां निर्वृतिं विन्दती। भावस्थिराणि जननान्तरसौहृदानीति यदुक्तं कालिदासेन तदत्र सर्वथा चारितार्थ्यमभजत। मद्गेहिन्या अपि कसेवागेहिन्या सह समुदमीलत्प्रगाढः स्नेहसम्बन्धः सहोदरे इव ते परस्परेणालपतां सहैव चाभुञ्जातां पण्डितकुटुम्बविषयिणीं च चर्चां प्रावर्तयेताम्। पण्डितकुटुम्बकस्य विशेषतः पण्डितपत्न्यास्तत्कुटुम्बकेन सह नासीन्मधुरः सम्बन्धः। पण्डितपत्नी नैकदा कसेवां प्रति तत्पत्नीं वा प्रति व्यङ्ग्यवाचोऽपि व्यसृजत्। ता अधिकृत्य मद्धर्मपत्न्यास्तद्धर्मपत्न्याश्च मध्ये चिरं हासपरिहासौ प्रावर्तेताम्। प्रातर्महानसाद् बहिः स्थिताय स्वपतये[२६] कसेवाख्याय यदा तद्धर्मपत्नी सद्यः सिद्धा घृताक्ता मूलकोपमिश्रा आलुकोमिश्रा वा करपट्टिकाः परिवेवेष्टि स्म तदा दम्पत्योः परस्परानुरागमसहमाना पण्डितपत्न्यसूयावशङ्गता काक्षेण तावपश्यदस्फुटञ्च किञ्चिदवोचत् येन तदसूयां भूयोऽप्युपोद्बलयितुमधिकतरं तौ परस्परप्रणयं प्रादर्शयताम्।

एकदा कसेवा इत्यनेन पण्डितपत्न्यभिहिता वेतनवृद्धिस्तस्य जातेति। कटाक्षेण पण्डितपत्न्योक्तं कियती वृद्धिः? किं चतुस्सहस्ररूप्यकाणि? तदा तु नैतावती वृद्धिर्जाताऽभूत् परं कालेनैतावदेव तस्य वेतनं जातम्। तदा हसता कसेवा इत्यनेन पण्डितपत्न्युक्ता भगनिप्रवरे! यदि वक्तव्यमेवासीत् तर्हि कुतो न षट्सहस्राणि वाऽष्टसहस्राणि वेत्युक्तम् तेन तावदेव मे वेतनमभविष्यत्?

---

२५-२६ पतिः समास एव (१.४.८) इत्यनेन घिसञ्ज्ञायां घेर्ङिति (७.३.१७६) इत्यनेन गुणे रूपम्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पण्डितगृहे सार्धशतत्रयं रूप्यकाणां मया भाटकरूपेण देयमभूत्। तच्च च ममाधिकं प्रत्यैयत। अतः किञ्चिन्न्यूनेन भाटकेन मया तत्समीपस्थसनातन-धर्मकालेजप्राचार्य डा. आर.एन.रायमहाभागनिकाय्यै[27]कदेशोऽवक्रीतः। कतिपये मासा एवास्माकं तत्र निवसतां गता यदाऽस्माभी[28] रूपनगरस्थं गृहं क्रीतम् पञ्चाशत्सहस्ररूप्यकैः। १९६० वर्षे जूनमासस्य १५ दिवसे वयं तदुपेताः। पञ्चाशत्सहस्ररूप्यकमितो राशिर्नास्मास्वासीत्। हंसराजकालेजे कुरुक्षेत्र–विश्वविद्यालये चाऽल्पाल्पकालमेव कार्यरतस्य मे भविष्यनिधिः (प्राविडेन्ट फण्ड) नासीत् संचितः। केवलं पञ्चसहस्रमुद्रापरिमितो राशिरेवासीन्मया सञ्चितः। पितृचरणेष्वासीत् कश्चन तत्सञ्चितो राशिः। अवशिष्टांशस्याऽपेक्षितस्य राशेः ऋणं कृत्वैव व्यवस्था करणीयाऽभूत् ऋणं च मया पितृव्यात् गृहीतं येन तद्वृद्धिभारो न मय्यापतेत्।

ऋणं त्वरितं निर्यातनीयमित्यासीत् मे मतिः। अतो यतः कुतोऽपि येन केनाप्युपायेन वाऽर्थसङ्ग्रहेऽहं प्रावृतम्। तदानीं विश्वविद्यालये सान्ध्यमहा-विद्यालयोऽप्यासीत्। तत्रापि सेवावृत्तिमुपजीवतां कृतेऽध्यापनव्यवस्थाऽऽसीत्। तत्र संस्कृतमप्यध्याप्यते स्म। अहं तत्राप्यध्यजीगपम्। प्रतिपञ्चाशत्कलं कालखण्डं (period) द्वादशरूप्यकाण्यासीत् पारिश्रमिकम्। एवं कालेजेऽप्रविष्टानां तत्र च नियमितरूपेणाऽनधीयानां छात्राणां कृतेऽप्यासीत् विशिष्टाऽध्यापनव्यवस्था। विश्वविद्यालये 'नान् कालिजियेट विमन्स बोर्ड' इत्यप्यासीत् संस्थैका तत्राप्यहमध्यापिपम्। द्वादशरूप्यकाणि तत्राप्यासीत् पारिश्रमिकं प्रतिपञ्चाशत्कला–ध्यापनम्। एवमेवाऽऽ प्रभातादानिशीथमध्यापनकर्मण्येवात्मानं व्यापीपरं कतिपयमुद्रार्जनप्रेरणाप्रयुक्तः। किञ्च, परीक्षाकाले निरीक्षणकार्यमकार्षमनेक–विश्वविद्यालयोत्तरसञ्चिकापरीक्षणञ्च। न केवलमेतदेव, विभागाध्यक्षेण डा. नरेन्द्रनाथचतुर्धुरीणेन परीक्षार्थं प्राप्ताः परश्शता उत्तरपुस्तिका अपि तद्गृहानुपेत्य पर्यैक्षिषि तदानुकूल्यमभिवाञ्छन्। एवमात्मानमचिन्तयता मया तत्र कर्मणि प्रवृत्तम्।

## ४०

रूपनगरस्थं यद् गृहमस्माभिः क्रीतं तन्नासीत् सम्यगवस्थं भूयः प्रतिसंस्कारा–पेक्षत्वात्तस्य। नानावर्षाणि तत्र सुधालेपादि नाभून्न वा कवाटेषु कुक्कुभलेपनम्

---

२७ गृहार्थकोऽयं शब्दः। तथा ह्यमरः – गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः, २.२.५

२८ रो रि (८.३.१४) इत्यनेन प्रथमरकारलोपे ढ्रलोपे पूर्वस्य दीर्घोऽणः (६.३.१११) इत्यनेन पूर्वेकारस्य दीर्घः।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

(वार्नेश)। भित्तयश्चिक्कणाः कृष्णवर्णतामापन्नाः। महानसस्यैकः कवाट एव नासीत्। अलिन्दस्थं कुट्टिममपि मलिनमपगतरागञ्च नेत्रयोरशूलायत। शौचालयेषु पदस्थानानामभावस्तच्छोचनीयामवस्थामभिव्यनक्। उपरितनभूमावेकत्र कक्षे नियमविरोधेन कृता छदिर्विक्रयात् पूर्वं तत्स्वामिना भञ्जिता। तेन यत्र तत्राऽवकरनिचयो दृष्टिपथेऽपप्तत्। गृहप्रवेशात्पूर्वं तच्छोधनार्थं नाना कर्मकरा मया नियोजिताः। यथाऽहं स्मरामि षष्टिः करण्डका अवकरस्य पूर्णास्तैर्गृहादपाकृताः। वणिजः कस्यापि तद् गृहमासीत् त्रिभूमिकम्। तृतीयायां भूमावासीदेक एव कक्षोऽपरेण स्वल्पेन कक्षेण बरसातीत्याख्येन युक्तः। प्रत्येकं कक्षे नानाजनानां निवास इति सुतरां मालिन्यमस्य। विक्रेतव्यमिति नेदं प्रतिसंस्कृतम्। प्रतिसंस्कारोऽस्यास्माभिः कारितः। पूर्वतनश्चिक्कणः कृष्णवर्णतामापन्नो भित्तिलेपो निर्घृष्य निर्घृष्य पृथक् कृतस्तत्स्थाने नवश्च कारितः। शौचालयेषु पदस्थानान्यपि कारितानि। यथाऽपेक्षं हस्तप्रक्षालनादिकार्थं वाशबेसिन इत्याख्याः पात्र्यः स्थापिताः। अन्यच्च बहु कारितम्। दश वा पञ्चदश वा सहस्राणि रूप्यकाणां प्रतिसंस्करण एव व्ययितानि। कालान्तरे प्राङ्गणमगाररूपेण परिणमितं तदुपरि च बृहत्परिमाणमगारं कारितम्। द्वितीयभूमौ पूर्वं पृष्ठभागे वरण्ड आसीत् तदुभयपार्श्वयोः प्रत्येकं पार्श्वे महानसं स्नानागारं शौचालयश्चासत। कालान्तरे वरण्डस्थाने बृहदगारं निर्मापितम्। एकत्र पार्श्वे च महानसस्नानागार–शौचागाराणां स्थाने बृहत्परिमाणं महानसमाधुनिकोपकरणयुतं कारितमपरत्र पार्श्वे च स्नानशौचयोः कृतेऽगारमेकमेव कारितम्। एतस्य सर्वस्य निर्माणे लक्षं रूप्यकाणि व्ययितानि। एवमेव प्रथमभूमिकायां वीथिकायां प्रत्येकं पार्श्वेऽगारद्वयस्य स्थाने मध्यवर्तिनीं भित्तिमपाकृत्यैकमगारं सुदीर्घं कल्पितम्। गृहमुखभागे प्रस्तरमयं कुट्टिमं कारितम्। तत्राप्यर्धलक्षरूप्यकाणि व्ययितानि। तदा नवकलेवर–मिवाभादस्मद्गृहम्। अस्तु, पूर्वं पुस्तकसङ्ग्रहोऽस्माभिः प्रथमभूमौ स्थापितोऽभूत्। पश्चाद् गृहनिर्माणविशेषज्ञैरुक्तं यत् पुस्तकानां भवति महान् भारोऽतस्तानि भूमितल एव स्थापनीयानि। किञ्चित्कालानन्तरं तथैवास्माभिः कृतमपि। ऋणं निर्यातनीयमिति द्रव्यमपेक्षितमासीत्। अतो गृहस्य भूमितलं भाटकेन कुटुम्बकद्वयाय निवासार्थं दत्तम्। द्वितीयभूमावपि भाग एकस्तथैव कृतः। अस्मत्कुटुम्बकं केवलमेकं बृहत्परिमाणमगारमेवाध्यवसत्। तत्र मध्ये जवनिकां पातयित्वैकमप्यगारमगारद्वयेनैव परिणामितम्। एवमस्माभी रूपनगरस्थे स्वे गृहे रचित आवासः। यथा कालोऽत्यगाद यो वा भागो गृहस्य रिक्तोऽभूत् स न भाटकार्थं प्रदत्तः। कालेन सम्पूर्णमेव गृहमस्मास्वासीत्। पर्याप्तं स्थानमासीत् तत्र। विशालं ग्रन्थभाण्डागारमस्माकं तत्रैव व्यराजत।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अद्यत्वे दिल्लीविश्वविद्यालये नियमोऽस्ति यद् विभिन्नकोटिकैरध्यापकैरधिकाधिकं तत्तत्कोट्यनुसारेण विशिष्टं कालावधिं यावदेवाध्यापनीयम्, प्रोफेसरपदभाजा षट् कालांशान् (Periods), प्रवाचकपदभाजा अष्ट, प्रवक्तृपदभाजा च द्वादशकालांशान् यावदध्यापनीयम् परं तदा नैतादृश आसीत् नियमः। यद्यप्यासीदपि न च दृढतयाऽपाल्यत। मया प्रवक्तृपदे स्थितेन पञ्चदश षोडश वा कालांशान् यावदध्यापितं नानाविषयाश्चाध्यापिताः। व्याकरणशास्त्रे सिद्धान्तकौमुदी, महाभाष्यं वाक्यपदीयञ्च, अलङ्कारशास्त्रे साहित्यदर्पणं, भाषाशास्त्रं, संस्कृतनिबन्धादिरचनां चाहमध्यजीगपम्। अध्यापने मम नैसर्गिकी प्रवृत्तिरिति दिनमध्यापयन्नपि न तत्र श्रमं कञ्चिदन्वभूवम्।

महतीयं विडम्बना दैवस्य यन्नानाकाव्यग्रन्थानां प्रणेत्राऽपि मया न काव्यग्रन्थाध्यापनावसरो लब्धः। व्याकरणे भाषाशास्त्रे च मम सीमाबन्धः सञ्जातः। एकदा मत्सहयोगी डा. चन्द्रभानुगुप्तो हिन्दूकालेजसंस्कृतप्राध्यापकः प्राचार्यपद–नियुक्तिवशेनायोध्याङ् गतः। स दिल्लीविश्वविद्यालये नैषधीयचरितमध्यापयति स्म। तस्मिन् दिल्लीतोऽपगते तत्काव्यमन्येन केनाप्यध्यापनीयमासीत्। तदुपलक्ष्य विश्वविद्यालयसंस्कृतविभागाध्यक्षं डा. नरेन्द्रनाथचतुर्धुरीणमहमुपासदमचकथञ्च तत्काव्यमहमध्यापयितुमिच्छामीति। सुतरामुद्विग्नेन तेन तत्कालमेवोक्तं तदा व्याकरणं कोऽध्यापयिष्यति? मयोक्तं व्याकरणमहमेवाध्यापयिष्यामि यथापूर्वम्। ततोऽतिरिक्तकार्यरूपेण काव्यं पाठयितुमिच्छामि। अतस्तेनोक्तं यद्येवं, साधु तर्हि। गुप्तानुपस्थितौ कांश्चिन्मासानेव मया नैषधीयचरितं पाठितम्। समासादितश्च तेन कक्षया च मया च वाचामगोचरः कश्चनानन्दातिरेकः। गच्छता कालेन सर्वेऽपिच्छात्राः सम्भूय विभागाध्यक्षम् उपजग्मुरूचुश्चात उत्तरं डॉ. सत्यव्रत–महाभागैरेव नैषधीयचरितं पाठनीयमिति। तेनापि तथोरीकृतम्। गुप्तमहाशयः कतिपयमासानन्तरम् अयोध्यातः प्रतिनिवृत्तः हिन्दूकालेजे च स्वकीये पूर्वतने पदे स्थितः। तत्प्रत्यापत्तौ विश्वविद्यालये नैषधीयचरितपाठनं तेनैव प्रारब्धम्। नूत्नं सत्रं प्रारब्धमासीन्नवाश्चासन्कक्षायां छात्राः। अयमासीदन्तो मम काव्यपाठनस्य। इदं मम जीवननाटके विष्कम्भकमिवास्त। वस्तुतः काव्यपाठनं केवलं काव्यगतानां शब्दानामर्थापनमात्रमेव, तद्भावप्रकाशनमात्रमेव, तद्रूपविश्लेषणमात्रमेव तद्रसालङ्कारादिविवेचनमात्रमेव न, अपितु तदात्मन आविर्भावनम्। ये महाकवयस्तेषां पदशय्यैव तद्भावमाविष्करोति। अतः काव्योच्चारणे सविशेषमवधेयं काव्याध्यापकेन। काव्यं न कदाचनाऽपि गद्यवत्पठनीयम्, न कदाचनाऽपि तथोच्चारणीयं तद् यथा तस्य स्वारस्यं न समुन्मीलेत्। रेवाम्भसां विन्ध्यपादैः



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

सङ्घट्टः शब्दतोऽनुक्तोऽपि पदशय्ययैव स्फारीभवति— रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णामिति। अत्र वैदर्भीरीतिसन्दर्भे वैशिष्ट्यभाजाऽन्यत्र कोमलकान्तपदावलीं प्रयुञ्जानेन कविना संयुक्ताक्षरबहुलः शब्दगुम्फः समाश्रितः। तथैव सारवत्तयाऽयमुच्चारणीयो न तु निस्सारवत्तया। एवं नैषधीयचरिते हंसोक्त्या नलस्य चित्तद्रुतौ प्रयुक्तो वाक्यविन्यासः किञ्चिन्मन्दं मन्दं, विरामं विरामं पाठ्यस्तस्य तथैवापेक्षितप्रभावोत्पादकत्वात्—रूपमदर्शि, धृतोऽसि यदर्थं, गच्छ, यथेच्छमथेत्यभिधाय। अत्र महाकविना तादृशानि पदानि प्रयुक्तानि यैर्नलस्य भावोद्रेकः क्रमशः स्फुटीभवति। हंसस्य विमोचनं, तस्य गगन उत्पातश्चाप्याविर्भवतः। नाहं महाकविः तथापि ममापि काव्ये पदशय्या भावानुप्रवणतां वहति। सा तु कवेः सहजैव। यदाऽहं तरङ्गप्रेङ्खोलनं वर्णयामि तदा मत्पदविन्यास एव तत्स्फुटीभवति। तथाहि—'आनन्दसागरतरङ्गपरम्परासु प्रेङ्खोलितौ सममुभौ रजनीं व्यनैष्टाम्।' अत्र प्रेङ्खोलनस्यानुभवो निगदेनैव भवति। एवं तरङ्गाणां तोलनोत्तोलने निम्नोद्धृते मदीये पद्यांशे पाठमात्रेणैव भवतः 'अनङ्गरङ्गस्थल–मन्तरङ्गं तरङ्गयन्ती कुटिलैः कटाक्षैः'।

मया हंसराजकालेजे प्राध्यापयताऽपि दिल्लीविश्वविद्यालये कक्षा अध्यापिताः। सिद्धान्तकौमुदी तदा मया पाठिता। ममच्छात्रेषु तदाऽऽसन् कृष्णलालो यः कालान्तरे विभागाध्यक्षपदमलङ्कृतवान्, नित्यानन्दशर्मा यः पी.जी.डी.ए.वी.कालेजस्य सांध्यसत्रीयस्य प्राचार्यपदमभूषयत्, सूबेसिंहराणा यो महाविद्यालयाध्यक्ष–पदमलमकरोत्।

दिल्लीविश्वविद्यालये संस्कृतविभागे स्नातकोत्तरकक्षायां वेदधर्मशास्त्रदर्शन–व्याकरणाऽलङ्कारशास्त्रेषु यस्मिन्कस्मिन्नपि विषये छात्रः स्वेच्छानुसारेण विशेषज्ञानमर्जयितुं स्वतन्त्र आसीत्। कालान्तरे विषयेष्वेषु अभिलेखशास्त्रं प्राकृतजैनधर्माध्ययनविषयावपि समायोजितौ। मम कार्यकालस्य प्रथमे दशकद्वये छात्राः विशेषज्ञानार्जनाय भूरिशो व्याकरणमेवाऽधिजगिरे। भूयसी संख्या तदा विशेषविषयत्वेन व्याकरणमधीयानानां छात्राणामेवाऽभूत्। तत्र हेतुरासीत् तदानीन्तनस्य विभागाध्यक्षस्य डा. नरेन्द्रनाथचतुर्धुरीणस्य प्रेरणाऽपि। तस्यासीत् दृढो विश्वासो यत् व्याकरणाध्ययनेन विद्यार्थिनां महदुपकृतं भवति। अतः प्रत्यक्षपरोक्षरूपेण छात्रान् स व्याकरणाध्ययनाय प्रचोदयति स्म। तदानीं विशिष्टोऽर्थ आसीत् विभागाध्यक्षप्रेरणायाः। अद्यत्वे न कोऽपि कमपि कस्मिंश्चिदर्थे प्रेरयति। छात्राः स्वबुद्ध्यनुसारेणाऽमुको विषयः सुगम इति मत्वा तं प्रत्युन्मुखीभवन्ति। व्याकरणं बहुपरिश्रमापेक्षमिति सामान्यजनानां धारणा। सूत्राणां बुद्धौ पर्यवस्थापनं यल्लोकभाषया रटनमितिप्रसिद्धं, तद्वृत्तेर्बोधः, तेषां तत्तत्स्थलेषु प्रयोगो, रूपसिद्धी, रूपमाला चेत्यादि बह्वायाससाध्यमिति पश्यन्ति जनाः। न केवलमिदमधुनातनमेव



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

दर्शनं पुराकालेऽप्येवमेवान्वभवन् जनाः। कृच्छ्रगहनयोरर्थयोः क्तप्रत्यये कष् धातोरिडभावं प्रतिपादयतः कृच्छ्रगहनयोः कषः (७.२.२२) इति सूत्रस्य कृच्छ्रार्थे 'कष्टं व्याकरणम्' इति काशिकाकृदुपस्थापितमुदाहरणमेतदेव प्रमाणयति। यदि काशिकाकृतः कालेऽपि व्याकरणं कष्टमासीत् तर्हि सम्प्रति तु कष्टतरं भवेदद्यतनानां जनानामध्ययनाय ग्लायताम्। भारतेतिहास ईदृशोऽपि कालः समायातः यत्र व्याकरणं प्रति सर्वथोपेक्षाभावः तिरस्कारभावश्च पर्यलक्ष्येताम्। श्रीजयन्तभट्टवच एतदेव संकेतयति—

"दुष्टग्रहगृहीतो वा भीतो वा राजदण्डतः।
पितृभ्यामभिशप्तो वा कुर्याद् व्याकरणे श्रमम्।।"

यदि पूर्वमेतादृशी स्थितिरासीत् तर्हि सम्प्रति कीदृशी सा भवेदिति अनुमानगम्यमेव। अतोऽभिलेखशास्त्रे धर्मशास्त्रे च विशिष्टा प्रवृत्तिश्छात्राणाम् अथवाऽलङ्कारशास्त्रे ज्योतिषशास्त्रे वा।

## ४२

यदा मया दिल्लीविश्वविद्यालये कार्यं प्रारब्धं तदाऽल्पीयांस एवच्छात्रा आसन् संस्कृतविषये। प्रथमवर्षे चत्वारो वा द्वितीयवर्षे चत्वारो वा पञ्च वा। अध्यापकैस्सह छात्राणामतीव नेदीयान् सम्बन्ध आसीत्। शरत्कालेऽनेकशः कक्षाद् बहिरेव प्राङ्गणे वा वितर्दिकायां वाऽऽसन्दीरानाय्य तत्र चोपविश्याऽध्ययनं प्राक्रामत येनाऽऽतपसेवनमपि भवेदध्ययनमपि। भवनोपरितले कदाचिदासन्द्यादिकमपि छात्रा नाद्रियन्त वितर्दिकासीम्न्येव चोपविश्याध्यैयत। परस्परेण हासप्रहासौ कुशलपरिप्रश्नादिकमपि च स्वच्छन्दतया प्रावर्तन्त। यदा मम कार्यकालसमाप्तौ सौप्रस्थानिकोत्सवो विभागेन समायोजितस्तदा नैकैर्ममच्छात्रैर्मत्सम्बद्ध-संस्मरणप्रस्तुतावुक्तं यदा मे विवाहनिश्चयो जातस्तदा ते कथं मया सूचिताः कीदृशी च कन्या मे भार्या भवित्रीति चोक्तम्।

गच्छता कालेनच्छात्रसंख्या भूयसीं वृद्धिङ् गता। ममाध्यक्षकाले शतचतुष्टयमासीत्छात्राणां स्नातकोत्तरकक्षायां, पञ्चाशच्च एम. फिल्. कक्षायां शतद्वयञ्च पीएच.डी.कक्षायाम्। अध्यर्धशतञ्चासन् प्रध्यापकाः विश्वविद्यालये च कालेजेषु च संहत्य। एवं सस्कृतविभागो दिल्लीविश्वविद्यालयविभागेषु बृहत्तरो विभाग आसीद्येन विशिष्टं किमपि गौरवमिदमभजत। सोऽयं कालो विभागस्य



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

स्वर्णकाल आसीत्। विभागस्य प्रतिष्ठा तदा चरमां सीमानमधिरुढाऽजनयदानन्द-लहरीरनसूयकानां संस्कृतानुरागिणां हृदयेषु।

दिल्लीविश्वविद्यालये मया स्वजीवनस्य प्रथमान्यष्टवर्षाणि विभागाध्यक्षस्य मान्यस्य डा.नरेन्द्रनाथचतुर्धुरीणस्य सहयोगिरूपेण व्यतियापितानि। तस्यासीन्मयि सहजः कश्चन स्नेहातिरेकः। तत्सम्बद्धा नैकाः स्मृतय एकैकशो मम मनसि परापतन्ति। यदा स कक्षामध्यापयितुं गच्छति स्म तदा पाठ्यपुस्तकं सम्यक् परिशील्यैव याति स्म। नैकदाऽहं तं ग्रन्थं परिशीलयन्तमद्राक्षम्। एवं कर्तव्यमिति गुरोरादेश इति मां सोऽचकथदनेकशः। एष एव समीचीनो विधिरित्यहं पश्यामि। विषयो यद्यपि ज्ञातो भवेदध्यापकस्य तथाऽपि तदंशः कश्चन स्यात् स्मृतिपथमनुपारूढोऽतोऽध्यापनात्पूर्वं ग्रन्थः परिशीलयितव्य एव। तेन तदाशयः सम्यग् स्फुरति।

डा. नरेन्द्रनाथचतुर्धुरीणो वर्षत्रयं कलासंकायाध्यक्षश्चाप्यासीत्। तस्याध्यक्ष्यकाले ट्युटोरियलभवननिर्माणं परिपूर्णतामगमत्। तत्राध्यापकानां कृते नैके कक्षा निर्मिताः। यतो हि मयि न कक्ष एतादृश आसीत् यन् मदीयमिति परिगृह्णीयाम्, यत्र पुस्तकाद्यहं स्थापयेयं, यत्र वैककक्षाध्यापनानन्तरं द्वितीयकक्षाध्यापनं यावद् यदन्तरालं तद्यापयितुं शक्नुयाम्, यत्र वा मां द्रष्टुमुपेतानभ्यागतानहं सत्कर्तुं तैश्च सहाऽलपितुं समर्थः स्यामतो मया डा. नरेन्द्रनाथचतुर्धुरीणः प्रार्थितो यन्नवनिर्मितेषु कक्षेष्वेकं मदर्थमपि मन्नाम्ना च व्यवस्थापनीयमिति। तेनोक्तं नेदं भवितुमर्हति। मनाग् विरम्य चोक्तम् अयं (तदीयः) कक्षस्तवैवेति। तेनोत्तरेण नातिप्रमना अहं नैव किञ्चिदवोचं तूष्णीं चास्थाम्। ट्युटोरियलभवनं कलासङ्कायभवनात्किञ्चिद्दूरेऽस्ति। चतुर्धुरीणः पुनः स्वसौविध्यार्थं मां निरन्तरमात्मनो निकट एव वाञ्छतीति भावो मम मनसि समुदितः। तदीयं बहु कार्यमहमेवाकरवम्। वार्धक्यवशात् स तत्स्वयं कर्तुमशक्त आसीत्। तत्पत्रादिकान्यहमेव न्यभान्त्सं स तु तानि वाचयित्वा तेषु हस्तमेवाऽऽदात्। एवं कार्यालयीयासु सञ्चिकासु (फाइल्स) टिप्पण्यादिकमहमेवारचयम्। अहं तं छायेवाऽन्वगच्छम्। अतः क्षणमपि मे पृथग्भावं कार्यालयकाले न सोऽसोढ। अस्माद्धेतोरेव दूरभवने मदीयकक्षव्यवस्थां न सोऽन्वमंस्तेति तदाऽभून्मे मनसि। स्वकीयं सुखमेव चिन्तयत्येषः। तपर्त्तौ प्रावृषि वा कुत्र मया छत्रं वर्षप्रावारकं (रेन कोट) वा स्थापनीयं भवेदिति नास्य चिन्ताविषयः। नानाविषयाऽध्यापनार्थं नानापुस्तकानि प्रत्यहमहमानयामि प्रत्यहञ्च प्रतिनयामि। एतद्भारो मां बाधते न तु तम्। सन्त्यस्मिञ्जगति स्वार्थाऽविरोधेन परार्थघटकाः, अयं पुनः कीदृशः। एष सर्वोऽपि मे विचारसन्तानो मय्येवावास्थित। नाहमेनं कस्याप्यन्यस्य पुरतः प्रादुरकार्षम्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

यदाऽहं विभागाध्यक्षपदमारूढस्तदाऽन्वभूवं याथार्थ्यं स्वस्याऽदीर्घदर्शितायाः। यस्मिन् कक्षे डा.चतुर्धुरीणो विभागाध्यक्षकार्यं निरवोढ तस्मिन्नेवाऽहमपि। किं नोक्तमासीत् तेन तवैवाऽयं कक्ष इति। आत्मीयमेवैनमवेहीति। सत्यमेवोक्तम्– ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति। एतादृश्येकान्यापि घटना मे स्मृतिपथमुपैति। डा.चतुर्धुरीणेन नेत्ररोगपीडितेन नेत्रशल्यचिकित्सा कारिता यया कञ्चित्कालं न स सम्यग्द्रष्टुमपपारत्। एकदा तत्कक्षेऽहं प्रविष्टः। स विभागाध्यक्षाऽऽसन्दीं विहायाऽन्यस्यामासन्द्यामुपविष्टः केनाप्यालपति स्म। अहं तदाऽऽसन्नायामेवाऽपरस्यामासन्द्यामुपविष्टः। तत्रोपविशन्तं मामालोक्य स विभागाध्यक्षाऽऽसन्दीमङ्गुल्या निर्दिशन्प्राह तत्रोपविशेति। कथमेतस्योपस्थितौ तत्रोपवेष्टुमहं शक्नोमीति मया नैतत् कृतम्। तदा सोक्तिस्तेनाऽम्रेडिता – अहं कथयामि तत्रोपविशेति। अहं तेन भूयस्तरां वैलक्ष्यमन्वभूवं न च तथा कर्तुमशकम्। तदा तेन कुतो न मद्वचः पालयतीति निपुणं साऽऽसन्दी निभालिता स्वकीयं प्रमादं चाऽभिलक्ष्य ओह इत्युक्त्वाऽऽसन्द्यन्तरादुत्थाय तामासन्दीमुपेत्य स तत्रोपविष्टः। स्मयमानेन तेन तदोक्तमासीत् – एकस्मिन्दिने तवैवेयमासन्दी भविष्यतीति। पञ्चवर्षानन्तरं तथैव सञ्जातम्।

विभागीये कार्ये यत्साहाय्यं व्यधायि मया तस्य तेनाऽपि मे महदुपकृतम्। १९६९ वर्षे यदाऽहं विभागाध्यक्षपदमारूढस्तदा मम सर्वापि कार्यपद्धतिः सुविज्ञाताऽऽसीदिति तत्सञ्चालने नाणुमपि काठिन्यमहमन्वभूवम्। पूर्वमप्यहमेत– दकरवमेव केवलं हस्त एव चतुर्धुरीणेन दत्तोऽभवत्।

## ४३

१९५६ वर्षे डा. सूर्यकान्तेन दिल्लीविश्वविद्यालये रसिकविहारी जोशी रीडरपदे नियोजितः। चयनसमितेः स तदा सदस्य आसीत्। डा.जी.एस.महाजनी तदासीत् कुलपतिः। अहमप्यासं तदा तत्पदप्रार्थी। परं जोश्यां तस्यासीत्पक्षपातः। तेन स सेवया चार्थेन चासीत्तोषितः। वर्षत्रयं काशीहिन्दूविश्वविद्यालये सोऽध्यापितवानिति चयनसमितौ तेन मिथ्या भाषितमहं च तत्प्रमाणीकरोमीत्युक्तम्। अहम् १९६३ वर्षे रीडरपदम् अवापम्। डा. चिन्तामणिद्वारकानाथदेशमुखस्तदानीं कुलपतिरासीत्। साक्षात्कारपरीक्षकेषु कालिशास्त्रीति तदानीन्तनकालिकातास्थराजकीयसंस्कृत– महाविद्यालयप्राचार्योप्यासीत्। तेन समुत्थापितः एकः प्रश्नः–

शास्त्री – समास इत्यस्य कोऽर्थः?



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अहम् – समसनं समासः। सम् पूर्वकादसुक्षेपण इति धातोर्निष्पन्नोऽयं शब्दः।

शास्त्री – अपरः कोऽर्थः शब्दस्यास्य?

अहम् – संक्षेप इति।

शास्त्री – किं समासेऽपि संक्षेपार्थो घटते?

अहम् – अवश्यम्।

शास्त्री – शिवकेशवौ इत्यत्र कः संक्षेपः?

अहम् – अन्तर्वर्तिन्या विभक्तेर्लोप एवात्र संक्षेपः। समासात् पूर्वं शिवः केशवः इति द्वे पदे। शिवः इत्यत्रैका विभक्तिः केशव इत्यत्र चापरा। कृते समासे शिवकेशवौ इत्यत्रैका विभक्तिः।

शास्त्री – परमेकवचनस्थाने द्विवचनं सञ्जातम्, शिवकेशवौ इति। तर्हि कथं संक्षेपः?

अहम् – औ इति विभक्तिप्रत्ययस्त्वेक एव। समासात् पूर्वं द्वे विभक्त्यौ, शिवः इत्यत्रैका, केशवः इत्यत्रैका। कृते समासे कृत्तद्धितसमासाश्चेति प्रातिपदिकसञ्ज्ञायां स्वाद्युत्पत्तौ औ इत्येक एव विभक्तिप्रत्ययः।

कुलपतिः – शिरश्चालनेन मन्मताभ्युपगमरूपां सञ्ज्ञां ददाति।

शास्त्री – कि फलं समासस्य?

अहम् – ऐकपद्यमैकस्वर्यं चेति।

अपरेऽपि तेन चान्येन परीक्षकेण समुत्थापिताः प्रश्नाः सम्यक् समाहिता मया।

जोशी चिरतरं मत्तः पूर्वं नियुक्त इति मदपेक्षया वरीयता तस्यासीदेव।

१९६५ वर्षेऽप्रैलमासस्य त्रिंशे दिवसे डा.चतुर्धुरीणस्य कार्यकालः समाप्तिं गतः। तस्मिन्दिवसे स विश्वविद्यालयतोऽवकाशं गृहीतवान्। ततः परस्मिन् दिने जोशी कार्यवाहकविभागाध्यक्षरूपेण कार्यं प्रारब्धवान्।

डा. चतुर्धुरीणः प्रत्यक्षतो जोशीमतीवोपलालितवान् भाई जोशी भाई जोशी इत्यसकृदाम्रेडयन्मह्यं नैकदाऽरोचतापि। कार्यकालान्तिमे दिवसे तेन विभागीयः कार्यभारस्तस्मै समर्पणीय आसीत्। (charge handover) स वरीयान् रीडर इति कृत्वा। सोऽपराह्णे पञ्चवादनं यावत् तदागमनं प्रत्यैक्षिष्ट। अहं मध्याह्नतस्तावत्कालान्तं चतुर्धुरीणेन सहैवासम्। चत्वारिंशद्वर्षाणि तेन दिल्लीविश्वविद्यालये कृतमासीत् कार्यम्। विश्रामकालोऽस्य तदा सम्प्राप्तः। विभागीयायाम् अल्मारिकायां यावन्ति तस्य वस्तून्यासन्निजानि तानि तेन सङ्गृहीतानि पटखण्डे चैकत्र स्थापितानि पटखण्डश्च ग्रन्थिबन्धितः। यानि विभागीयानि वस्तून्यासन् तेषां सूची तेन कृता। यदा पञ्चवादनं यावदपि जोशी न समागतस्तदा तेन



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कार्यलयाधीक्षकः समाहूतः। सूच्यामेकत्र तेन तस्य हस्तो दापितोऽपरत्र च मम। ममेति कुत इति प्रश्ने तेनोक्तमिदमावश्यकमिति। सूची तेन तदा कार्यालयाधीक्षकाय श्रीरामकृष्णाय दत्ता। दत्वा च तां स स्वगृहं मौरिसनगरस्थं प्रति प्रस्थितः। तेन सहागच्छमहमपि। पटखण्डभारं गृहीत्वा तदनुचरस्तमनुव्यचलत्। प्रतिष्ठामानस्य तस्य नेत्रयोर्यो भावोद्रेकः पर्यलक्ष्यत सोऽद्यापि मम प्रत्यक्ष इव। चत्वारिंशद्वर्षाणि यस्मिन्विश्वविद्यालये नाना पदेषु येन कार्यं कृतं तस्य कृते परेद्यवि स परकीयो भविष्यति। प्रत्येकं जनस्य जीवन एतादृशः कालः समापतत्येव। मध्येमार्गं किमपि विचिन्त्य तेनाहमुक्तः—स्वकर्तव्ये मा प्रमदः। नहि कश्चित्त्वां स्प्रष्टुमपि शक्ष्यति। (डोन्ट निग्लैट युअर ड्यूटी नो बडी कैन टच यू) (= धर्षयितुमलं स्यात्)। तस्येदं वचोऽकस्मादुदीरितं कञ्चिदवसादमवातनोन्मे मनसि। स्वकार्ये न मया कदापि प्रमत्तम्। किमेवं तर्हि चतुर्धुरीणो तत्र मा प्रमद इत्याह। मनसा वाचा कर्मणा च वर्षाण्ययं सेवित एकतानेन मनसा। तथापि मामधिक्षिपतीव। अप्रमादो नाम मम शीलम्। न च शीलविपरीतं कश्चिदाचरति। अस्तु। यत् तेनोक्तं तन्मया श्रुतम्। न किञ्चिदप्युक्तम्। न सा मे प्रकृतिः। तेन यदा कदापि येन केनापि यत्किमप्युक्तं तन्मया श्रुतमेव न तत्प्रतिवादः कदापि कृतः। किंहेतुकं तस्य वचनमिति प्रतिप्रश्नोऽपि न जातु कृतः। तद्वचनरहस्यं परेद्यवि मम स्पष्टीभूतं यदा जोशीं तदासनासीनमहमपश्यम्। राज्यपरिवर्तनेऽन्येनैव जनेन सह मया व्यवहर्तव्यं भवेत्। स मयि कथं व्यवहरेदिति को वेद। न भविष्यत्यतः प्रभृति चतुर्धुरीणस्तत्र यो विषमेऽपि मां छाययाऽनुग्रहीष्यति। यदि गच्छतो मम प्रमादतः स्खलनं भवेदपि तर्हि न स तत्र भविष्यति समाधातुम्। अतो भूयो मयाऽवधातव्यं भवेद्येन प्रमाद्येयैव नहि। अयमेवाशय आसीच्चतुर्धुरीणवचसः। महाजनाः सूत्ररूपामेव वाचमुदीरयन्ति। तद्व्याख्यानं त्वन्येष्वधि।

यथा हंसराजकालेजप्राचार्यडा.गोवर्धनलालदत्तमहोदयाद् बहु शिक्षितं मयैवं डा. नरेन्द्रनाथचतुर्धुरीणमहाभागादपि। निरन्तरं तत्सहवर्तित्वाच्चैतादृशा अवसरा मया लब्धा यत्र तद्व्यवहाराद् बह्वहमगृह्णाम्। एकदा विश्वविद्यालयकार्यालये विचारार्थमेका गोष्ठी समायोजिताऽभूत्। तत्र समुपस्थातुं डा.चतुर्धुरीणो गतः। यद्यपि नाहं तत्सदस्यस्तथापि स मां सहाकरोत्। डा.चतुर्धुरीणेन तत्र विचारार्थमेकः प्रस्तावः समुपस्थापित आसीत्। गणितविभागस्याभूत्तदाऽध्यक्षो डा. रामविहारीति नामा कश्चित्। तेन डा. चतुर्धुरीणप्रस्तावः बलवत्प्रतिहस्तितः। डा. चतुर्धुरीणेनं तमनुकूलयितुं बहु प्रयत्तम्। अन्ते यथा कथंचित्सोऽनुकूलितो न प्रस्तावं व्यरुणत्। परं न च समार्थयत्। समाप्तिमापन्नायां गोष्ठ्यां डा. चतुर्धुरीणस्तमुपासीदत्तं प्रति च स्वां कृतज्ञतामज्ञपयत्। कलासंकायभवनं प्रत्यावर्तमानेन मया डा.चतुर्धुरीणः कुतूहलवशात्पृष्टः – रामविहारिणा प्रस्तावस्य तथा विरोधे कृतेऽपि येन तस्य


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

मूलोच्छेद एवाभविष्यत्कथं भवता स कार्तज्ञ्यं ज्ञप्तः। चतुर्धुरीणेनोक्तम् – सत्यं पूर्वं कृतस्तेन विरोधः परमन्ते तु मद्वचनानुरोधेन न विरुद्धमाचरितम्। अतोऽस्त्येव धन्यवादपात्रमसौ। लोके यदि कश्चित् कस्यापि कृते यत्किञ्चिदपि कुर्याद् भवेत्तन्नामाणुमात्रमपि तदर्थे तं प्रति कृतज्ञता एवोचिता। एतच्छ्रुत्वा श्रद्धाभरभराक्रान्तं तं महापुरूषं प्रत्यभून्मम मनः।

## ४६

विभागपक्षतः प्रतिवर्षं वनविहाराय गच्छन्ति स्मच्छात्राश्चाध्यापकाश्च। डा. चतुर्धुरीणस्तदामोदप्रमोदे सहभूतोऽपि किञ्चित् पृथगिवात्मानं पर्यवस्थापयति स्म। यावच्छात्राः परस्परेणान्यैरध्यापकैश्च सह क्रीडाकौतुकेन समयं गमयन्ति स्म तावत्स धर्मग्रन्थाध्ययनेनात्मानं विनोदयति स्म। न तत्स्वच्छन्दप्रवृत्तौ स कदापि बाधकोऽभूत्। अपि तु सोत्साहं तान् स तत्र प्राचूचुदत्। वनविहारायोजने स विशिष्टां रुचिं प्रादर्शयत्। छात्रैः स्वैरमालापं च समाशं च व्यधात्परं संगीतादिके प्रवर्तितैस्तैरात्मानं पृथगकरोत्।

उत्तरवर्षीयाणां छात्राणां सौप्रस्थानिकावसरे स प्रत्येकं छात्राय गीताप्रेसेन गोरक्षपुरस्थेन प्रकाशितं श्रीमद्भगवद्गीतापुस्तकं स्मृतिचिह्नरूपेण स्वहस्तं दत्त्वा समार्पिपत्। सेयं प्रथा सम्प्रति विपरिलोपं गता।

डा. चतुर्धुरीणकार्यकालसमाप्तिं यावत्त्रयो ग्रन्था मया प्रकाशिता आसन्। एकः श्रीबोधिसत्त्वचरितम् इति नामकं जातककथाधारितं सहस्रपद्यात्मकं महाकाव्यम्। १६६० वर्षे स्वकीयेन व्ययेनैतन्मया प्राकाश्यं नीतमासीत्। द्वितीयो भारतीयवाङ्मयसम्बद्धः कतिपयविशिष्टविषयविमर्शक आङ्ग्लभाषाविरचित 'एसेज़ आन इण्डोलोजी' इति ग्रन्थः। तृतीयश्च वाल्मीकीयस्य रामायणस्य भाषायाः परिच्छेदः पूर्ववदेव आङ्ग्लभाषोपनिबद्धः 'दि रामायण–ए लिंग्विस्टिक स्टडी' इति।

## ४७

यदा डा. नरेन्द्रनाथचतुर्धुरीणस्य कार्यकालः समाप्तिमुपैति स्म तदा श्रीचिन्तामाणिद्वारकानाथदेशमुखो दिल्लीविश्वविद्यालयकुलपतिपदमधितिष्ठति स्म। तस्येदं चिन्तनमभूद्यच्चतुर्धुरीणे पदस्थ एव तत्पदे कस्यापि नियुक्तिर्भवतु येन



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कश्चित् तदवकाशग्रहणाव्यवहितानन्तरं नियुक्तः स्यात्पदं च रिक्तं न तिष्ठेत्। अतो डा. चतुर्धुरीणे पदस्थ एव तत्पदं तेन विज्ञापितं साक्षात्कारश्च समायोजितः। तिथिस्तु सम्यक् न स्मर्यते, सम्भवतः १९६५ वर्षस्याप्रैलमासस्य पञ्चविंशी साऽऽसीत्। पदं विज्ञापितं तदर्थमहमप्यर्ह इति विचिन्त्य डा. चतुर्धुरीणो मया पृष्टः किमहमेतदर्थमावेदनं कुर्यामिति। नेति स उक्तवान्। यथा मम स्वभावः कुतो नेति नाहं तं पृष्टवान्। आज्ञा गुरूणां ह्यविचारणीयेति धिया तूष्णीमेवास्थां मनस्यवसादं कञ्चिद्वहन्नपि पदमिदं प्राप्स्याम्येवेति न निश्चयेन कोऽपि वक्तुं शक्तः परं प्रयत्ने को दोषोऽभविष्यदिति चिन्तनमास्थितः।

चयनसमितौ तदानीमासन् डा.दाण्डेकरः, डा. राघवन्, डा. कान्तिचन्द्र–पाण्डेयो, डा. सातकडिमुखोपाध्ययश्च। यद्यपि त्रय एव विशेषज्ञाश्चयनसमितौ भवन्ति, सामान्यत एषैव प्रथा, तथापि डा.देशमुखेन प्रथेयं न परिपालिता। अन्तिमं नामद्वयं डा. चतुर्धुरीणनामसूचितो गृहीतं पूर्वं नामद्वयं च स्वपक्षतः समावेशितम्। साक्षात्कारः सम्पन्नः। जोशी आसीत् प्रत्याशी। न कोऽपि पदमेनदर्ह इति चयनसमितिसदस्यानां मतिरभूत्। तदा डा. दाण्डेकरमहोदयेन कुलपतिः पृष्टः–किं भवतो विश्ववद्यालयेऽस्त्येतादृशः कोऽपि नियमो यदनुसारेण साक्षात्कृतेषु जनेषु यदि न कोऽपि पदमर्ह इति मन्यते तदा कस्मैचिदन्यस्मै येन प्रार्थनापत्रं नैव प्रेषितं भवेत्पदमिदमर्प्येत। अस्ति। सोऽन्यो जनोऽतिविशिष्टो विद्वान् भवति चेदित्युक्तं कुलपतिना। यद्येवं तर्ह्यहं विदुष एकस्य नाम प्रस्तौमि। सोऽस्ति टी. जी. (त्र्यम्बक गोविन्द) माईणकरः। स सम्प्रति पुण्यपत्तनीयफर्ग्युसनमहा–विद्यालयप्राचार्यः पुणेविश्वविद्यालयकलासङ्कायाध्यक्षश्च। न केवलं संस्कृत–विद्वानेवाऽयं प्रशासनकुशलोऽपि। तच्छ्रुत्वा कान्तिचन्द्रपाण्डेय– राघवनादि–भिश्चयनसमितिसदस्यैरुक्तं भवन्तस्तं विद्वांसं प्रमाणयन्ति परन्त्वस्माभिस्तु तन्नामापि न श्रुतम्। पदस्य स्वयमर्पणं (Offering of a post) तस्मायेव सम्भवति यस्य वैदुष्यं लोकविश्रुतम्। तच्चास्य नास्ति। कथमयं पदेऽस्मिन्नियुज्येत। वयमेतमेव निर्णयमत्र कुर्मो यत्पदमेतत्पुनर्विज्ञापितं भवतु, यदि स जनस्तादृशो विद्वान् यथा भवान् भणति, तर्हि सोऽप्यावेदनं प्रेषयतु साक्षात्कारे चोपतिष्ठतु सन्तुष्टेषु चास्मासु पदेऽस्मिन् नियुक्तिमधिगच्छतु। पदमिदं पुनर्विज्ञापितं भवत्विति निर्णयस्तदा चयनसमित्या कृतः।

१९६६ वर्षे पदमिदं पुनर्विज्ञापितम्। अत्रान्तरे ३० अप्रैल १९६५ तिथौ डा. चतुर्धुरीणे पदमुक्ते जोशी कार्यवाहकरूपेणाध्यक्षपदमध्यास्त। पुनर्विज्ञापिते पदे पुनः स आसीत्प्रत्याशी। दाण्डेकरेण माईणकरस्य नामानुशंसितं कदाचित्तस्य भवेत्तं प्रति पक्षपात इति धिया कुलपतिना डा. देशमुखेन तत्स्थाने पुण्यपत्तनादेवान्यो विद्वान् डा. परशुरामलक्ष्मण (पी.एल.) वैद्यः समितौ स्थापितः। अन्ये सदस्यास्तु



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पूर्वतना एव। साक्षात्कारे माईणकरोऽप्युपस्थितः। जोशीत्यपि च। न कोऽपि तत्पदमर्ह इति समितेर्मतम्। तदान्यस्मै कस्मैचन विश्रुतवैदुष्याय विदुषे पदमेतदर्प्येतेति चर्चाप्रसङ्गे डा. गौरीनाथशास्त्रिणो नाम विचारपदवीमागतं तदुचिततममिति च सर्वैः प्रतिपन्नम्। स महापण्डित इति सर्वैरेकस्वरेणोदघोषि। स पदेऽत्र नियुज्यतामिति समित्या कृतो निर्णयः।

नियुक्तिपत्रं शास्त्रिणे दिल्लीविश्वविद्यालयेन प्रेषितम्। तेन नियुक्तिः स्वीकृतापि। समस्यायाः समाधानं लब्धमिति यदा विश्वविद्यालयाधिकृता कथञ्चिदाश्वस्तिमनुभवन्ति तदाऽचिन्तितं किञ्चिदापतितम्। डा. गौरीनाथशास्त्रिणा वाराणसेये सम्पूर्णानन्दसंस्कृतविश्वविद्यालये कुलपतिपदनियुक्तिर्लब्धा। दिल्ली-विश्वविद्यालयसंस्कृतविभागाचार्यपदात्सम्पूर्णानन्दसंस्कृतविश्वविद्यालय-कुलपतिपदं सुतरामुच्चैरिति मत्वा तेन तदेव स्वीकृतम्, दिल्लीविश्वविद्यालयपदं चास्वीकृतम्। एवं स्थितौ दिल्लीविश्वविद्यालयस्य कृते नासीन्मार्गः पदपुनर्विज्ञापनादृते।

पदं पुनर्विज्ञापितम्। अत्रान्तरे डा.देशमुखमहाभागस्य कार्यकालः समाप्तिं गत आसीत्तत्स्थाने तस्य काले यः समकुलपतिः बी.एन.गांगुली आसीत्स कुलपतिपदमारूढः। १९६७ वर्षस्येयं कथा। १९६५-१९६७ बर्षपर्यन्तं न स्थायिरूपेण संस्कृतविभागे कोऽपि नियुक्तोऽभूत्। जोशी कार्यवाहकाध्यक्षरूपेण कार्यं निरवहत्। इयमनिश्चयस्थितिर्दूरे भवतु स्थायिरूपेण च संस्कृतविभागे प्रोफेसरपदे कस्यापि नियुक्तिर्भवत्वित्यर्थं गांगुली मनो बबन्ध। पूर्वं वारत्रयं साक्षात्कारो जात आसीत्। तत्सर्वत्रैव समकुलपतिरूपेण (Pro-Vice-Chancellor) स उपस्थित आसीत्। अतो यद्यद् वृत्तं तस्यासीत्स प्रत्यक्षदर्शी। प्रथमसाक्षात्कारावसरे डा.दाण्डेकरेण माईणकरनामप्रस्तावकाले तस्य गुणेषु प्रशासनकुशलोऽप्ययमित्यभिहितमासीत्। तद् गांगुलेर्मनस्यवर्तत। अस्तु, वैदुष्ये यद्ययं किञ्चिदूनोऽपि तथापि प्रशासने यद्ययं कुशलस्तदपि विभागाय हितमिति तस्य चिन्तनं प्रववृते। एवं सति तच्चिन्तने तेन चतुर्थे साक्षात्कारे पी.एल्. वैद्यस्थाने पुनर्दाण्डेकरः स्थापितः। तस्मिन्स्थापिते च माईणकरः प्रोफेसरपदे नियुक्तः। तेन चात्रत्यं कार्यमपि निर्वोढुं प्रारब्धम्। प्रथमे कतिपये मासाः शान्त्या व्यतीताः। गच्छता कालेन स तथा स्वार्थिजनेनावेष्टितो यत्स हितान्नाश्रृणोत्, चाटुकारानेव प्रामाणयत्, सन्देहपदेषु वस्तुषु च तद्वचांस्येवातिष्ठत।[२६] तेन विभागे प्रबलविरोधवात्याऽऽविरासीत्। तस्मिन्नेव काले मुम्बापुरीविश्वविद्यालयकुलपतिना भारतमुख्यन्यायाधीशचरेण पी.

२६ प्रकाशनस्थेयाख्ययोश्च (१.३.२३) इत्यनेन स्थेयाख्यायां = निर्णेतृत्वेनाश्रयण आत्मनेपदम्, संशय्य कर्णादिषु तिष्ठते य इत्यादिवत्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

बी.गजेन्द्रगडकरमहाभागेन स कस्मिन्नपि प्रसङ्गे समगंस्त। तदानीं मुम्बापुरी–विश्वविद्यालये भण्डारकर– संस्कृताचार्य (Bhandarkar Professor of Sanskrit) पदं रिक्तमासीत्। गजेन्द्रगडकरेण तस्मिन्पदे नियुक्तिं सः (माईणकरः) प्रार्थितस्तेन च साऽकालहीनं स्वीकृता। तत्र तस्य नियुक्तौ दिल्लीविश्वविद्यालय–संस्कृतविभागाचार्यपदं पुना रिक्तं सञ्जातम्।

## ४८

यदा माईणकरस्य स्थितिरत्र विषमा समपद्यत तदा दिल्लीविश्वविद्यालये भौतिक्याः विद्यायाः प्राध्यापकः डा. आर. सी. मजूमदारमहाभागः कार्यवाहककुलपतिरासीत्। अक्तूबरमासस्य सप्तमे दिने १९६६ वर्षे माईणकरेण विभागाध्यक्षकार्यभारो मह्यं समर्पितः। तद्भारग्रहणकिञ्चित्कालानन्तरमेव डा. मजूमदारमहाभागः केनापि कार्येण कलासंकायभवनमागतस्तत्रस्थेन सम्पाद्यमार्गेण[३०] गच्छति स्म। दैवगत्याऽहमपि तेनैव गच्छन्नासम्। मां दृष्ट्वा मम स्कन्धयोर्वामभुजं प्रसार्य स उक्तवान् – माईणकरो मामुपेतः, उक्तवांश्च नवाम्बरमासस्य (१९६६ वर्षस्य) त्रिंशे दिने स मोक्षते।[३१] अस्त्विति मयोक्तम्। किञ्चित्कालानन्तरं स मां पुनरुपेत उक्तवांश्च– अहम् अक्तूबरमासस्यैकत्रिंशे दिवस इतो मोक्षमिच्छामि। किञ्चित्कालानन्तरं स मां पुनरुपेतः, उक्तवांश्च– अहं सप्तमे दिवस एव गन्तुमिच्छामि। तदा मयोक्तम्– भो गच्छ त्वम्। अस्त्यस्मासु स जनो यो विभागकार्यमवेक्षितुं क्षमः। सत्यव्रत! यदाऽहमेवमवादिषं तदा त्वं मे मनस्यासीः {=त्वामेव लक्ष्यीकृत्य मयोक्तमासीदस्त्यस्मासु जन इति} (Mainkar came to me and said that he would like to be relieved on 30th November. I said ok. He came to me after a few days and said he would like to go on 30th October. He again came to me and said he would like to go on 7th. I told him Baba, you go. We have a man who will look after the Department. Dr. Satya Vrat, when I said this I had yourself in my mind).

---

३० कोरिडोर इत्याङ्ग्ल्याम्

३१ मुचेः सनि द्वित्वे अत्र लोपोऽभ्यासस्य (७.४.५८) इत्यनेनाभ्यासलोपे मुचोऽकर्मकस्य गुणो वा (७.४.५६) इत्यनेन गुणे रूपम्। मुक्तिमिच्छतीत्यर्थः।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अमृतवर्षिण इमे शब्दा अद्यापि मम श्रोत्रयोर्गुञ्जन्तीव। कथं गुणगृह्याः पूर्वेऽधिकारिण आसन्। डा. मजूमदारो विज्ञानसंकाय आसीत्। कियान् मम सम्पर्कस्तेन भवेन्नाम। कस्मिन् विभागे कः कियत्कीदृशं वा कार्यं करोतीति सर्वत्र पूर्वतनानामधिकारिणां दृष्टिरासीत्। अत एव प्रशासने सुव्यवस्था बद्धपदाऽवालोक्यत।

माईणकरस्य दिल्ल्यां नियुक्तेः किञ्चित्कालानन्तरमेव जोशी अभ्यागताचार्यरूपेण नियुक्तः सन् मेक्सिकोदेशं गतः। यदा माईणकरेण दिल्लीपदं त्यक्तं तदाऽहमेवासं विभागे रीडरपदाधिष्ठितः। अतो विभागाध्यक्षकार्यभारस्तेन मह्यमेव समर्पणीय आसीत्। कार्यभारोऽयं मया १९६८ वर्षस्य अक्तूबरमासस्य सप्तमे दिवसे (7th Oct. 1968) गृहीतः। पदं तदा रिक्तमिति विज्ञापनीयमभूत्। तदा केचन सुहृदो मामुपासीदन्नवोचंश्च भवन्त एतदर्थमावेदनं कुर्वन्त्विति। विभागो विचित्रां दशामापन्नः। स्थानीयो (=जोशी) जनो नियुक्तिं न लभते, बाह्यो (=माईणकरः) ऽत्र न स्थातुमीहते, भवन्त आवेदनं न कुर्वन्ति। कथं सर्वमिदं प्रचलिष्यति। यावद्वारमपि पदं विज्ञापितमभूत्तावद्वारं न मयाऽऽवेदनं कृतम्। प्रथमं चतुर्धुरीणस्य निषेधेन अनन्तरं चानया भावनया यज्जोशी मत्तो ज्येष्ठः स एवेदं पदमधितिष्ठतु, यदि विधिरनुकूलो भविष्यति कदाचिदिहाऽन्यत्र वा पदमिदं प्राप्स्याम्येव।

१९६९ वर्षे माईणकरेण मुम्बापुरीविश्वविद्यालये भाण्डारकराचार्यपीठे नियुक्तेन दिल्लीविश्वविद्यालयीयं पदम् अक्तूबरमासस्य सप्तमे दिवसे परित्यक्तम्। जोश्याः दिल्लीविश्वविद्यालये माईणकरस्य कार्यप्रारम्भादनन्तरं मैक्सिकोदेशं प्रति गमनादिदल्यामनुपस्थितौ डा. माईणकरो विभागीयं कार्यं मह्यं समार्पिपन्मुम्बापुरीं च प्रास्थित। एवमहं १९६९ वर्षेऽक्तूबरमासस्य सप्तमे दिवसे दिल्लीविश्वविद्यालय–संस्कृतविभागाध्यक्षपदमारूढः। प्रवाचक (रीडर) पदस्थेनैव मया तत्पदमप्यध्यास्यत। तदल्पकालानन्तरमेव प्रोफेसरपदं विज्ञप्तमभूत्।

## ४६

जोशीरन्यत्रासीत्। तदनुपस्थितिवशादेव मया दिल्लीविश्वविद्यालय आवेदनं कृतम्। १९६८ जुलै मासे साक्षात्कारः सम्पन्नः। जोशी मैक्सिकोदेशात्साक्षात्कारार्थमागतः।

दिल्लीविश्वविद्यालयकुलपतिस्तदासीत् प्रथितयशा डा.के. एन्. राजमहोदयः समकुलपतिश्च दिल्लीविश्वविद्यालय एवाङ्ग्लभाषाप्राध्यापको डा. सरूपसिंहः। चयनसमितिसदस्याश्चासन् डा.रा. ना. दाण्डेकरः, डा. राघवन्., डा. गौरीनाथशास्त्री


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

च। चयनसमित्या अहमेव सर्वसम्मत्या प्रोफेसरपदार्थं चितः। सूच्यपि तत्पदार्हाणां जनानां न कृता।

प्रथमोऽयमवसरोऽभूद्यदा वरीयांसमतिक्रम्यावरस्य नियुक्तिरजायत। प्रथमश्चैतादृशोऽभूद्विश्वविद्यालये यदाऽवरेण समानं पदमधितिष्ठता तत उच्चैः पदे नाना वारं विज्ञप्ते प्रार्थनापत्रमेव न प्रेषितमभूल्लभतां वरीयान्नाम तत्पदमिति बुद्धिमास्थितवता। कियन्तो नाम स्युः सम्प्रत्येतादृशा य एवं मतिं प्रकुर्युः, आत्महितं तृणाय मत्वा केवलमौचित्यपालन एव च बद्धादराः स्युः।

साक्षात्कारः सुदीर्घं कालं, पञ्चचत्वारिंशत् कला यावत्, प्रवृत्तः। तत्र नाना जटिलाः प्रश्नाः पृष्टाः प्राश्निकैः। तत्र कतिपये इहोद्ध्रियन्ते—

गौरीनाथशास्त्री — कति प्रमाणानि?

अहम् — न्यायदृष्ट्या वा व्याकरणदृष्ट्या वा?

गौरीनाथशास्त्री — किमुभयोरन्तरम्?

अहम् — ओम्। न्यायदृष्ट्या प्रमाणानि चत्वारि, व्याकरणदृष्ट्या प्रमाणानि पञ्च।

गौरीनाथशास्त्री — पञ्चमं किं प्रमाणं?

अहम् — अभ्यास इति। तथा चाह भर्तृहरिः —

परेषामसमाख्येयमभ्यासादेव जायते।<br>
मणिरूप्यादिविज्ञानं तद्विदां नानुमानिकम्।।<br>
अनुमाने तस्यान्तर्भावो न भवितुमर्हति।

गौरीनाथशास्त्री — साधु।

राघवन् — कतिविधः स्फोटः?

अहम् —— अष्टधा।

राघवन् — तत्र वैयाकरणानां को राद्धान्तः? किमष्टप्रकारकः स्फोटस्तेषामभिमतः अथवा विशिष्य कस्मिन्नप्याग्रहः?

अहम् — सर्वेऽपि स्फोटप्रकारा वैयाकरणैः स्वीकृताः। परं वाक्यस्फोट एव तेषामीप्सिततमः।

राघवन् —— कुतः?

अहम् — कौण्डभट्टेन वैयाकरणभूषणसारे स्पष्टं प्रत्यपादि — वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः। किञ्च भर्तृहरिरप्याह—

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।<br>
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन।।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अखण्डं वाक्यमेव तेन स्वीकृतम्। तेनाऽधुनातनानां भाषाविज्ञानविदां मतमखण्डं वाक्यमिति (Sentence is an indivisible unit of speech) परिपुष्टं भवति।

राघवन् — साधु।

राघवन् — स्थाधातुः परस्मैपदी वाऽऽत्मनेपदी वा?

अहम् — परस्मैपदी।

राघवन् — तर्हि कथं संशय्य कर्णादिषु तिष्ठते य इत्यत्रात्मनेपदम्?

अहम् — प्रकाशनस्थेयाख्ययोश्चेतिसूत्रेण। कर्णादिषु तिष्ठते इत्यत्र निर्णेतृत्वेनाश्रयतीत्यर्थः।

राघवन् — भूधातुरात्मनेपदी वा परस्मैपदी वा?

अहम् — सत्तायां परस्मैपदी प्राप्तावात्मनेपदी। अर्थभेदेन पदभेदः।

राघवन् — उपलभ्यत आत्मनेपदिनो वाङ्मये प्रयोगः?

अहम् — लभ्यत एव। शिवपुराणगतमेकं प्रयोगं तु स्मराम्येव।
अन्यत्राप्ययं प्राप्त्यर्थः स्यादन्यथा कथमाचार्य–
पाणिनिस्तं निरदेक्ष्यत्स्वसूत्रे तदुल्लेखद्वारा।
धातुपाठेऽस्यानुल्लेखात्प्रतीयते कालान्तरे लुप्तोऽयमिति।

राघवन् — भवता शिवपुराण एतत्प्रयोगस्य चर्चा कृता।
उद्ध्रियतां तत्पद्यं यत्रास्य प्रयोगः।

अहम् — अयमहमुद्धरामि–
भवे भवप्रसादेन भवभक्तो भुवि ध्रुवम्।
भवानीसहितं भक्त्या परया भवते भवम्।।
भवभक्तो भवं भवते प्राप्नोतीत्यर्थः।

राघवन् — अहो! अद्भुतः प्रयोगोऽयम्। नैवंविधः प्रयोगो मया श्रुतपूर्वः। भवन्त एतदर्थं साधुवादार्हाः।

प्राश्निकप्रश्नानन्तरं कस्य नियुक्तिर्भवत्विति प्रश्ने डा. रामकरणमहाभागस्य नाम प्रस्तुतं राघवेन यद्यपि तेनावेदनमपि न कृतमासीत्। तदा कुलपतिनोक्तं स एवायं रामकरणो यो मन्त्रालये कार्यं करोति। स एवायमिति राघवेनोक्ते – न वयं कार्यालयीयाञ्जनानत्र नियोक्ष्यामहे। अध्यापका एवैतत्पदमर्हाः। गौरीनाथशास्त्रिणा तदा राघवन्वदेव गोपिकामोहनभट्टाचार्यस्य नाम प्रस्तुतम्। तदा कुलपतिनोक्तं किमयमस्मदीयादध्यापकादुत्कृष्ट इति। गौरीनाथशास्त्रिणोक्तं नैव। यदि न, तर्हि कथं नास्मदीय एव प्राध्यापकोऽत्र पदे नियुज्येत। सर्वैरैकमत्येनानुमोदितं मन्नामोक्तञ्च वैदुष्येऽप्रतिमः स एव पदमिदमर्हतीति। किं कस्याप्यन्यस्यापि नाम केषाञ्चिदन्येषां वा नामानि भवन्तः संस्तुवन्ति नामावलिं



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तथाभूतां वाऽनुमोदन्ते। नेति सर्वेऽप्याहुः। न कश्चित्कलयाऽपि सत्यव्रतकोटि-मधिरोहति। केवलमेकमेव नाम वयं स्वीकुर्मस्तच्च सत्यव्रतशास्त्रिण एव। एवं दिल्लीविश्वविद्यालयसंस्कृतविभाग आचार्य (प्रोफेसर) पदे मम नियुक्तिर्जाता। अहं तदोनचत्वादिंशद्वर्ष एवासम्। जोशिमहाशयमतिशय्य पदमिदं लब्धमिति यत्सत्यं विश्वविद्यालये नूत्न इतिहास एव रचितः। वरीयोजनातिक्रम इदानीमपि दुष्करः। तदानीं त्वसम्भव एवासीत्। दिल्लीविश्वविद्यालये प्रोफेसरपदे ये नियुज्यन्ते तेषां कृते नास्ति सम्पुष्टेरपेक्षा। यस्मिन् दिने तेषां नियुक्तिर्भवति यस्मिन्वा दिने ते कार्यमारभन्ते तस्मिन् दिन एव तेषां पदसम्पुष्टिरभ्युपेयते। सैषा प्रक्रिया प्रोफेसरपदभाजां कृत एव नान्यत्पदभाजाम्। तेषां वर्षं यावत् कृतं कार्यं परीक्ष्य नियुक्तिसम्पुष्टिर्भवति। अहं विभागे पूर्वत एव कार्यरत आसम्। नूत्नपदनियुक्ति-पत्रसन्दर्भपूर्वकं कार्यभाराधिग्रहणसूचनापत्रकद्वारा नूत्ने प्रोफेसरपदे कार्यं प्रारम्भि मया। विभागे तदा प्राध्यापकानां विविधा प्रतिक्रियाऽऽसीत्। जोश्या वर्षत्रयं कार्यवाहकाध्यक्षरूपेण विभागे कार्यं कृतमासीत् ततः पूर्वं च नाना वर्षाणि रीडररूपेण। आसन् केचित्तद्धितैषिणो दिल्लीविश्वविद्यालयसम्बद्धमहाविद्यालयेषु संस्कृताध्यापकास्तत्स्नेहभाजनभूताः। तेषां मयि सौहार्दं नासीत्। ते त्वासन्नल्पीयांस एव। बहुसंख्यकास्तु ततो बभूवुर्विप्रकृता एव। अतस्ते मन्नियुक्तिमभ्यनन्दन्। मम नियुक्त्यभिनन्दवोत्सवं ते समायोजयितुमिच्छन्ति स्म। विश्वविद्यालयविभागे नियुक्तिर्जातेति विभागेनैकोभिनन्दनोत्सव आयोजनीयोऽभूत्। विभागे तु नासीत् कश्चिद् वरिष्ठः प्राध्यापको मदृते य एतदर्थमुदयुक्ष्यत। अस्यां स्थितौ किं करणीयमिति चिन्ताचान्ताः प्राध्यापका मार्गमेकमन्वेषिषुः। डा. नरेन्द्रनाथचतुर्धुरीण-कालादेव विभागे प्राध्यापकानां शोधच्छात्राणां तत्तच्छास्त्रगवेषणाप्रवृत्तिपरिवर्धनाय संस्कृतशोधपरिषद् इति नाम्ना परिषदेका स्थापिताऽऽसीत्। तन्माध्यमेना-भिनन्दनोत्सव आयोज्येतेति ते बुद्धिमास्थाय बभूवुस्तत्र प्रवृत्तिमन्तः। दिल्लीमहाविद्यालये (कालान्तरे ज़ाकिर हुसैन महाविद्यालयनाम्ना ख्याते) संस्कृतप्राध्यापको वाल्मीकिरामायणे कृतश्रमो डा. रामाश्रयशर्मा तदानीं शोधपरिषदः सचिव आसीत्। तेनैव स्वहस्तं दत्त्वा सर्वेभ्योऽपि संस्कृताध्यापकेभ्यो विश्वविद्यालयीयमहाविद्यालयीयेभ्यश्शोधच्छात्रेभ्यश्च निमन्त्रणपत्राणि प्रेषितानि। तत्र सूचितं यदभिनन्दनोत्सवः १६७० तमवर्षस्य सिताम्बरे मास्येकादशे दिने (११.६.१६७०) भवितेति। अभिनन्दनोत्सवकालः प्रावृट्काल आसीत्। यस्मिन् स आयोजितोऽभूत् तस्मिन् दिने धारासारैर्वृष्टो देवः, तथापि भूयस्या संख्यया प्राध्यापकाः शोधच्छात्राश्च समुपास्थिषत। अभिनन्दनोत्सवस्थलमभूद् विश्वविद्यालयकलासंकायभवनस्थो द्वाविंशत्संख्याको व्याख्यानकक्षः। तत्र बहु भाषितं मद्विषये मत्सहयोगिप्राध्यापकैः। मयाऽपि तत्संवर्धना नतेन शिरसाऽङ्गीकुर्वता



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

स्वकीया मनोभावा आविष्कृताः सर्वेषां सहयोगेन साहाय्येन च विभागकार्यं सम्यक् प्रचलिष्यति येन विभागोऽयं विश्वस्मिन्नपि विश्वे महनीयतमां कीर्तिमर्जयिष्यतीत्याशा प्रकटिता। अन्यच्चापि बहूक्तं मया, सर्वं च तत् पद्यैरेव। तानि पद्यानीत्थमासन्–

सुहृद्वर्यैर्विपश्चिद्भिर्भाषणार्थं निमन्त्रितः।
श्लोकैः कतिपयैरेव वचः स्वं वक्तुमुद्यतः।।१।।

परीवारेण मम यो मयि स्नेहः प्रदर्शितः।
कृतज्ञताभराक्रान्तस्तेनास्मि सुखितो भृशम्।।२।।

स्निग्धोऽस्मि भवतां स्निग्धा भवन्तः सर्व एव मे।
स्नेहः परस्परमयं प्रत्यहं वृद्धिमश्नुताम्।। ३।।

संस्कृतस्य प्रचाराय बद्धोद्योगा वयं समे।
उन्नतिं हि गिरस्तस्याः सन्ततं कामयामहे।।४।।

विभागविषये साध्वी व्यवस्था सम्प्रवर्तताम्।
एतदर्थं भवत्साह्यव्यपेक्षा सुतरां मम।।५।।

सर्वे सञ्चिन्त्य सञ्चिन्त्य कार्यं कुर्याम शोभनम्।
दृढं संग्रथिता भूत्वा सूत्रे मणिगणा इव।।६।।

उद्यानमिदमस्माकं नानापुष्पैः सुशोभितम्।
नानाप्रस्रवणैश्चापि दिव्यगन्धि मनोहरम्।।७।।

नन्दनोद्यानवद्रम्यं नेत्रोत्सवकरं सदा।
आश्चर्यभूतं लोकस्य राजधान्यां विराजते।।८।।

एतदुत्थः परिमलो दिशो नाना श्रयत्विति।
कामना भवतां मे च शीघ्रं तां पूरयेत्प्रभुः।।९।।

व्यवस्थाविषये किञ्चिद् वक्तव्यमिति चिन्तयन्।
अत्यल्पैरक्षरैरेव वचस्तत्र प्रवर्तये।।१०।।

कलाशालासु बह्वीषु स प्रतिवर्षमनेकशः'।
विभागेन हि कर्तव्या अध्यापकनियुक्तयः।।११।।

कृत्याकृत्ये विचार्येह मतमीदृशमस्ति मे।
क्रमः कश्चित्समास्थेयो विभागहितकारकः।।१२।।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

एम्. ए. कक्षापरीक्षायां प्रथमां श्रेणिमीयुषाम्।
प्राप्तपीएच्ड्युपाधीनां नियुक्तिः प्रथमं भवेत्।।१३।।

निबन्धं प्रस्तुतवतां पीएच्ड्यर्थं ततः परम्।
भवेन्नियुक्तिश्छात्राणां प्रथमां श्रेणिमीयुषाम्।।१४।।

पदकादिविजेतॄणां विशिष्टस्थानभागिनाम्।
भवेदेम्. ए. परीक्षायां नियुक्तिस्तदनन्तरम्।।१५।।

आस्थीयमान एतस्मिन् क्रमे लोकसुखावहे।
पक्षपातेन विधुरे सर्वः सन्तोषमेष्यति।।१६।।

अथ शोधप्रवृत्त्यर्थं वचः किञ्चन वच्म्यहम्।
सुरवाचि प्रवीणानां प्रवाचां विदुषां पुरः।।१७।।

नवीना प्रवृत्तिर्भवेच्छोधकार्ये
नवीनं च कार्यं बुधैरत्र कार्यम्।
विचार्यं तथा सम्प्रधार्यं स्वचित्ते
ततः कार्यसिद्धिर्भवेदस्मदीया।।१८।।

(भुजंगप्रयातवृत्तम्)

समितिरिह यदि स्याच्छोधकार्यार्थमेका
सपदि बुधजनानां नो जनानां हिताय।
अनुदिनमथ कार्यं तद्गतं या विचार्य
करणमकरणं वा निश्चिनोत्वस्मदर्थे।।१६।।

(मालिनीवृत्तम्)

एवं विधीयमाने शोधप्रवृत्तिरास्माकीना स्यात्।
मणिरिव शाणोल्लीढः समुज्ज्वला च सुग्राह्या च।।२०।।
अथ किञ्चिद्वक्तव्यं शिष्टं वक्तव्यमेवेति।
नाना विषयसुनिपुणा कोविदा विभावयन्त्वेतत्।।२१।।
स्मार्या मनसि च कार्या ग्राह्या निजजीवने च भृशम्।
साधुः समन्वयः स्यादिति गीः प्रियदर्शिनो राज्ञः।।२२।।

(आर्यावृत्तम्)

समन्वयेनैव हि कार्यसिद्धिः
समन्वयेनैव च नः प्रतिष्ठा।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

समन्वयेनैव वयं स्थिताश्च
समन्वयोऽस्माद्धृदि धारणीयः।।२३।।

(उपेन्द्रवज्रावृत्तम्)

इत्येव विज्ञान् विनिवेद्य सर्वान्
सप्रश्रयं प्राञ्जलिरर्थयेऽहम्।
ध्रुवं भवद्भिः शुभकामवद्भिः
सद्भिश्च भाव्यं मयि सर्वदैव।।२४।।

(उपजातिवृत्तम्)

गरीयान् कार्यभारो हि निर्वोढव्यो मया बुधाः।
भगवान् पार्वतीजानिः शक्तिं मेऽच्छां प्रयच्छतु।।२५।।
निरन्तरं सुहृद्भिश्च प्रयोज्याः शुभकामनाः।
मयीति प्रार्थये प्रह्वः स्वां वाचं चोपसंहरे।।२६।।

(अनुष्टुब्वृत्तम्)

## ५२

अत्र साक्षात्कारसम्बद्धमेकं प्रसंगं समुपस्थापयितुमिच्छामि। ततः पूर्वं तत्सम्बद्धं किञ्चिदन्यद्विवक्षामि। दिल्लीविश्वविद्यालयहिन्दीविभागेन तदानीमासीदनुवाद-पाठ्यक्रमोऽपि प्रारब्धः। तत्र महेन्द्रचतुर्वेदीनामासीत् कश्चित्प्राध्यापकः। यद्यपि हिन्दीविभागेऽसौ कार्यरतस्तथापि संस्कृतविभागीयेन रसिकविहारिजोश्या तेन स्थापितः प्रगाढः सम्बन्धः। उभावपि सर्वत्र संगतावेव दृष्टिमवतरतः स्म। सहैव गमनागमने, सहैव पानाशने, सहैव नर्मालापाः। अस्तु। तत्स्यान्नाम यथा तथा वा। न तन्मामस्प्रक्ष्यद्यदि सा घटना नाघटिष्यत या मेऽरूंष्यद्यापि तुदति। कीदृशी वक्रप्रकृतिता लोकस्य। तथा व्यूहरचना कृताऽऽसीत्तत्र तेन यां कोऽप्यनुमातुमपि न शक्नुयात्। साक्षात्कारदिने महेन्द्रचतुर्वेदी अभ्यर्थिप्रतीक्षाकक्ष 'आसनबन्धधीरो' बभूव। एकैकशोऽभ्यर्थिनः कुलपतिकक्षे साक्षात्कारायाहूयन्ते स्म। व्यतीते कतिचन काले कतिपयेष्वभ्यर्थिषु निर्वृत्तसाक्षात्कारेषु स मत्पार्श्वस्थामासन्दीं रिक्तां दृष्ट्वा तत्रोपविष्टः। मया स्वपुरतः पटले स्थापितोऽभूदेकः पूलो[३२] यत्र मया स्वरचितानि पुस्तकानि निबन्धादीनि च कर्गलेनावेष्टितान्यासन् {बैग् इत्यस्य प्रयोगं तु तदा

---

३२ बंडल इत्याङ्ग्ल्याम्


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

नाकरवमेव}। तं पूलं दृष्ट्वा चतुर्वेद्यपृच्छत् किमिदमिति। मत्पुस्तकानि शोधनिबन्धाश्चेत्यहमवोचम्। ततः किञ्चित् प्रहस्य सोऽवोचत्–अहमचिचिन्तं मलिनवस्त्रौघोऽयं रजकापणस्य कृत इति। वज्रादपि कठोरं तस्याकारणा–विष्कृतवैरदारुणस्य वचः श्रुत्वा क्षणं स्तब्ध इवाभूवम्। तस्मिन्नेव क्षणे कार्याधीक्षको मामुपसद्यावोचत्सम्प्रति साक्षात्कारार्थं भवतां क्रम इति। प्रविशन्तु भवन्तस्तदर्थमिति। मदीयां साहित्यसाधनां मालिनवस्त्रैरुपमितवतः पुरुषापसदस्य तस्य वचसा दृढं ताडितहृदयोऽपि नाहमुद्वेगाय मनोऽदाम्, शान्तेन मनसा च प्राश्निकानां प्रश्नांस्तथा समाधां यथा ते सर्वे चकितचकिता अलक्ष्यन्त। पञ्चचत्वारिंशत्कला यावत्तदानीं प्रवृत्ता प्रश्नोत्तरधारा। सम्पन्ने साक्षात्कारे यदाऽहं बहिरागतस्तदा चतुर्वेदिनमदृष्ट्वा भूयोऽपि विस्मितः। किं मे मनस्यशान्तिं जनयितुं तदुत्थं बुद्धिभ्रमं वोत्पादयितुमासीदेष सर्वोऽप्युपक्रमः? तथा विक्षिप्तोऽहं स्यां येन प्रश्नानां समाधानं मत्कृतेऽसम्भवं स्यात्? अहो दुरभिसरन्धिरेतस्य। शिक्षाक्षेत्रेऽप्येतादृशाः कण्वचिकीर्षवो[३३] ऽक्षिलक्षीभवन्ति, कुटिलपथजुषस्ते परक्षतये षड्यन्त्ररचनापराः सत्रायन्ते[३४]। यद्येतन्नैपुण्यमध्ययने वाऽनुसन्धाने वा भवेन्महदुपकृतं स्याल्लोकस्य। कीदृशी व्यूहरचना – हिन्दीविभागीयस्य संस्कृतविभागीयसाक्षात्कारावसर उपस्थितिः। कार्याध्यक्षेण सम्पर्कं कृत्वाऽभिज्ञानं कतमो मम साक्षात्कारक्रमः। मम क्रमात्किञ्चित्क्षणपूर्वमेव मत्समीप आसनग्रहः, वाग्बाणप्रहारश्च। अयि भोश्चतुर्वेदिन्, यदि सुहृदमुपकर्तुमचीकमथा[३५] एव, कञ्चिदन्यमपि पन्थानं तदर्थमशिश्रियथाः किमेत्यवं प्राक्रंस्थाः[३६]? यदि वैयाकुली मामस्थिरतामा–पादयिष्यत्सफलोऽभविष्यत्तव मनोरथः। परं तथा नैव संवृत्तम्। दुष्टानां च खलानां च अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत्। चतुर्वेदिन्! किमिति त्वयाऽऽत्मा महति पातके निपातितः। किं सुहृदुपकारार्थम्? किं सुहृल्लब्धवान् नियुक्तिं दिल्लीविश्वविद्यालयाचार्यपदे। साक्षात्कारसमित्या मम नामैवानुशंसितं जोशी तु द्वितीयस्थानेऽपि न स्थापितः। एकोनचत्वारिंशद्वर्षोऽहं दिल्लीविश्वविद्यालयेनाचार्यपदे नियुक्तः। न तदैतादृशेऽल्पे वयसि कस्याप्याचार्यपदे नियुक्तिर्भवति स्म। राघवन् – दाण्डेकर– गौरीनाथसदृशैर्महारथैर्ममैव नामानुशंसितमिति हर्षप्रकर्षवर्षं मे हृदि वर्षति। जोशीं पराजित्य नियुक्त इत्यपि च।

---

३३ पापं कर्तुमुत्सुकाः। कण्वशब्दः पापार्थे।

३४ सत्रकक्षकृच्छ्रगहनेभ्यः कण्वचिकीर्षायाम्' इति वार्तिकेन क्यचि रूपम्। सत्रशब्दः पापार्थे। तथा हि वृत्तिः–सत्रादयो वृत्तिविषये पापार्थाः। सत्रायन्ते = पापं चिकीर्षन्ति।

३५ कमु कान्तावित्यस्य कमेर्णिङ् (३.१.३०) इति णिङि लुङि मध्यमपुरुषैकवचने रूपम्। वैकल्पिकं रूपम् अचकमथा इति।

३६ प्रोपाभ्यां समर्थाभ्याम् (१.३.४२) इत्यनेनात्मनेपदे लुङि मध्यमपुरुषैकवचने रूपम्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

बहूनि वर्षाणि तस्य जनस्य पञ्चत्वं गतस्य, परं तस्याप्रिया स्मृतिर्मम मनसि शल्यमिव निखाता। स्वसखस्य जोश्याः साहाय्यमेव तदभीप्सितमासीच्चेदन्यः कोऽपि पन्था अपि तेन समाश्रयितुं शक्य आसीत्। जघन्यतमं पापकर्मानुतिष्ठता तेनात्मान्धतमसे पातितः। एतेन पुनरिदं स्पष्टं भवति यत् कथं प्रवर्तन्ते जगति पापबुद्धयो जनाः प्रच्छन्नं प्रहरन्तो, वाग्बाणैर्विध्यन्तोऽनिष्टाचरणे चात्मानं व्यापारयन्तः।

## ५३

१९७० वर्षस्यागस्त्यमास्यैकोनविंशे दिवसे मया प्रोफेसरपदनियुक्तिपत्रं लब्धं यत्र सूचितमासीद्यन्मम नियुक्तिरगस्त्यमासस्य त्रयोदशादिनाज्जातेति, तस्मादेव दिनाच्चाहं प्रोफेसरपदमारूढ इति। विश्वविद्यालयकार्यकारिण्या अधिवेशनं त्रयोदशे दिवस एवाभूत्। तया च मे नियुक्तिरनुमोदिता। यस्मिन्दिनेऽनुमोदनं तदेव नियुक्तिदिवस इति विश्वविद्यालयनियमः। यतोऽहं पूर्वत एव विश्वविद्यालये कार्यरतोऽतो मया नूत्नपदाधिग्रहणपत्रमपि न विश्वविद्यालये प्रेषयितव्यमासीत्। विश्वविद्याालयोऽपि स एव, स एव चाहं केवलं नूत्नसंज्ञा पदस्येत्येषैव परिवृत्तिः। मम नूत्नपदाधिग्रहणाद् दशदिनानन्तरम्, अगस्त्यमासस्यैकोनत्रिंशेऽहनि कुलपतिकार्यालयान्मया कुलपतिभिर्मैक्सिकोकालेजस्य प्राच्यविद्याध्ययन-केन्द्रनिदेशिकायाः पत्रं तत्प्रत्युत्तररूपेण प्रेषितं स्वकीयं पत्रं च मह्यं प्रेषितम्। निदेशिकायाः कुलपतीन् तन्नामसम्बोधनपूर्वकं पत्रं संस्कृतानुवादरूपेणेत्थमस्ति—

प्रिय डा. राज,

मद्विश्वविद्यालये प्रोफेसरपदार्थं सुप्रख्यातस्य डा. रसिकविहारिजोशिसदृशस्य विदुषः संस्तुतिरस्मत्संस्थायाः कृते महत्प्रमोदकारणम्। द्विरयमस्माकं संस्थान अभ्यागताचार्य आसीदनेन च तत्र संस्कृताध्ययनविषये भारतीयविद्याविषये च महदुपकृतम्। अस्य संस्कृते न्यायसम्बद्धे समस्ते वाङ्मये चाधिकार उच्चकोटिकः। तस्य भारतीयदर्शनसम्बन्धिन्याः सामान्यरूपेण संस्कृतसम्बन्धिन्याश्च समालोचनाया ज्ञानमिमं विशिष्टयोग्यतासम्पन्नताविद्वद्रूपेण प्रतिष्ठापयति।

अस्य सहकर्मिभिश्छात्रैश्च सह व्यवहारोऽतीव सहयोगपूर्णः सौम्यश्च। या काऽपि संस्था तं स्थायिरूपेण स्वकर्मकर्तृषु प्रतिष्ठापनायावसरं लभते तस्याः कृतेऽस्य सहजा गुणास्तमतीव साहाय्यप्रदं स्वेच्छया प्रवृत्तं सहयोगिनं च विदध्युः।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

इदं चान्यद्विवक्षामि— अस्माकं संस्था दीर्घतरकालार्थमत्रावस्थितय इमं निमन्त्रयितुमिच्छति स्म परन्तु परिस्थितिवशात्तत्र नास्माकमधिकार एवं कर्तुम्।

भवदीया

ग्रेसिया द ल लामा

निदेशिका प्राच्यविद्याध्ययनकेन्द्रस्य

## कुलपतीनां प्रत्युत्तरम्

प्रिय श्री ग्रेसिएल द ल लामा,

३६–६८/६६ क्रमांकितं ८ जुलै, १६७० दिनांकितं च कृपापत्रं मयाध्यगामि। डा. र. वि. जोश्याः कार्यकलापो भवताभिनन्दित इति वयं भृशं नन्दामः। विश्वविद्यालयस्य कृते गौरवास्पदमिदम्। परं महानयमस्माकं खेदो यद्वयं तस्य तत्रेतोऽधिककालं यावदवस्थितिं नानुमन्यामहे यतोऽस्माकं संस्कृतविभागेऽस्ति प्राध्यापकानां न्यूनता।

अहं पुनरत्रभवन्तं स्वस्य सन्तुष्टिसूचकपत्रप्रेषणे यद् दाक्षिण्यं भवता प्रदर्शितं तदर्थं पुनरपि कृतज्ञतां प्रकटयामि। भवत्पत्रमहं संस्कृतविभागाध्यक्षं प्रेषयामि।

भवदीयः –

के. एन्. राज

अद्य यदाऽहमेतत्सर्वमवलोकये तदा कुलपतेः सूक्ष्मेक्षिकां विभाव्य रोमहर्षो मे जायते। तेन दिव्यचक्षुषेदमवलोकितं यत्साक्षाकारात्पूर्वं तमनुकूलयितुमेष प्रयोग इति। यद्यन्योऽवरकोटिकः कश्चित्कुलपतिरभविष्यत्तर्हि वैदेशिकाः प्रशंसन्त्येनमिति कृत्वा तद्वचसि प्रत्ययितः सन्नन्याय्यमाचरिष्यत्। नहि सोऽद्यतनकुलपतिवत् सामान्यकोटिक आसीत्, एतादृशं तस्य पाण्डित्यमभूद्यत्स किञ्चित् कालानन्तरमेव अर्थशास्त्रविषये राष्ट्रियाचार्यपदमध्यतिष्ठत्। सम्यग्दृष्टयो लोकोत्तरा एते दीर्घं पश्यन्ति न ह्रस्वम्, न्याय्यात्पथश्च पदमपि न प्रविचलन्ति। तेन लामा इत्यस्याः पत्रस्योत्तरं न प्रदत्तमिति न। शालीना एवंविधाः शालीनतां न जहति। मधुरोऽक्षरविन्यासस्तत्पत्रस्य। सर्वं समीचीनं तस्य। पत्ररहस्यं भित्त्वा तस्य बुद्धिः प्रावर्ततेति तं महापुरुषकोटौ प्रतिष्ठापयति। कश्चिन्निन्दतु वा स्तौतु वा तेन किम्? प्राश्निकानां प्रश्नसमाधानं सम्यङ् न वेति, कियान् शास्त्रबोध इति तत्रैवासीत् तस्य दृष्टिः। नियुक्तिविषये सर्वथा निर्मलेनान्तरात्मना तेन प्रवृत्तम्। येनाभिप्रायेन साक्षात्कारदिनात्कतिपयदिनपूर्वं वैदेशिकाज्जनात् जोश्या पत्रप्रेषणं



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कारितमासीत्तं स विदाञ्चकार। पत्रं प्राप्तं तस्य प्रतिवचोऽपि प्रहेयमिति तत्प्रेषणेन दाक्षिण्यमपि ररक्ष। परं मन्नियुक्त्यनन्तरमेव तन्मां प्रजिघाय।

## ५४

दिल्लीविश्वविद्यालयनियुक्तिप्रसंगे प्रसंगान्तरमपि समुपस्थापयितुमिच्छामि। अत्र नियुक्तेः पूर्वं काशीहिन्दूविश्वविद्यालयेऽपि प्रोफेसरपदे मम नियुक्तिर्जाताऽऽसीत्। १९६९ वर्षे नवाम्बरमासदशमदिवसांकितं तत्रत्यकुलसचिवेन प्रेषितं पत्रं मया प्राप्तमासीद् यत्र सोऽसुसूचद्यद् विश्वविद्यालयकार्यकारिण्या नवाम्बरमासप्रथमदिने सम्पन्नेऽधिवेशने विश्वविद्यालयस्य प्राच्यविद्याध्ययनधर्मदर्शनसंकाये मम प्रोफेसरपदे नियुक्तेर्निर्णयः कृतः। मया दिशाम्बरमासमध्ये पदभाराधिग्रहणासामार्थ्यं द्योतयताऽधिकः कालोऽपेक्ष्यत इति सूचितम्। तथास्त्विति विश्वविद्यालया–धिकृतैरंगीकृतम्। १९७० वर्षीयफर्वरीमासान्तं यावत् पदाधिग्रहणकालः परिवर्धितः। पुनरपि मया ते प्रार्थिताः कालपरिवृद्ध्यै। तदपि स्वीकुर्वद्भिस्तैर्मार्चमासान्तं यावत्कालः परिवर्धितः। मार्चमासमनु जुलैमासं यावद् ग्रीष्मावकाशो भवेद्यत्राध्यापनं न प्रवर्तेतातः जुलैमासान्तं यावत्कालः परिवर्धनीय इति मे प्रार्थनाऽपि तैरंगीकृता। अहमेतावन्तं कालं दिल्लीविश्वविद्यालय एव प्रोफेसरपदमभिलषन्तन्निर्णयं प्रतीक्षमाण आसम्। परं वरमद्य कपोतः श्वो मयूरादितिन्यायेन काशीहिन्दूविश्व–विद्यालयपदमपि त्यक्तुकामो नासम्। जुलैमासेऽपि यदा दिल्लीविश्वविद्यालयनिर्णयो न जातस्तदा भूयोऽपि कालवृद्ध्यायहं काशीहिन्दूविश्वविद्यालयाधिकृतान् प्रार्थयितुमैषिषम्। तदा पितृचरणान् मन्युराविशत्। कठोरस्वरेण ते मामवोचन् किमित्येवमनुचितं प्रविवृत्ससि। यदि काशीगमनेच्छा नास्ति, तथा सूचय विश्वविद्यालयम्। काशीहिन्दूविश्वविद्यालयो नाम प्रतिष्ठितो विश्वविद्यालयः। सूचय तं नाहं तत्रत्यं पदं स्वीकरोमीति। पितृचरणानामादेश इत्यगतिकगत्या मया पत्रं सन्दृब्धं यत्र मया विश्वविद्यालयः सूचितः पदाधिग्रहणं न मत्कृते सम्भवि स्यादिति। एतदनन्तरं कक्षाध्यापनार्थं मया दिल्लीविश्वविद्यालयकलासंकायभवने गन्तव्यमासीत्। ततः प्रतिनिवृत्य डाकद्वारा पत्रमिदं प्रेषयिष्यामीति मनोऽदाम्। कलासंकायभवने शिक्षककक्षे कञ्चित्कालमहमुपविष्टः। तदानीं संकायस्थान्य–विभागीयाः प्राध्यापका अपि तमुपयान्ति स्म यदि कक्षाकालात् पूर्वं ते प्राप्ताः स्युस्तर्हि कक्षाकालं यावदथ च यदि द्वे कक्षे अध्यापनीये अभूतां तत्र च निरन्तरता नाभूत्तर्हि उभयोरन्तरालस्थकालं ते तत्र यापयन्ति स्म, चायपानादिद्वारा परस्परेण चर्चया वा {सम्प्रति नैतदस्ति, प्रतिविभागं शिक्षककक्षोऽस्ति येन विभागान्तरीयैः


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

प्राध्यापकैः सह सम्पर्कावसर एव न लभ्यते}। अहमपि कक्षाप्रारम्भात्किञ्चित्कालपूर्वं प्राप्त इति तत्रोपविष्टः। पदप्रत्याख्यानपत्रं मया सन्दृब्धमासीदित्यासं सुतरां विषण्णः। तदानीं बौद्धाध्ययनविभागाध्यक्षो भिक्षुजिनानन्दोऽपि तत्रावर्तत। स मे विषादमनुभूय मामुपसन्नोऽवोचच्च – किमित्यद्य भवन्तो विवर्णा इव लक्ष्यन्ते? किमिति मलिनं भवतां मुखमण्डलम् ? मया यथावृत्तं वृत्तं तस्मै निवेदितम्। पदं प्रत्याख्यामि, हस्तगतां लक्ष्मीं परित्यजामीति मथ्नाति मे चेतः। श्रुत्वैतत्स तीव्रं रोषमाहारयदवादीच्च धिग्भवतामविमृश्यकारिताम् ! कथं स्वयमेव पदं तिरस्कुर्वन्ति भवन्तः। प्रतिवारं यथा प्रार्थयन्ते कालपरिवृद्धिं भवन्तो विश्वविद्यालयं तदा सोऽङ्गीकरोति दृढं च वक्तीयमन्तिमा कालाभिवृद्धिरत उत्तरं पदं भवद्भ्य उच्छिद्येत, नोच्छिद्यते च तत्। एतद्वारमपि कालाभिवृद्धिं प्रार्थयन्तां भवन्तो यदि निरसनमेव, विश्वविद्यालयेन तत्क्रियतां कथं भवन्तः स्वयमेव नाहं पदमिदमधिग्रहीतुं शक्नोमीति कथयन्ति। तस्य परामर्शो मम साधिष्ठोऽभात्। 'हितान्न यः संशृणुते स किंसखा'।[३७] तत्परामर्शानुरोधेन पूर्वसन्दृब्धं पत्रं न प्रेषितमपि तु तस्य स्थानेऽपरं पत्रमगस्त्यमासान्तकालाभिवृद्धिप्रार्थनारूपं प्रेषितम्। विश्वविद्यालयेन साऽपि मे प्रार्थनाङ्गीकृता। अत्रान्तरे दिल्लीविश्वविद्यालयप्रोफेसरपदसाक्षात्कारसूचना मया प्राप्ता। नियुक्तश्चाहं तस्मिन्पदेऽगस्त्यमासस्य त्रयोदशदिने विश्वविद्यालयकार्य–कारिणीनिर्णयानुसारेण। तदा मया काशीहिन्दूविश्वविद्यालयः सूचितो न मया तत्रत्यं पदमधिग्रहीतुं शक्यमिति। सम्प्रति पश्यामि यदि डा. जिनानन्देन सत्परामर्शेन नाहमुपकृतोऽभविष्यं तर्हि स्वयमेव काशीहिन्दूविश्वविद्यालयीयं पदं प्रत्याख्यास्यम्। यदि केनापि कारणेन मम नियुक्तिर्दिल्लीविश्वविद्यालये नाभविष्यत् (नियुक्ति विषये को निश्चयेन शक्तो वक्तुम्) तर्हि का वा मे दशाऽभविष्यत्। इतो भ्रष्टस्ततो भ्रष्ट इतिवन्मे स्थितिरभविष्यत्। किञ्च, हस्तगतं पदं मया स्वयं परित्यक्तमिति शल्यं यावज्जीवं मामतोत्स्यत्। अद्य क्व सन्ति जिनानन्दसदृशा ये केवलं सौहार्देन प्रेरिता आत्मीयजनहितमनुध्यायन्ति। ते हि नो दिवसा गताः। यदैवाहं डा. जिनानन्दसम्भाषणदृश्यस्य[३८] स्मरामि, नात्मानमवष्टब्धुं पारयामि, मुहुरुपचितैरस्रैश्चालुप्यते मे दृष्टिः। अहो सौहार्दमहो स्नेहातिरेकः!

---

३७ किं क्षेपे (२.१.६४) इत्यनेन किमित्यव्ययस्य राजन्शब्देन सह तत्पुरुषसमासः। क्षेपो निन्दा। राजाहःसखिभ्यष्टच् (५.४.९१) इत्यनेन विहितस्य टजिति समासान्तस्य किमः क्षेपे (५.४.७०) इत्यनेन निषेधः।

३८ अधीगर्थदयेशां कर्मणि (२.३.५२) इत्यनेनाधीगर्थे, स्मरणार्थे षष्ठी।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

# ५६

वराणस्यामध्ययनकाले मम सम्पर्को हरिपालनाम्ना वयसा मज्ज्येष्ठेन जनेन जातः। ज्वालापुरीयमहाविद्यालयस्नातकोऽसौ व्याकरणशास्त्रेऽधिकं पाण्डित्यमर्जयितुं वाराणसीमुपेतः। व्याकरणाचार्यकक्षायां श्रीनित्यानन्दवेदविद्यालये डी. ए. वी. कालेजपरिसरस्थे स प्रविष्टः। अहमपि तत्राध्यगीषि। छात्रावासेऽपि सहावस्थितिर–भूदावयोः। उभावावां पञ्चनदीयौ। अतः प्रीतिश्च स्नेहश्चावायोरवर्धिष्टाम्। स स्नेहः स प्रेमा च कालेन भ्रातृत्वेन परिणतौ।

अस्ति पञ्चनदेषु लुधियानानाम मण्डलम्। तदन्तवर्ति चावापैलपुरं निकषोपत्यकायां निविष्टोऽस्ति ग्रामो दहेड्डू इति सञ्ज्ञः। तत्र ईश्वरसिंहनामा कश्चिदीश्वरभक्तः प्रतिवसति स्म। स तरुणे वयसि भूयो धनोपार्जनेच्छया ब्रह्मदेशमुपेतः। भारतीयान् प्रति तस्मिन्देशे विमुखे सति स पुनरपि स्वकीयं ग्रामं प्रत्यागत आयुःशेषं तत्रैव निनाय। तस्मिन् काले स्वतन्त्रतासंग्रामः प्रचलति स्म। महात्मनो गान्धिनो नेतृत्वे परोलक्षा जना विहाय स्वं च स्वांश्चात्मानं तत्र समर्पितवन्तः। ईश्वरसिंहस्तत्पत्नी तत्कनीयान् भ्राता चेति सर्वेऽपि कांग्रेससदस्या भूत्वा देशस्य स्वातन्त्र्यायोद्युयुजिरे। वयं भारतीया अस्माकं सभ्यता संस्कृतिश्चोत्कृष्टतरे अस्माकं भाषा संस्कृतमुत्कृष्टतमेति स्वं तनयं संस्कृतमध्यापयेयं शिष्यधर्मावलम्बी सन्नपीति तस्य बुद्धिरुदियाय संस्कृताध्ययनार्थं च स तं, हरभजनसिंहं, ज्वालापुरीये गुरुकुलमहाविद्यालये प्रेषयामास यत्र तस्य नूत्नं हरिपाल इति नाम बभूव। तत्स्नातकः स विशिष्टाध्ययनाय वाराणसीमुप–जग्मिवान् व्याकरणाचार्योपाधिं च लब्धवान्। यथा पूर्वमेवोक्तं मया, तत्रैव तस्य मया सह सम्पर्कोऽभूत्।

तद्विवाहसमये तद्ग्राममहमुपेतः कतिपयरात्रं तमध्युषितः। एवमेव मद्विवाहेऽपि स सम्मिलितः। विवाहो मे लखनऊनगरेऽभूत्। दिल्लीतो जन्या रेलयानेन तन्नगरं गताः। तत्र वासगृहेऽवस्थितिकाले यदा सर्वेऽपि वधूगृहं प्रस्थितास्तदा वासगृहस्थस्य सर्वस्यापि महार्घवस्तुजातस्य सुरक्षायाय[३६]मेकाकी तत्रैव स्थितः। तस्यैष त्यागोऽद्यापि मद्धृदयं गाढतरं स्पृशति। यदा एल्बर्टाविश्वविद्यालयनिमन्त्रणेन व्याख्यानार्थमहमैडमण्टननगरं कनाडास्थं गतस्तदा सप्ताहद्वयमन्यत्र वासेऽपि स यावद्दिनं मय्येवास्त, विश्वविद्यालयकार्यक्रमान्ते च दिनत्रयं तद्गृहेऽवस्थिता–वाग्रहग्रहिलोऽभूत् सः। एडमण्टनतः प्रस्थानकाले तत्तनयेन यः सम्प्रति तत्र

---

३६ सुरक्षायै अयमितिच्छेदः।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कृतज्ञतातिरेकवशाच्च सोऽपि वर्षस्य नाना मासान् पत्न्या सह तत्रैव यापयति एकं विद्युट्टंकणयन्त्रं (इलेक्ट्रोनिक टाइपराइटर) नानासहस्रमुद्रामूल्यलभ्यं मह्यं प्राभृतीकृतं यदद्यापि मय्यस्ति यच्च नाना वर्षाणि सततप्रयोगात् सम्प्रति जर्जरीभूतमपि तत्स्नेहप्रतीकरूपमिति नाहमपाकरोमि।

ज्वालापुरमहाविद्यालये स मुण्डितश्मश्रुकूर्च आसीच्छिष्यसम्प्रदायीयोऽपि। विवाहानन्तरं भार्याप्रेरितो वा तत्सम्बन्धिप्रणुन्नो वा श्मश्रुकूर्चं[४०] धारयितुं प्रवृत्तः। नाम्ना सिंहशब्दोऽपि तेन विनियोजितो जातिसूचको रावशब्दोऽपि। सम्प्रति स हरिपालसिंहराव इत्यभिज्ञयाऽभिज्ञायते।

नना वर्षाणि तेन स्वग्रामनिकटस्थेष्वनेकेषूच्चतरमाध्यमिकविद्यालयेषु संस्कृतमध्यापितम्। अद्य भूयान् कालस्तस्य सेवानिवृत्तस्य। अद्यापि शतशः संस्कृतपद्यानां[४१] स स्मरति कालोचितानि च तानि महता संरम्भेणोच्चारयति। शिष्यधर्मानुकूलाकारात्तस्मान्निर्गता संस्कृतपद्यझरी सर्वानपि विस्मयस्मेराननान् विदधाति। मां स संस्कृतेनैव पत्राणि लिखति। मह्यं सुतरां कुप्यन् मयि स्वं सहजं स्नेहमाविष्करोति।

## ५७

संस्कृतविभागाध्यक्षकार्यभाराधिग्रहणानन्तरं कथं विभागोऽयं समेधनीय इति ममासीत् प्रथमः कल्पः। संस्कृतं प्रति कथं जनानामभिरुचिर्जागर्यात्कथं च तेऽस्य महिमानमुपयोगितां च बुद्ध्येरन्निति प्रत्येकं संस्कृतज्ञस्य भवेदीप्सिततमं कर्म। तदेव मनसिकृत्य मया नैकानि नूत्नानि कार्याणि प्रारब्धानि। प्रथमं तावत्संस्कृत–नाट्यसमारोहस्यायोजनम्। दिल्लीविश्वविद्यालयांगभूताः सन्ति नैके महाविद्यालया ते मयाऽनुरुद्धा यथेच्छं किमपि रूपकं पुराणं वा नूतनं वा प्रयोगेण नाटयितव्यमिति। यस्य महाविद्यालयस्य प्रयोगः साधिष्ठ इति गम्येत परीक्षकैस्तस्मै चलवैजयन्ती देया स्यात्। यस्याभिनेतुर्वाऽभिनेत्र्या वाऽभिनयः उत्कृष्टतमोऽभिगम्येत स वा सा वा पुरस्कारमर्हो वाऽर्हा वा स्यात्। एवं नाट्यप्रयोगोऽयमन्तर्महाविद्यालयीय - प्रतिस्पर्धारूपेण दिल्लीविश्वविद्यालयसंस्कृतविभागेन मम विभागाध्यक्षपदारोहण-कालात्प्रारब्धः। जनेन च सुतरामभिनन्दितः। प्रतिवर्षं दिनद्वयं चैतन्निरन्तरं प्रावर्तत।

---

४० द्वन्द्वश्च प्राणितूर्यसेनांगानाम् (२.४.२) इतिसूत्रेण श्मश्रुकूर्चयोः प्राण्यंगत्वेनैकवद्भावः। स नपुंसकम् (२.४.१७) इत्यनेन च नपुंसकलिंगता।

४१ अधीगर्थदयेशां कर्मणि (२.३.५२) इत्यनेनाधीगर्थे, स्मरणार्थे षष्ठी।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कलासंकायस्था समावर्तनसंस्कारशाला तथा जनाऽऽकीर्णाऽजायत यथा बहूनां कृत उपवेशनाय स्थानमेव नाभवत्। परोविंशा जना आसनाभावाच्छाला-पृष्ठभागस्थिता नाट्यप्रयोगेनात्मानं व्यनोदयन्। न केवलं संस्कृतज्ञाः संस्कृता-नुरागिणोऽपरेऽपि संस्कृतानभिज्ञा जना कथंविधः संस्कृतनाट्यप्रयोगो भवतीति कुतूहलं शमयितुं तत्रोपातिष्ठन्त[४२]। प्रतिदिनं प्रवर्तमानस्य नाट्यसमारोहस्य सूचना वृत्तपत्रेष्वपि सर्वेषु आंग्लभाषया निबद्धेषु हिन्दीभाषोपनिबद्धेषु च 'अद्यतनाः कार्यक्रमाः' इति स्तम्भे प्रकाश्यते स्म येन संस्कृतनाट्यप्रयोगदर्शनोत्सुकास्ते कार्यक्रमेऽस्मिन् समुपस्थातुं शक्नुयुः। बहवश्च तत्पठित्वैव नाट्यसमारोहे सम्मिलिता बभूवुः। तेन संस्कृतविभागस्य कीर्तिः सर्वत्र प्रससार। संस्कृतं प्रति जनसामान्यस्य भावभेदोऽप्यंकुरितो बभूव। पुरातननाट्यकृतिसहकारेणापूर्ववस्तुरचनालंकृतानां नूत्नानां नाट्यकृतीनां प्रयोगावलोकनेन संस्कृतं मृतभाषेति अकिञ्चित्करेति च भाषमाणानां किञ्चिज्ज्ञानां मुखभंगोऽपि बभूव।

यद्यप्यस्माभिः शतशो निमन्त्रणानि प्रैष्यन्त परं के नाम संस्कृत-कार्यक्रमेष्वभिरुचिं बिभ्रतीति ज्ञानाभावात्तेषु निमन्त्रणप्रेषणं नासीत्सम्भवि। अत एव वृत्तपत्रसूचनासमाश्रयो येन यत्र कुत्रापि संस्कृतानुरागिणः स्युस्तेऽपि संस्कृतनाट्यप्रयोगेणात्मानं विनोदयितुं शक्नुयुः। एतेन कदाचित्सर्वथाऽ-घटितमप्यघटत। एकदा नाट्योत्सवे प्रवर्त्स्यमाने मयि तत्तत्संविधानकव्यग्रे कश्चिन्मम सहयोगी ससम्भ्रमं मामुपेत्यागादीन्नाट्यप्रयोगं द्रष्टुं श्रीमन्तः पतञ्जलिशास्त्रिणः समुपेता द्वारि च वर्तन्त इति। अहो! भारतस्य मुख्यन्यायाधीशा अत्रोपेता इत्यूर्ध्वमुत्क्रान्तप्राणः सपद्येव तानुपेतः साभिवादनं च पुण्योदयोऽयमस्माकं यदत्रभवन्तोऽत्र प्राप्ता इत्यादि प्रीतिप्रमुखानि स्वागतवचांसि व्याहृत्य तान्प्रत्युद्गम्य विशिष्टासने तान्यवेश्य साञ्जलिबन्धं च तान्प्रार्तथ आशीर्वचोभिरस्मान् कृतार्थयितुं यत्ते नैवाङ्ग्यकार्षुर्नाट्यप्रयोगं द्रष्टुमहमुपेतोऽस्मि न तु सभां सम्बोधयितुमिति। आनाट्यप्रयोगान्तं ते स्थिताः, शोभनः प्रयोग इत्युक्त्वाऽस्माकमुत्साहं वर्धयित्वा च प्रस्थिताः। अतर्कितोपनतं तेषामागमनमस्माकं कृत उत्सव इवाभवत्। एतेन ज्ञातं भवति कथं संस्कृतनाट्प्रयोगेऽभिरुचिः संस्कृतानुरागिणामिति, कथञ्च संस्कृतस्य प्रचाराय प्रसाराय च भिन्नरुचेर्जनस्याराधनरूपोऽयं संस्कृतनाट्यप्रयोग उपयोज्यतां बिभर्ति। संस्कृतानभिज्ञानां जनानां कृत एतादृशाः प्रयोगाः प्ररोचनारूपाः। एतैस्ते संस्कृताभिमुखाः शक्याः कर्तुम्।

---

४२ अकर्मकाच्च (१.३.२६) इत्यनेनात्मनेपदम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

गवेषणाकार्यप्रोत्साहनार्थमपि विभागेन किञ्चित्कर्तव्यमिति बुद्धिमास्थाय मया गवेषणापत्रिकायाः प्रकाशनविषये चिन्तितम्। दिल्लीविश्वविद्यालयसंस्कृत–विभागपत्रिकेति च तस्या नाम कृतम्। दिल्लीविश्वविद्यालयस्नातकोत्तर–संस्कृतविभागीयानां दिल्लीविश्वविद्यालयसम्बद्धमहाविद्यालयसंस्कृतप्राध्यापकानां च कृते संस्कृतभाषासम्बद्धानां संस्कृतवाङ्मयसम्बद्धानां भारतीयविद्यासम्बद्धानां नूतनप्रतिपादनापराणां निबन्धानां प्रकाशनाय तैरवसरो लभ्येतेति ते तत्प्रणयनोन्मुखा भवेयुरिति मम पत्रिकाप्रकाशनोद्यमे प्रयोजको हेतुर्बभूव। न भूयसी संख्याऽस्मद्देशे गवेषणापराणां पत्रिकाणाम्। अतो नावसरो लभ्यते बहुभिरनुसंधित्सुभिर्विद्वद्भिः स्वनिबन्धप्रकाशनाय। इयं विभागीया पत्रिकेति विभागीयानां प्राध्यापकानां निबन्धप्रकाशनमत्र प्राथम्यं भजेतैव। नात्र प्रतिबन्धो विभागीयेतरेषां विदुषां निबन्धप्रकाशनस्य। तेऽपि प्राकाश्यं भजेरन्नैव। परं प्राथम्यं नाम दिल्लीविश्व–विद्यालयीयसंस्कृतप्राध्यापकनिबन्धानामेवेति निश्चितमेव। केवलमुत्कृष्टा एव निबन्धाः पत्रिकायां स्थानं लभेरन्निति सुनिश्चितं कर्तुं पन्था एको मया समाश्रितः। नाहं पथोऽस्योद्भावकः, अन्यपत्रिकाभिः जर्नल ऑफ़ दि एशियाटिक सोसाइटी प्रभृतिभिस्तस्य पूर्वं समाश्रितत्वात्। स चेत्थमस्ति– प्रकाशनार्थं प्राप्तो निबन्धः प्रथमं तत्तद्विषयपारदृश्वसु विद्वत्प्रवेकेषु परीक्षणार्थं प्रेष्येत। यदि ते ऽनुमन्येरंस्तदैव स निबन्धः प्रकाश्येत। यदि ते कांश्चन प्रमादान् उद्भावयेयुस्तर्हि तदपनोदाय स निबन्धो निबन्द्धारं प्रेष्येत। ततः प्राप्तः स निबन्धः पुनः विद्वत्प्रवेकं प्रेष्येत येन पूर्वं स परीक्षितः। यदि तेन स सन्तुष्येत्तदा स निबन्धः प्राकाश्यं गच्छेत्। यदि दोषापनोदेऽपि न तस्य सन्तुष्टिः, दोषापनोदो न समीचीन इति स मन्येत तदा न स निबन्धः प्राकाश्यं भजेत। जर्नल ऑफ़ दि एशियाटिक सोसाइटी इत्यत्र निबन्द्धृनामसहकारेण तस्य विद्वत्प्रवेकस्य, येन निबन्धः परीक्षितो, नामापि कीर्त्यते – communicated by इत्येवंरूपेण। अत्र विद्वत्प्रवेकनामसंकीर्तनं विहायान्या सर्वाऽपि पद्धतिर्मया समाश्रिता। तस्य नामसंकीर्तनं निबन्द्धृचेतसि कदाचिदुद्वेगं जनयेत् स च तस्मै[४३] द्रुह्येदनिष्टं वा समाचरेदिति। सन्ति तादृशा अपि जना अत्र जगति ये तथा पण्डितम्मन्या यथा स्वमन्येभ्यो विद्वद्भ्य उत्कृष्टं मन्वाना तैर्हिताय प्रयुक्तमपि वचोऽवधीरयन्ति तस्मिंश्च दोषं पश्यन्तस्तेभ्योऽभ्यसूयन्ति[४४] तान् द्विषन्तश्च तेष्वनिष्टमाचरन्त्याहोपुरुषिकया बाध्यमानाः। येभ्यो विद्वत्प्रवेकेभ्यो

---

४३ क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः (१.४.३७) इत्यनेन चतुर्थी।
४४ पूर्ववदेव।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

निबन्धाः परीक्षणार्थं प्रैष्यन्त तेषां नामानि मय्येवावातिष्ठन्त[४५], न कोऽपि तान्यजानान्मदृते। एकदा किञ्चिद्विचित्रमिवाघटत। विभागीययैकया शोधच्छात्रया स्वकीयो निबन्धः पत्रिकायां प्रकाशनार्थं मह्यं समर्पितः। एकया मम वरीयस्या सहयोगिन्याऽपि या महाविद्यालय एकस्मिन् कार्यरता – बहूनि वर्षाणि तस्या अध्यापनकर्मणि रतायाः – स्वनिबन्धः प्रकाशनार्थं मह्यं प्रत्तः[४६]। यत उभावपि निबन्धौ समानशास्त्रेण सम्बद्धाविति तावुभावपि मया परीक्षणार्थमेकस्मायेव[४७] विद्वद्वरेण्याय प्रेषितौ। तेन शोधच्छात्राया निबन्धः साधिष्ठ इति प्रकाशनार्थमभिष्टुतः प्राध्यापिकाया निबन्धश्च प्रमादबहुलोऽकिञ्चित्करो निस्सार इति च प्रकाशनानर्ह इत्युद्घोषितः। यदा तन्मतमहं तां प्राध्यापिकामसुसूचं तदा सा मामन्वयुक्त कोऽसौ विद्वत्प्रवेको येनैवमुक्तमिति। मयोक्तं नेदं मया वक्तव्यं भवति। न वयं विद्वत्प्रवेकान् पारिश्रमिकराशिना सभाजयामः। केवलं सौहार्दभावेनैव तेऽस्मिन् कर्मणि प्रवर्तन्ते। अहैतुकी कृपा तेषामस्मासु। तत्र यदि तेषां नामप्रकाशनेन तदनिष्टसम्भावना स्यात्तर्हि महते नः क्लेशायापमानाय मनोभंगाय च सम्पद्येत। मय्येवमुक्तवत्यपि साऽग्रहग्रहिलैवास्त नाम प्रकाशयन्तु भवन्त इति। ज्ञातुमिच्छाम्यहं कोऽसौ विद्वत्प्रवेको येन प्रयत्ननिबद्धोऽपि मम प्रबन्धो निरस्तः। तदाग्रहो मां महति धर्मसंकटेऽपातयत्। नाम न प्रकाशनीयमित्यस्मन्नीतिः। नीतिविरुद्धं नाचरणीयं चेति शास्त्रवचः। इयं पुनर्वर्षीयसी प्राध्यापिका। नाना वर्षाण्यनया सह कार्यं कुर्वाणस्य मम। कथमिमां प्रतिषिन्ध्याम्। अस्तु तर्हि उत्सर्गाणामपवादा भवन्त्येव। उत्सर्गापवादाभ्यामेव लोकयात्रा प्रवर्तते। एवं मनसिकृत्य नाम प्रकाशनीयमेवेति मया निरचायि। एवं निश्चितवति मयि मयोक्तम् – तस्य विद्वत्प्रवेकस्य नामास्ति ए.डी. पुसालकर इति। तच्छ्रुत्वैव लज्जानम्रमुखी सा प्राह – स विद्वत्कुलावतंस इति प्रकाशम्। यदि तेन मम निबन्धः परिष्कारमर्ह इत्युक्तं तर्हि विनयावनतेन मूर्ध्ना तत्स्वीकरोमि। नैतादृशा विद्वत्प्रवेका अननुसन्धाय किमपि ब्रुवन्ति वा प्रतिपादयन्ति वा। अहं तावन्तं कालं निबन्धं परिष्करिष्यामि यावन्तं कालं तस्य परितोषो न भवेत्। निबन्धप्रकाशनापेक्षया तत्परितोष एव ममेप्सिततमः। तदनु बहु श्रान्तं तया। ये ये दोषास्तेन पण्डितपुंगवेनोद्भावितास्ते तयाऽपाकृताः पूर्वकृतस्य निबन्धस्य तत् (ए. डी. पुसालकर) निर्देशमनुसरन्त्या। नूत्न इवावतारस्तया पुनरवलोकनार्थं पुरस्कृतः। सन्तुष्टोऽस्मि सम्प्रति प्रकाशनार्होऽयं निबन्ध इति

---

४५ समवप्रविभ्यः स्थः (१.३.२२) इत्यनेनात्मनेपदम्।

४६ अच उपसर्गात्तः (७.४.४७) इत्यनेनाजन्तात् 'प्र' इत्युपसर्गात्परस्य 'दा' इत्यस्य आकारांशस्य तकारादेशः {प्रदत्त}। तदनु दकारस्य चर्त्वे (प्रत्त्त = प्रत्त) इति रूपम्।

४७ एकस्मै एव इतिच्छेदः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तेन चानुमोदितः। एतद्दृष्टान्तद्वयेनेदं सिध्यति यद्वयोज्यायस्त्वमेव न कार्योत्कर्षे हेतुः। वयसा कनीयांसोऽपि तत्र प्रभवन्ति। क्व खल्वल्पवयस्कोद्भिन्नयौवना शोधच्छात्रा क्व च परिणतवयस्का प्राध्यापिका। अल्पवयस्काया निबन्धः प्रशंसितो डा. पुसालकरमहाभागैः परिणतवयस्कायाश्च तिरस्कृतः। ते तु न पर्यचिन्वन्नुभे अपि। सर्वथाऽनभिज्ञताऽऽसीत्तेषां तद्विषये। निबन्धद्वयं तेषां पुरोऽभूत्। तद्गुणदोषपरिच्छेद एव निष्पक्षतया तैः कृतोऽभूत्। अल्पवयस्का गुणेन परिणतवयस्कामतिशेते प्रशंसाभाजनं च भवतीति 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वय' इति भवभूतेरुक्तिमेव सत्यापयति।[४८]

## ५६

पत्रिकायाः प्रथमोऽङ्को, यथा पूर्वमुक्तं, दिल्लीविश्वविद्यालयसंस्कृतविभागपत्रिकेति नाम्ना प्रकाशितः। तदनु बृहतीयं सञ्ज्ञा लघ्वर्थं च सञ्ज्ञाकरणमिति न्यायेन सञ्ज्ञया लघ्व्या भवितव्यमित्यनुध्याय सञ्ज्ञान्तरान्वेषणप्रवृत्तेन मया 'इण्डोलोजिकल स्टडीज़' इति नूत्ना सञ्ज्ञा कृता। प्रथमाङ्कादनन्तरम् अस्या अङ्का एतां सञ्ज्ञामेवाभार्षुः। डा. पुसालकरनाम्ना एको विशिष्टाङ्कोऽप्यस्याः प्रकाशितो ऽभूत्। डा. पुसालकरमहाभागानां मय्यासीत्स्नेहातिशयः। एकदा ते स्वकीये पत्रे मां निरदिक्षन् न त्वं मां डा. पुसालकरेति सम्बोधय, तातेति मां सम्बोधय (डू नॉट एड्रेस मी एज़ डॉ पुसालकर एड्रेस मी एज़ अंकल)। ते मम कनिष्ठताता एवासन्। भ्रातृव्यवत्ते मामपश्यन्। तेषां मयि वात्सल्यं यत्सत्यं मम पूर्वजन्मोपार्जितानां सुकृतानामेव फलम्।

यदा माईणकरः प्रथमवारं प्रोफेसरपदसाक्षात्कारार्थं पुण्यपत्तनाद्दिल्ली-मुपेतस्तदा दिल्ल्यां पहाड़गंजस्थिते महाराष्ट्रसदने स वासमकल्पयत्। तदाऽहं तं द्रष्टुमुपेतः। सोऽतीव मधुरं मयि व्यवाहरत्। मोदकादिकं यत्पाथेयरूपेण तेन सहानीतमासीत् तन्मामाशयत्। अत्रभवतो नियुक्त्या विभागे याऽव्यवस्था साऽपेयादिति स्वमतमहं तस्मायाविरकरवम्। सोऽपि मद्वचोऽभ्यनन्दत्। द्वितीयवारसाक्षात्कारानन्तरं यदा स पदभारमग्रहीत्तदाऽऽत्मीयोऽहं तस्यात्मनीनश्चेति मयि स्नेहातिशयेन व्यवाहरत्। साहित्य अकादेमी पुरस्कारप्राप्त्यनन्तरं याऽभिनन्दनसभा तत्प्रेरणया विभागे समायोजिताऽभूत्तत्रातीव भावप्रवणतया स

---

४८ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् (३.१.२५) इत्यनेन णिचि रूपम्। सत्यं करोतीत्यर्थः।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

मामभ्यष्टौत्, पुरस्कारेणानेनाऽऽत्मानेन न केवलं महता यशसा योजितोऽपि तु संस्कृतजगदपि। तस्यायं मयि स्नेहातिशयो मम विभागीयायान्यसहयोगिने ब्रजमोहन चतुर्वेदीत्याख्याय नारोचत। आत्मानं तन्निकटे स्थापयितुं स निरन्तरमुदयुक्त। अहमेवास्मि भवद्धितैषी, अन्ये तु प्रत्यक्षे प्रियवादिनोऽपि परोक्षे कार्यहन्तार इति तं स प्रत्यपीपदत्। अहर्निशं छायेव स तमन्वगच्छत्। मद्विषये स बह्वसम्बद्धं प्रालपत्। तद्व्यवहारेण क्षुब्धा नैके विभागीया मत्सहयोगिनो माईणकरा– द्वैमुख्यमभजन्। कर्णेजपोऽयं चतुर्वेदी कथं न तेन पृथक्क्रियते, तेन परिवृतस्तद्वचस्येव प्रत्येतीति तेषां मनसि क्षोभमजनयत्। सोऽयं क्षोभो कालेन जले तैलबिन्दुरिव प्रसृतः। तेन वैयाकुलीमापन्नो माईणकरः। सत्यव्रत एवात्र हेतुः स एव जनानुत्तेजयतीति चतुर्वेदी तं निरन्तरं प्राह। परप्रत्ययनेयबुद्धिः सोऽपि तद्वचसि प्रतियन् मह्यं द्वेष्टुं प्रारभत। पञ्चतन्त्रे शृगालः करटको यथा सिंहं भासुरकं तदभिन्नमित्रात् सञ्जीवकाद् बलीवर्दात्पृथक् कर्तुं साफल्यमवापैवं चतुर्वेद्यपि मां माईणकरात्। सोऽयं मित्रभेदो नाम यः पञ्चसु तन्त्रेषु द्वितीयः। अहं माईणकरप्रतिकूलस्तदनिष्टे च रतोऽन्यानपि तत्प्रतिकूलान् विदधामीति विचारो माईणकरमनसि तथा निखातो यथा तस्यापाकरणं सम्भवमेव नाभूत्। माईणकरस्य मुम्बापुरीविश्वविद्यालयभण्डारकरपदस्वीकृतौ हेत्वन्तरेषु जनानामत्रत्यानां तद्विमुखीभावोऽप्येको हेतुरभूत्। भण्डारकराचार्यपीठे नियुक्तिस्तस्य दिल्लीतोऽपगमने साधकतामिता। दिने दिनेऽत्रावस्थितिस्तस्य विषमा सम्पद्यमानाऽऽसीत्। महाराष्ट्रेषु लब्धजन्मना मयाऽऽयुश्शेषस्तत्रैव यापयितव्य इत्यनयैव भावनया न तेन मुम्बापुरीपदं स्वीकृतम्। दिल्ल्यां स्थितिरसुखकरेत्यतोऽपि। अहं लोके समादृतो मद्वचो जनाः प्रमाणयन्तीति मय्येव तस्य कोपाशनिरपप्तत्। स मह्यं तथा ऽक्रुध्यद्यत् कस्मिंश्चित् प्रसंगे कमपि जनं सोऽभाणीत्–गच्छाम्यहमितः। सत्यव्रतस्य न पूर्वं प्रोफेसरपदलाभ-सम्भावनाऽऽसीत्, न च साम्प्रतमस्ति सा, न चायतावपि सा भवेत्। तस्माज्जनात् श्रुतानीमानि वचांसि शल्यानीव मामविध्यन्। प्रोफेसरपदसाक्षात्कारवेलोपसीदति स्म। माईणकरवचो न वाग्वितण्डैव। तदुत्सर्गे दाण्डेकरबलं हेतुरिति मे न नोन्नेयमासीत्। दाण्डेकरो हि प्राश्निकः। माईणकरं स बहु मन्यते। अत एव तेनाप्रार्थितमपि प्रोफेसरपदं स्वत एव विश्वविद्यालयेन तस्मायर्पणीयमिति प्रथमसाक्षात्कारे सोऽवोचत्। एतद्विषये पूर्वं चर्चा कृतैव। तं यदि माईणकरः प्रेरयति मद्विरुद्धमाचरितुं तदा दिल्लीविश्वविद्यालये मम प्रोफेसरपदप्राप्त्याशा खपुष्पायेत। दुःखभराक्रान्तहृदयोऽहं किंकर्तव्यविमूढ इवासम्। नाहं शास्त्राणि जानामीति न। नाना वर्षाणि तेष्वहं कृताभियोगः, प्राश्निकानां प्रश्नोत्तरणे सर्वथा समर्थः। परं यदि प्राश्निकः स्वेनैव वा परप्रेरणयैव वाऽहितसाधन एव बद्धबुद्धिः स्यात्तर्हि न कोऽपि किमपि कर्तुं शक्तः। तदा सहसैव स्फुरितो मे मनसि


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विचारः। क़थं न मे कनिष्ठतातान् डा. पुसालकरमहाभागानहमेतमर्थमवगमयेयम्, ते हि भण्डारकरप्राच्यविद्याशोधसंस्थाने पुण्यपत्तनस्थे तत्सहयोगिनः, महितकीर्तय-स्तत्समकक्षा एव। ते नाम तमनुकूलयितुं शक्नुयुः। तद्वचो लंघयितुं तस्य सामर्थ्यं न स्यात्। एतां विचारसरणिमाश्रित्य मया तान् प्रति पत्रं प्रेषितं यत्र सर्वोऽप्युदन्तो विस्तरेणोपन्यस्तः। कतिपयदिनानन्तरमेव 'पोस्टकार्ड' इत्यत्र समारोपितं संक्षिप्तं तदुत्तरं प्राप्तम्। तत्र तैर्लिखितम् आसीत् – वत्स! मा चिचिन्तः। अहं दाण्डेकरेण चर्चां करिष्यामि। भगवत्कृपया त्वमवश्यमेव साफल्यमवाप्स्यसि। तस्याश्चर्चाया एव फलमिदं यत्साक्षात्कारसमितौ न मे तेन विरोधः कृतः, केवलं नैभृत्यमेवावलम्बितम्। स्वेन स गुणगृह्योऽभूत्। प्रकृत्या सुजनः, विद्वत्प्रियः, बहुव्रीहिदृष्ट्याऽपि तत्पुरुषदृष्ट्याऽपि। अतो डा. पुसालंकरवचांसि तमनुकूल-यितुमशकन्।

## ६०

एतत्प्रसंग एव किञ्चिदन्यदपि विवक्षामि। यदाप्रभृति माईणकरवचांसि मच्छ्रोत्रशष्कुल्यौ अस्पृशंस्तदाप्रभृति विषादो मां राहुश्चन्द्रमिव ग्रस्तुं प्रारभत। सर्वदैव चिन्ताचान्तचेता अहं क्षणमपि क्षणं नालप्सि। एकदैवंविधं मामवलोक्य पितृचरणा मामवोचन् – वत्स! किमित्यनुदिनं परिहीयसेऽङ्गैः। का नाम चिन्ता या त्वामवसादयति। मया माईणकरेण यदुक्तमासीत्तदाम्रेडितम्। तच्छ्रुत्वा दीर्घं निःश्वस्य तैरुक्तम् –

ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः।
सा योनिः सर्ववैराणां सा हि लोकस्य निर्ऋतिः।।[४९]

माईणकरेण राक्षसी वागुदीरिता। अहंकारविमूढात्मा स कर्ताऽहमिति मन्यते। यो नाम जगतः कर्ता स त्वां रक्षिष्यति। मा विषादं गमः।

सर्पाणां च खलानां च परद्रव्यापहारिणाम्।
अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत्।।[५०]

---

४९ उत्तररामचरितम्, ५.२९

५० पञ्चतन्त्रम्, १.१६६

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

क्वासौ वराको मार्इणकरः। उपार्जितानि त्वया सुकृतानि। मयाऽपि तान्युपार्जितानि। तानि त्वां रक्षिष्यन्ति। मा विषादायावसादाय वा मनो दाः। विश्रब्धस्तिष्ठ। साफल्यमवश्यमवाप्स्यसि। अद्य यदा पूर्ववृत्तमिदं स्मरामि कण्ठो मे बाष्पवृत्तिकलुषो भवति। कथं विषमे धैर्य्यं स्थैर्य्यं चापादितोऽहं तातपादैः पितृव्यपादैश्च।

अनुसन्धानपत्रिकाया 'इण्डोलोजिकल स्टडीज़' इति नूत्नं नाम बिभ्रत्या एकोऽङ्कः पितृव्यपाद (डा. ए.. डी. पुसालकर) नाम्नैव प्रख्यापितः कृतज्ञताभरापूरितान्तःकरणेन मयका। यावन्तं कालमहं विभागाध्यक्षपदमध्यतिष्ठं तावन्तं कालं पत्रिकेयं नियमेन प्रतिषण्मासानन्तरं प्राकाश्यमभजत। मम विभागाध्यक्षापगमानन्तरं पत्रिकाप्रकाशनमवरुद्धम्, मदुत्तरवर्तिनां विभागाध्यक्षाणा-मन्येषां च विभागीयानामध्यापकानां श्रमसाध्ये कर्मण्यात्मानं व्यापारयितुं रुचेरभावात्। पत्रिकाप्रकाशनं न न सुकरं नाम। १९६२ वर्षे सिताम्बरमासस्य द्वादशे दिने संस्कृतपत्रकारसम्मेलनोद्घाटनावसरे पत्रिकाप्रकाशनविषये स्वकीया उद्गारा मयैभिः शब्दैराविष्कृताः–

लेखस्य कष्टं च धनस्य कष्टं
कष्टं तथा मुद्रणसंविधायाः।
प्रकाशनं संस्कृतपत्रिकाणा–
मसंशयं कष्टपरम्परैव।।[५१]

को नाम कष्टपरम्परां सोढ्वा संस्कृतपत्रिकाणां प्रकाशन आत्मानं व्यापारयेत्। यदि नाम कश्चित्तत्रात्मानं व्यापारयत्यपि तस्य शरीरोपशमाद् वा परिस्थितिवशाद्वा भवति विरतिस्तदा पत्रिकाया अपि भवति विरतिः। एवं नानोद्योगिभिर्जनैः शुद्धबुद्ध्या महान्तमायासमात्मन्यापाद्य प्रवर्तिताः पत्रिकाः कालेन विरतिं गताः। तदिदं महते कष्टाय विद्याव्यसनिनाम्।

इदं नाम ज्ञायमानं विस्मयावहं भवेद्यत्पत्रिकाप्रकाशनार्थं दिल्ली-विश्वविद्यालयेन वार्षिकरूपेण केवलं द्विसहस्रमुद्रा एवादीयन्त। तावताऽल्पीयसा साधनेनापि मितव्ययितामाश्रित्य प्रतिषण्मासम् अध्यर्धशतपृष्ठात्मिका पत्रिका मया प्राकाश्यत। अद्य स्वयमपि यदा चिन्तयामि तदा विस्मितो भवामि। तदानीं कथमहमेतादृशं साहसमधिरूढः। असहायानां सहायो भूतभावनो भगवानेव। तत्कृपयैव सर्वं सिध्यति। सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः सम्भावनागुणमवेहि तमीश्वराणामिति यत्कालिदास[५२] आह तदवितथमेव।

---

५१ पत्रकाव्यम्, प्रथमो भागः, १९६४, पृष्ठम् २४८

५२ अभिज्ञानशाकुन्तलम्, ७.४

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पत्रिकाविनिमयेन देशे प्रकाश्यमाना अन्याः पत्रिका अपि प्राप्तुं शक्यन्ते। तद् ग्रन्थालयवृद्धये कल्पते। तत्रापि दत्तं मया मनः। नाना पत्रिकासम्पादकैः सह मया कृतः सम्पर्कः। 'इण्डोलोजिकल स्टडीज़' इति नाम्ना पत्रिकास्माभिः प्रकाश्यत इति ते सूचिताः। पत्रिकाया अंकोऽपि अंकद्वयमपि वा तेषु प्रेषितः/प्रेषितम्। भवद्भिरपि स्वपत्रिकाऽस्मासु प्रेषणीयेति तेऽनुरुद्धाः। तैः सहर्षं ममानुरोधः स्वीकृतः लोकमान्या पद्धतिरिति वदद्भिः। एवं पत्रिकाव्यतिहारेण[५३] नाना पत्रिका विना मूल्यमस्माभिरध्यगम्यन्त। अयमपरो लाभः पत्रिकाप्रकाशनस्य।

## ६१

न केवलं संस्कृतनाट्योत्सवप्रारम्भ एवाहं मनोऽदामपि त्वन्यविधसांस्कृतिक-कार्यक्रमप्रारम्भेऽपि यत्र कविसम्मलेनस्य अन्तर्महाविद्यालयीयाया इन्द्रविद्या-वाचस्पतिवाक्प्रतिस्पर्धाया आयोजनस्यापि समावेशोऽभूत्। अर्थं विना नार्थः सिध्यति कुतश्च तद्व्यवस्था स्यादिति चिन्ताचान्तचेता अहं तत्प्राप्त्युपायान्वेषणे प्रसितः। दिल्लीप्रशासनात्साहाय्यं प्राप्तुं शक्यत इति मे बुद्धिरुदिता। परं केन तदर्थं सम्पर्कः साधनीय इति नाहमवेदिषम्। तदानीं विधानसभाव्यवस्था नासीत्। महानगरपरिषद्, आङ्ग्ल्यां मैट्रोपोलिटन काउंसिल इति नाम्नी संस्था तदाऽऽस्त शासनांगभूता यत्र जनतया निर्वाचिता जनाः 'पार्षद' इति सञ्ज्ञयाऽभ्यज्ञायन्त। ते पार्षदास्तत्तद्विभागप्रबन्धनाय स्वस्मिन् कांश्चिन्निर्वाचयामासुर्ये कार्यकारिपार्षदा इत्यभ्यधीयन्त। तत्प्रमुखो मुख्यकार्यकारिपार्षद इति सञ्ज्ञां बभार। महानगरपरिषदः सत्रसञ्चालनाय तदध्यक्षोऽपि 'स्पीकर' इत्याङ्ग्ल्यां नामभाक् निर्वाचितोऽभूत्। मुख्यकार्यकारिपार्षदस्तदाऽभूच्छ्रीराधारमणः परिषदध्यक्षश्च (स्पीकर) मीरमुश्ताकअहमद इति यवनधर्मावलम्बी कश्चन। श्रीराधारमणो मया स्वकार्यक्रमेषु नैकदा निमन्त्रितः। स मय्यतितरां स्निह्यति स्म। स कार्यक्रमसञ्चाल-नार्थमार्थिकसाहाय्यं नैकदा प्रार्थितस्तन् मह्यं[५४] प्रत्यशृणोत्परं नैव किञ्चिदप्य-करोत्। न सर्वं[५५] मय्यधीति चाप्यवदत्, आर्थिकसाहाय्यायायव्ययपत्रके, 'बजट'

---

५३ व्यतिहारो विनिमयः। पाणिनिनाऽपि तस्मिन्नर्थे प्रयुक्तोऽयं शब्दः—कर्तरि कर्मव्यतिहारे (१.३.१४)

५४ प्रत्याङ्भ्यां श्रुवः (१.४.४०) इत्यनेन सम्प्रदानसंज्ञायां चतुर्थी। प्रत्यशृणोत् इत्यस्य प्रतिज्ञातवान् इत्यर्थः।

५५ अधिरीश्वरे (१.४.९७) इत्यनेन सप्तमी (मदधीनमित्यर्थः)

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

इत्याख्ये तत्प्रस्तोतव्यं भवति तदनुमोदनं च पार्षदैः करणीयं भवति, तदन्वेव राशिर्दातुं शक्येतेति च मामबोधयत्। यथा तेनोक्तं तदनुसारेण पार्षदानां समर्थनमायव्ययपत्रकेऽर्थराशेः संस्कृतकार्यक्रमसञ्चालनाय निर्देशस्तत्समर्थनं च पार्षदैः कर्तव्यं तच्च तदानुकूल्यमन्तरेण न सम्भवि। असंस्तुता हि मे ते पार्षदाः। कदाचित्प्रेर्यमाणा अपि मन्मतं नांगीकुर्युः। अत्र कथं प्रवर्तनीयमिति मया बह्वचिन्ति। तदाऽकस्मादेव विचारसरणिः प्रवृत्ता मे यद्यदि परिषदध्यक्षाणामानुकूल्यं यथा कथञ्चित्साध्येत तर्ह्यन्येषामप्यानुकूल्यसाधनं सुकरं भवेत्। एतां बुद्धिमास्थायैकस्मिन्दिनेऽहं तानुपसन्नः। यवनबहुले प्रत्नदिल्लीस्थे स्वगृहे बहिरलिन्दं, 'ड्योढी' इति देश्यभाषायां, ते व्यराजन्त। परस्परप्रणतिव्यतिहार[५६] पुरःसरमित्थमावयोर्भाषणमाविरासीत्—

अहम् — अहमस्मि गुरुभिः सत्यव्रत इति कृतनामधेयो दिल्लीविश्वविद्यालये संस्कृतविभागाध्यक्षः।

मीर मुश्ताक अहमदः — स्वागतमत्रभवद्भ्यः।

अहम् — कार्यवशादत्र भवत्सूपसन्नोऽहम्।

मीर मुश्ताक अहमदः — किं तत्कार्यम्?

अहम्— संस्कृतविभागेन कानिचन नूत्नानि कार्याणि प्रारिप्सितानि। विनार्थं न कश्चिदर्थः सिध्यतीति तदर्थमर्थव्यवस्थाऽपेक्षिता। सा च प्रशासनसाहाय्यमन्तरेण न सम्भविनी।

मीर — कानि नूत्नानि कार्याणि प्रारिप्सितानि?

अहम्— संस्कृतकविगोष्ठीत्येकं संस्कृतगीतप्रस्तुतिरित्यपरं संस्कृतनाट्य-प्रयोग इति चान्यत्। सम्प्रति धनप्रत्ये[५७]वास्मासु। तेनैव यथाकथञ्चित्कार्याणि वयं सम्पादयामः। कष्टश्रिता[५८] वयम्। तत्कष्टापनोदायाहमत्रभवत उपसन्नः। कतिपयैरेवाहोभिः संस्कृतगीतप्रस्तुतिरस्माभिरायोज्यते। मध्ये मध्ये एकलपात्राभिनयः (मोनो एक्टिंग), संस्कृतकवितापाठश्चापि भविष्यतः। संस्कृतगीतप्रस्तुतौ प्रत्ना च नूत्ना चेत्युभयविधाऽपि पद्धतिरस्माभिः समाश्रयिष्यते। साम्प्रतं कव्वाली[५९]ति नाम्नाऽभिज्ञायमाना लोकप्रसिद्धा या पद्धतिस्तयाऽपि गीतानि प्रस्तोष्यामः।

मीरः — किं संस्कृतेऽपि कव्वालीप्रस्तुतिर्भवति?

---

५६ व्यतिहारो विनिमय इति पूर्वमुक्तमेव।

५७ सुप्प्रतिना मात्रार्थे (२.१.६) इत्यनेनाव्ययीभावसमासः। मात्रा इत्यस्य लेश.इत्यर्थः। धनप्रति = अल्पं धनम्, मात्रा बिन्दुः स्तोकमल्पमितिपर्यायाः (काशिका)।

५८ द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः (२.१.२४) इत्यनेन समासः।

५९ काकलीतिरूपेण संस्कृतीकरणमस्य शब्दस्य कृतमद्यतनैः संस्कृतज्ञैः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अहम् – भवत्येव।

मीरः – तत्कुतूहलं मे जनयति। संस्कृतकव्वालीं श्रोतुमिच्छामि। इदम्प्रथम एव मम कृतेऽयमनुभवः। संस्कृतेऽपि कव्वाली प्रस्तूयत इति नाहमवेदिषम्। अवश्यमहं भवत्कार्यक्रम उपस्थास्ये।

अहम् – महान्ति नो भागधेयानि। भवदुपस्थितिरस्माकं कृत उत्सव इव। भवद्भिरस्मत्प्रार्थनाऽङ्गीकृतेति वयं कृतिन आत्मानं मन्यामहे।

## ६२

मीर मुश्ताक अहमदमहाभागा कार्यक्रमे यथाकालमुपस्थिताः। कार्यक्रमे वैविध्यमासीत्, कवितापाठः, एकांकप्रस्तुतिः, गीतं, वायलिनवाद्यप्रस्तुतिः, अन्ते च कव्वालीप्रस्तुतिः। तत्रास्माकमयमप्यभिसन्धिरासीद्यत्सकलेऽपि कार्यक्रमे ते समुपस्थिताः स्युः चाक्षुषं च प्रत्यक्षं तस्य तेषां भवतु। मध्ये मध्ये उद्विग्नतया तेऽप्राक्षुः – कव्वाली कुतो न प्रस्तूयते। कञ्चित्कालं प्रतीक्षन्तां श्रीमन्तः। प्रस्तोष्यत एव सा। कार्यक्रमान्ते सा प्रस्तुताऽस्माभिः। पारम्परिकरीत्या प्रस्तोस्तृश्रोतृ–करतालिकासंयोगोपोद्बलिता सा तेभ्योऽन्यन्तमरोचत। रुचिरा प्रस्तुतिरिति ते नैकशोऽभाणिषुः। संस्कृतमस्मद्देशेऽतिपुरातनी वाक् तस्याः संरक्षणं संवर्धनं चास्माकं प्रथमः कल्प इति चापि ते व्याहार्षुः।

कतिपयदिनानन्तरं यदाऽहं तैः समगंसि[६०] तदा ते मामवोचन् भवन्तः पार्षदानुपसीदन्तु। मीरसाहिबेन प्रेषितोऽस्मीति च तान् निवेदयन्तु तत्साहाय्यं चताननुरुन्धन्तु। स्वैरं भवन्तो मम नामोपयोगं कुर्वन्तु। एवमेव च मया कृतम्। श्रुत्वैव यन्मीरसाहिबेनाहं प्रेषित इति सोत्साहं ते ममागमनमभ्यनन्दन् सर्वविधसाहाय्यं च प्रत्यशृण्वन्। एतेन सर्वेण मयाऽनुभूतं यत्परधर्मावलम्बिनः कदाचिद् यथा संस्कृतस्योपकुर्वन्ति न तथा स्वधर्मावलम्बिनः। अत्र राधारमणमहोदया उदाहरणम्। आर्थिकसाहाय्यं प्रार्थितास्ते मामेकदाऽवोचन्–कोऽद्यत्वे संस्कृतमवबुध्यते। कोऽर्थस्तदर्थं भूयोऽर्थव्ययेन। प्रतिवर्षद्वयं यदि कार्यक्रमाः समायोज्येरंस्तर्हि समुचिततरं स्यात्। नेत्येवेति तानहमभाणिषम्। एकवर्षान्तरालेन कार्यक्रम–समायोज्य– मानतया कियान् भवतां कमलोदयः स्यात्? एवं प्रबोधिता अपि ते मन्मतं नाभ्युपागुर्विचार्य कथयिष्यामीत्येव चाहुः। तदा ममोदिता बुद्धिः क्वैत

---

६० समो गम्यृच्छिभ्याम् (१.३.२९) इत्यनेनात्मनेपदम्। संगतोऽभूवमित्यर्थः।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

आर्यधर्मावलम्बिनः क्व च यवनधर्मावलम्बिनो मीर मुश्ताकमहाभागाः, संस्कृत-संस्कृत्यनभिज्ञा अपि तत्रापरिमितमनुरागं बिभ्रतः।

## ६३

संस्कृतनाट्योत्सवप्रसंगे किञ्चिदन्यदप्यत्रोपन्यस्तुमिच्छामि। १६७८ वर्षे शर्मण्यदेशीयस्य महापण्डितस्य मैक्समूलरस्य यो मोक्षमूलरभट्ट इति संस्कृतरूपतामापादितेन स्वनाम्नाऽऽत्मानं व्यपदिदेश ऋग्वेदादिग्रन्थपूगं च यः प्रतिसञ्चस्कार यश्च ऑक्सफोर्डनगरं गोतीर्थाभिधाननगरमिति संस्कृतनाम्ना व्याजहार–जन्मनोऽध्यर्थशती (१५०) पूर्तिवर्षमासीत्। तदुपलक्ष्य दिल्लीस्थया मैक्समूलरभवन इत्याख्यया संस्थया भारतस्थितशर्मण्यदेशदूतावास-सांस्कृतिककेन्द्ररूपिण्याऽन्ताराष्ट्रियं भारतीयविद्यासम्मेलनमासीदायोजितं यत्रोपस्थातुमायञ्शर्मण्यदेशाद् अलेग्ज़ेण्डर फ़ान हुम्बोल्ट विश्वविद्यालीयभारतीय-विद्यासंस्थानस्य बर्लिननगरस्थस्य निदेशका मम पूर्वपरिचिता विद्वच्छिरोमणयो वोल्फ़गांग मार्गनराथमहाभागाः पुण्यपत्तनाच्च भारतीयविद्याविशेषज्ञेषु मूर्धाभिषिक्ता रामचन्द्र नारायणदाण्डेकरमहाभागाः। अस्माभिः प्रतिवर्षं संस्कृतनाट्योत्सव आयोज्यत एव। कुतो न तस्मिन् वर्षेऽयं मोक्षमूलराध्यर्धशतवर्षजयन्तीरूपेणायोज्येत मैक्समूलरभवनायोजितोत्सवान्तिमदिवसाव्यवहितानन्तरमेवेति स्फुरितं मे मनसि, तेन ये विद्वांसस्तन्निमित्तेन दिल्ल्यामुपस्थिताः स्युस्तेऽस्मन्नाट्योत्सवेऽपि समुपस्थातुं शक्नुयुः। तथैव मया प्रवृत्तम्। नाट्योत्सवोद्घाटनार्थं निमन्त्रिता मुख्यकार्य-कारिपार्षदाः श्रीराधारमणमहाभागा मुख्यातिथिरूपेण चोपस्थातुं निमन्त्रिता आचार्य-मार्गनराथमहाभागा डा. दाण्डेकरमहाभागाश्च। नाट्योत्सवायोजनस्थल-मासीत्प्रतिवर्षवद् दिल्लीविश्वविद्यालयकलासंकायभवनस्थं दीक्षान्तप्रेक्षागृहम् (कान्वोकेशन हाल) यच्च सहस्रं जनानामुपवेशनस्थाने सत्यपि तथा जनाकीर्णमासीद्यद् बहूनां प्रेक्षकाणां कृत उपवेष्टुं स्थानमेव नासीत् (प्रतिवर्षमेता-दृश्येवोपस्थितिरभूत्, या संस्कृतं मृतभाषा, लोकस्यैनां प्रत्युपेक्षाभाव इति वदतां कृपणानां[६१] मुखभङ्गायालमभूत्)। ते प्रेक्षागृहपृष्ठभागे स्थिता नाट्योत्सवरस-मास्वादयाञ्चक्रिरे। तस्मिन्नवसरे मुख्यातिथिभ्यः मार्गनराथमहाभागेभ्यः स्वागतं मया पद्यैर्व्याहृतम् आसीत्। तानि च पद्यान्यासन्–

योरूपभूमाविटलीतिनामा
ख्यातिं गतो देशविशेष एकः।

---

६१ कृपापात्राणाम्। दुहिता कृपणं परमितिवत्प्रयोगः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

गतोऽहमासं गतवर्ष एव
तत्र स्वराष्ट्रप्रहितः सुखेन।।१।।

ट्यूरीनपुर्यां खलु तत्र देशे
दिग्भ्यो विदिग्भ्यः समुपागतानाम्।
बभूव सप्ताहमतीव रम्यं
सम्मेलनं संस्कृतपण्डितानाम्।।२।।

उपस्थितोऽत्रान्यतमोऽयमेषु
ख्यातिं गतो मार्गनराथनामा।
शास्त्रेष्वधीती निपुणप्रतीति–
र्विपश्चितां प्राग्रहरस्तदाऽऽसीत्।।३।।

श्रीबापनाम्ना पिशलेन चापि
विदां वरेण्येन च वेबरेण।
आचार्यपीठं जगति प्रसिद्ध–
मध्यासितं विज्ञवरैर्यदास्त।।४।।

तदेव विद्वानधुनैष सौम्यो
ऽध्यास्तेऽतिसूक्ष्मेक्षिकयोपपन्नः।
विद्वद्वराणां धुरि कीर्तनीयः
कीर्तिं गतश्चापि परां जगत्याम्।।५।।

ट्यूरीनपुर्यां प्रथमं बभूव
विपश्चितैनेन मदीयसंगः।
आभाषणं चापि बभूव तत्र
क्षणान् प्रगाढं कतिचिन्मनोज्ञम्।।६।।

सम्बन्धमाभाषणपूर्वमाहु–
रित्येतदाख्यत् कविकालिदासः।
वचो यथार्थं सुतरां तदस्ति
क्रान्तं कवेर्दर्शनमत्र भाति।।७।।

सम्बन्ध आभाषणपूर्वकोऽभूद्
विपश्चितैनेन ममापि तत्र।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

सम्बन्धबन्धे सति च प्रजातं
मैत्र्यं मनोमोदकरं प्रकामम्।।८।।

मैत्र्येण तेनैव हृदि स्थितेन
मुख्यातिथित्वाय निमन्त्रणं स्वम्।
प्रादामहं विज्ञवराय चास्मा–
ययं च तत्सत्वरमभ्युपागात्।।६।।

सोऽयं सुधीवर्य उपस्थितोऽस्मा–
स्वद्येति सत्यं कृतिनो वयं स्मः।
सत्संगतिः पुण्यवशेन जाता
कृतार्थतां निश्चितमादधाति।।१०।।

मार्गनराथस्वागतानन्तरमन्येभ्योऽतिथिभ्योऽपि स्वागतं मया व्याहृतम्। पद्यप्रस्तुत्यनन्तरं किञ्चिन्मया गद्येनापि व्याहृतम् यत्र विभागेतिहासोऽपि यतः कुतोऽपि सूचनामुपलभ्य समासेन वर्णितः। १६७६ वर्षे यदा पुनर्नाट्योत्सवः समायोजितस्तदाप्यतिथिभ्यः स्वागतं मया पद्यैरेव व्याहृतम्–

समेभ्योऽत्रभवद्भ्योऽत्र सादरं प्रणताञ्जलिः।
नाट्योत्सवे सुरम्येऽद्य स्वागतं व्याहराम्यहम्।।१।।

उत्सवोद्घाटनार्थाय स्वीकृत्य प्रार्थनां हि नः।
रवीन्द्राख्या विदां वर्या अस्मास्वद्य समागताः।।२।।

सम्प्रति किञ्चिदुच्यते
वचनं सुधियो विभावयन्तु तदु।
आयोज्यते त्रिदिवसो
ऽस्माभिर्नाट्योत्सवो ह्येषः।।३।।

त्रिष्वहःसु प्रयोक्ष्यन्ते रूपकाणि नवात्र वै।
तानि सन्तो निरीक्षन्तां सदसद्व्यक्तिहेतवः।।४।।

अभिनेत्र्योऽभिनेतारः सर्वेऽस्मच्छात्रका इह।
कुशीलवकलायां हि न तेषां कौशलं भवेत्।।५।।

तथाऽपि कृतयत्नास्ते स्वं प्रयत्नं भवत्पुरः।
समुपस्थापयिष्यन्ते भवन्मोदो भवेद्यतः।।६।।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

इत्याशंसन् बुधा नात्र विषये बहु वच्म्यहम्।
सर्वेभ्योऽपि भवद्भ्योऽत्र स्वागतं व्याहरामि च।।७।।

आङ्ग्ल्या वाचाऽधुना विज्ञा वचोऽहं स्वं प्रवर्तये।
मुख्यातिथीनामन्येषां सौकर्यं परिलक्षयन्।।८।।

कविराजशेखरवच उद्धृत्याहं समापये स्ववचः।
उक्तिविशेषः काव्यं भाषा या भवति सा भवतु।।९।।

## ६४

स्वकीय उद्घाटनभाषणे श्रीराधारमणमहाभागैर्यदुक्तं तस्मेराननान् व्यदधात्सर्वानपि। तेऽब्रुवन् – यदा मैक्समूलरो भारतमागतस्तदा तेनावलोकितं यदत्र बहवो जनाः संस्कृतं शीलयन्ति। तदा तेन चिन्तितं कुतो नाहमपि संस्कृतं शिक्षेयेति। तद्विचिन्त्य तेन संस्कृतं शिक्षितं प्रावीण्यं च तत्र तादृशमधिगतं यत्सर्वानपि विस्मापयति। विचित्रा हि राजनीतिज्ञाः। कोऽपि भारतमनागत्य संस्कृतं शिक्षितुं न प्रभवति प्रावीण्यं च तत्रासादयितुमसाधारणमिति मैक्समूलरेण भारत आगतं स्यादेव कस्माच्चनात्रत्याद् विदुषः संस्कृतं शिक्षितं स्यादेवेति सर्वं तेन स्वयमेव कल्पितम्। यत्कल्पितं तच्छ्रोतृणां पुरतो महता संरम्भेणोपस्थापितम्, नैव विजानता यत् सन्ति तेषु तादृशा ये जानन्ति यन्मैक्समूलरः कदापि भारतं नागतवानिति। इंग्लैण्डदेशे कृतवसतिरसौ शर्मण्यदेशाभिजन ऋषिकल्पः पूर्वजन्मसंस्कारोद्बुद्धया बुद्ध्या संस्कृतमिंग्लैण्डदेश एव शिक्षित्वा तदभ्यस्यदार्षेण चक्षुषा च तद्वाङ्मयरहस्यमचकलत्। सेक्रिड बुक्स ऑफ दि ईस्ट इति नाम्ना ग्रन्थमालाप्रकाशनं तेन प्रारब्धम्। प्रथमं तस्य क्रिस्तुधर्मप्रचारार्थं संस्कृतग्रन्थ–परिशीलनेन भारतीयानां धर्मसिद्धान्तैरात्मानं परिचाययितुं तत्र च दोषानुद्भावयितुं संस्कृतभाषाध्ययने तद्वाङ्मयपरिशीलने च प्रवृत्तिरिति पुराविदः। परं गच्छता कालेन यथा यथाऽसौ सांस्कृतं वाङ्मयं पर्यशीलयत्तथा तथाऽसौ तस्य सौन्दर्येण गाम्भीर्येण सारवत्तया च तथा प्रभावितोऽभूद्यत् तस्य भूरि भूरि प्रशंसकोऽभूत्। भारतीयनागरिकसेवार्थं (आई. सी. एस.) ये इंग्लेण्डदेशीया ब्रिटिशशासनेन भारते प्रेषितुमभिप्रैयन्त तान् भारतीयधर्मसंस्कृतिजीवनपद्धत्यादिना परिचाययितुं भारतीयविद्याविशारद इति स न्ययुज्यत। तान्स सर्वमशिक्षयत् तैर्भारते शासकैर्भूत्वा गन्तव्यमिति। ये नाम शासनीयास्तेषां विषये तैर्ज्ञातव्यमेव, अन्यथा कथं ते शासितुं प्रभवेयुः। तान् शिक्षयितुं नाना व्याख्यानानि तेन प्रस्तुतानि। तत्र भारते

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

यदुत्कृष्टं तत्तेन महता कण्ठेनोद्घोषितम्। तानि व्याख्यानानि कालान्तरे भारतं–किमिदमस्माञ् शिक्षयितुं शक्नोति (इण्डिया ह्वट इट कैन टीच अस) इति नाम्ना पुस्तकरूपेण प्रकाशितानि। यत्र भारतं यद्यच्च भारतीयं तत्प्रति तस्यादरातिरेको भवत्यभिव्यक्तः। सोऽयमादरातिरेकः कालेन चरमसीमानमधिरूढः। भारतीयानामपि स्वकीये वाङ्मये वा स्वसंस्कृतौ वा तादृश आदरः कदाचिद् न भवेद्यादृशस्तस्याभूत्। सर्वं जीवनमेव स भारतीयवाङ्मयपरिशीलन एव व्यापीपरत्, नानाग्रन्थान् नैकमातृकासाहाय्येन समपीपदत्, तान् व्याख्यन्तन्मर्म चोदजीघटत्। विशेषतो वैदिके वाङ्मये तस्य श्रमः प्रावृतत्। ऋग्वेदसंहिता, यथोक्तं पुरस्तात्, तेन प्रतिसंस्कृता। तस्यैव संस्करणमस्या इदम्प्रथमम्, यद्वशात्तस्याक्षय्या कीर्तिर्लोके प्रसरति प्रसरिष्यति च यावच्चन्द्रदिवाकरौ।

## ६५

संस्कृतनाट्यप्रस्तुतिविषये पद्धतिरेकास्माभिराश्रीयत। नाट्यप्रयोगात्पूर्वं प्रयोज्यमानस्य रूपकस्य कथावस्तु संक्षेपेणाङ्ग्लभाषया प्रास्तूयत येन तत्कथावस्त्वनभिज्ञास्तज्जानीयुः रूपकप्रयोगं च बाढतरमास्वादयितुं शक्नुयुः। उभयविधानामपि रूपकाणां प्रत्नानां च नूत्नानां च विषये समानैवासीदियं पद्धतिः। प्रायशः प्रतिदिनं त्रिचतुराणि रूपकाणि प्रयोगेणान्वष्ठीयन्त, न तु सम्पूर्णानि, तत्तः केचनाङ्का एव, केचनांशा एव वा समयस्याल्पत्वात्। यद्यपि एकोऽक एको वांशः प्रयोगेणोपस्थापयितव्य आसीत् तथापि रूपकस्य सम्पूर्णं कथावस्तु प्रास्तूयत दर्शकानां पूर्वापरसमन्वयेन कथावस्तुनस्तदंकीयस्य वा तदंशीयस्य वा सम्यगवबोधार्थम्। यस्मिन्दिने मैक्समूलरजयन्तीनाटकोत्सव आसीत्तस्मिन् प्रथममभिज्ञानशाकुन्तलचतुर्थांकः प्रयोज्य आसीत्। स्वीकृतपद्धत्यनुसारेण विभागीया कन्यकैका तत्कथावस्त्वाङ्ग्लभाषया प्रस्तोतुं प्रारब्ध[६२]। तां पत्रतः तत्र निर्दिष्टं कथावस्तु वाचयन्तीमालक्ष्य मार्गनराथमहाभागा मामपृच्छन् किमियं करोतीति। मयोक्तम् अभिज्ञानशाकुन्तलकथावस्तु प्रस्तौतीयमिति। तत्किमिति इति ते पुनरप्राक्षुः। मयोक्तम् – प्रेक्षकेषु यदि केचन तदनभिज्ञाः स्युस्तेऽपि तज्जानीयुरिति। तदा विलक्षै[६३]रिव तैरुक्तम् – सन्ति केचन भारतेऽपि तादृशा येऽभिज्ञानशाकुन्तल-कथावस्तु न जानन्ति! व्रीडावनम्रेण मया न किञ्चिदुक्तम्, नैभृत्य[६४]मेव

---

६२ रभेर्लुङि रूपम्।

६३ व्याकुलैरित्यर्थः।

६४ तूष्णीम्भाव इत्यर्थः।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

[illegible]न्वितम्। कथमहं तान् कथयितुमशक्ष्यं यत्सन्त्येव तादृशा अस्मद्देशे, नाल्पसंख्याका अपितु बहुसंख्याका येषामस्मत्प्राचीनवाङ्मयपरिचयगन्धोऽपि नास्ति, ये जन्मनैव भारतीया मनसा वाचा कर्मणा च वैदेशिका एव। वयं तादृशीं करुणां दशामापन्ना यद् वैदेशिका अप्यस्मानधिक्षिपन्ति। अस्मासु यावान् ज्ञाननिधिस्तस्य सहस्रांशोऽपि वैदेशिकेषु न भवेत्। अस्मासु बहवोऽस्मास्वयं निधिरस्त्येवेति न विद्युः। निधेरुपयोगस्य तु कथैवास्ताम्। परिवर्ती कालः। तेनैव वयमीदृशीं दशां गमिताः। यत्र पूर्वे ऋषयः स्वकीयया ऋतम्भरया प्रज्ञया अतीन्द्रियानसंवेद्यानपि भावान् साक्षाच्चक्रुस्तत्र परमुखापेक्षिणो वयं परप्रत्यय–नेयबुद्धयः संवृत्ताः। अहो! अकरुणाः खल्वीश्वराः।

## ६६

संस्कृतनाट्यप्रयोगवृत्तं वृत्तपत्रेषु भूयः प्राकाश्यमलभत यत्सामान्यजनानामपि संस्कृतनाट्यप्रयोगदर्शने प्ररोचकम् अभूत्। तदा वृत्तपत्रेषु प्रकाशितस्य वृत्तजातस्य प्रतिलिपयोऽधस्तात्प्रस्तूयन्ते येन ज्ञातुं शक्यते कथं संस्कृतनाट्योत्सवप्रचारस्तदा प्रावृतदिति यद्वशाच्च नाना जनाः संस्तुता वाऽसंस्तुता वा मामनेकधाप्राक्षुः कदा पुनर्नाट्यप्रयोगः सम्भाव्यत इति।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

## ६७

कविसम्मेलनविषये वक्तव्यशेष इति किञ्चिदत्र विवक्षामि। पूर्वक्षुण्णं पन्थानं विहाय नूत्नस्य पथः समाश्रयणे मे सहजा प्रवृत्तिः। अत एव सदा किञ्चिन्नूतनं कर्तुमिच्छामि। संस्कृतकविसम्मेलनं तु बहुशो भवत्येव, किमिति न कवयित्रीसम्मेलनं क्रियेत यत्र कवयित्र्य एव कवितापाठं कुर्युः, इति कदाचिदुदितो मे मनसि विचारः। सोऽयं विचारो मया मण्डनमिश्रमहाभागेषु प्रकटितः। प्रथमं ते तूष्णीमेव स्थिताः। कथमत्र ते पश्यन्तीति पुनः पृष्टाः किञ्चित्संकोचेन किञ्चिदुत्प्रासेन चोक्तवन्तः – डाक्टरमहोदयाः! प्रयोगोऽयं विफलो (फ्लाप इति शब्दस्तैः प्रयुक्तः) भविष्यति। तच्छ्रुत्वा म्लानमिव मे वदनमभूत्। परं प्रकृत्यैव नाहं स्वनिश्चयात् परावर्तयितुं शक्यः। मद्विषये – क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेदि[६५]ति महाकविकालिदासवचश्चरितार्थतां भजते। एतदालक्ष्यैवैकदा मम शिष्यचरेण सूबेसिंह राणा इत्यनेन सभायामेकस्यामशिष्टभाषया दुराग्रहिण (ढीठ इति हिन्दीभाषाशब्दस्तेन प्रयुक्तः) एत इत्युक्तम्। यथा वा तथा वाऽस्तु। अहमायोजयिष्याम्येव कवयित्रीसम्मेलनमिति मया मनोऽबन्धि। समायोजितं तत्सम्मेलनं नवदिल्लीस्थकान्स्टिच्यूशनक्लब इति नाम्ना प्रसिद्धस्य भवनस्य लोकसभोपाध्यक्षकक्षे। देशस्य विभिन्नभागेभ्यो डा. रमा चौधरी, डा. वेदकुमारी घई– डा. पुष्पादीक्षित – डा. जगतावलीसूद प्रभृतयः संस्कृतकवयित्र्यः समाहूताः। अपराह्णे त्रिवादने प्रारब्धमिदं कवयित्रीसम्मेलनं सायाह्ने षड्वादनं यावत्प्रावर्तिष्ट श्रोतारश्च मन्त्रमुग्धाः कवयित्रीणां काव्यपाठमश्रौषुः। रफीमार्गस्थकान्स्टि–च्यूशनक्लबमध्यवर्ती लोकसभोपाध्यक्षकक्षस्तथा जनाकीर्ण आसीत् यद् बहुभिरुपवेष्टुं स्थानमेव नालभ्यत। बहवोऽनुपविष्टा एव काव्यरसमास्वाद याञ्चक्रिरे। असफलमिदं सम्मेलनं भविष्यतीति डा. मण्डनमिश्रेण यत् स्वकीयं मतमाविष्कृतमासीत्तत्सर्वथा विफलतामुपगतम्। एवं बहुधाऽहं साहसमारोहामि। अनारुह्य साहसं न नरो भद्राणि पश्यतीत्यत्र दृढं विश्वसिमि। इदं मतिदार्ढ्यं मे केचिद् दोषत्वेनोपकल्पयन्ति। तथोपकल्पयन्तु ते नाम। कस्कः कुत्र कुत्र दोषमुद्भावयतीति न मे चिन्ताविषयः। यदहं साधु पश्यामि तत्कर्तुं प्रवृत्तिमान् भवामि, नीतिनिपुणास्तन्निन्दन्तु वा स्तुवन्तु वा। तन्मेऽकिञ्चित्करम्। अनेन साहसेनैव यदापाततो दुःसाध्यं प्रत्यभात् तन्मया सुसाधतामापादितम्।

एवं विभागे नवनवोन्मेषशालीनि कार्याणि सम्पादयता मया कालो यापितः। होरात्रयं कवितापाठः प्राचलत्। तादृशं सफलं सम्मेलनं न कदाऽप्यभूदायतावपि कदाचिद् भवेद् वा न वा। एवं बहु कार्यं मया तदानीं कृतम्।

---

६५ कुमारसम्भवम्, ५.५


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

# ६८

यदन्यत्कृतं तदप्यत्र विवर्णयिषामि। अस्मद्देशेऽनेका संस्कृतपत्रिकाः प्रकाश्यन्ते। तासु कथा–कविता–रूपकादिसहकारेण समीक्षात्मकनिबन्धा अपि भवन्ति। तेषु भवेयुर्नाम केचिदुत्कृष्टतमा अपि। तेषां सूच्येका करणीया येन ज्ञायेत के के विषया विद्वद्भिर्विमर्शपदवीमापादिताः कथं च। संस्कृतमाध्यमेन तैः प्रवृत्तमिति न तन्महत्त्वं ह्रसयति। आङ्ग्लभाषायां सन्ति नैकाः पत्रिका यासु गवेषणापरा लेखा एव भवन्ति प्रकाशिताः। ताश्शोधपत्रिका इत्यभिधयाऽभिज्ञायन्ते। संस्कृते तु केवलं गवेषणापरकनिबन्धप्रकाशिकाः पत्रिकाः प्रायशो न सन्त्येव। सामान्यपत्रिकासु यथोक्तमुपरिष्टात्, कथा–कविता–रूपकादिसहकारेण, गवेषणापरा निबन्धा अपि प्रकाशिता भवन्ति। विभागाध्यक्षपदमारूढेन मया संस्कृतपत्रिकासु प्रकाशितगवेषणात्मकनिबन्धसूचीकरणरूपं स्वचिन्तनं कार्यरूपतामापादयितव्यमिति कृतो निश्चयः। नहि सर्वा अपि संस्कृतपत्रिकाः क्वचिदेकत्र सुलभाः। यस्मात्स्थानात्ताः प्रकाश्यन्ते तत्रैव ताः सुलभाः। तासां विगता अङ्कास्तु तत्रापि कदाचिन्न सुलभा भवन्ति यदि यातानि स्युर्नाना वर्षाणि पत्रिकाणां प्रकाश्यमानानां विशेषतो यदि ता मासे मासे प्रकाश्यन्ते। संहत्य तासां प्रतिवर्षं द्वादशांका भवन्ति। यदि विंशतिवर्षपूर्वतस्त्रिंशद्वर्षपूर्वतो वा पत्रिका प्रकाश्यमाना भवति तर्हि चत्वारिंशदुत्तरद्विशतसंख्या षष्ट्युत्तरत्रिशतसंख्या वा प्रकाशितानां तदङ्कानां भवेत्। तेषां संरक्षणं क्रमशो व्यवस्थापनं च न सुकरं भवति पत्रिकाप्रवर्तकानां कृते, ये सम्पादका अपि भवन्ति तेषामपि च कृते। स्थानाभावश्च कीटाद्यनुवेध–परिहारश्च तेषां कृते महांश्चिन्ताविषयो भवति। यद्येकैकोङ्कः कथञ्चित्संरक्ष्येतापि, अतिरिक्तानामंकानां संरक्षणं सम्यग्व्यवस्थापनं चाति दुष्करं भवति। यस्मात्स्थानात् पत्रिकाः प्रकाश्यन्ते तत्र गत्वैव तासामचिरप्रकाशिताश्चिरप्रकाशिताश्चांका द्रष्टुं परामृष्टुं वा शक्याः स्युरिति धिया कश्चिदपरिणतवयास्तत्स्थानान्युपेत्य गवेषणापराँल्लेखामन्वेषमन्वेषं[६६] तत्सूचीं निबध्नात्विति मया चिन्तितम्। अपेक्षितसाधनानामभावेऽपि कार्यमिदं साधनीयमेवेति संकल्पो मां कर्मण्येतस्मिन्प्रावर्तयत्। अन्विष्टश्च तदर्थं सत्यनारायणनामा विभागीयश्शोधच्छात्रः। यद्यपि नाहं महत्स्वात्मानं गणयामि 'क्रियासिद्धिः सत्त्वे भवति नोपकरणे' इति प्राचीनोक्तिमनुस्मरन् यथाकथञ्चित्तत्कृते मार्गव्ययव्यवस्थां वासगृहव्ययव्यवस्थां चाकार्षम्। तेन तृतीयश्रेण्यां रेलयानेन गन्तव्यं भवति स्माल्पभाटकेषु वासगृहेषु च वासः कल्पयितव्यो भवति स्म। सर्वथा क्रियासिद्ध्येकदृशा तेन महता परिश्रमेण

---

६६ आभीक्ष्ण्ये णमुल् च (३.४.२२) इत्यनेन णमुल्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

नाना स्थानानि गमिकर्मीकृत्य परश्शताश्च पत्रिका आलोक्य तत्र चिराचिरप्रकाशितेष्वनेकेष्वंकेषु प्रकाशितानां गवेषणापराणां निबन्धानां विवरणात्मकः [यत्र निबन्धशीर्षकस्य च यस्मिन् वर्षे च स प्रकाशितस्तदुल्लेखः] परिचयोऽभूत्। दौर्भाग्यात्स परिचयस्तेन कुत्रापि पञ्जिकायां वा पुस्तिकायां वा न स्थापितः। प्रतिनिबन्धं कृते चिटिकाः[६७] कृताः। परशताश्च चिटिकाः सूत्रबद्धाः कृत्वा मह्यमर्पिताः, मया च ता विभागीयायामल्मारिकायां स्थापिता लम्बपत्रे[६८]ष्वारोप्य तत्सामग्रीं प्रकाशकाय प्रकाशनार्थं दास्यामीति धिया। यावत्कालपर्यन्तमहमध्य-क्षपदमध्यतिष्ठं तावत्कालपर्यन्तमल्मारिकायामासंस्ताः सुरक्षिताः। सम्प्रति ताः क्व सन्तीति न कोऽपि वेद। ममैवायं प्रकल्प इति ममैवासीद्रुचिस्तत्र। मय्यपगते को नाम तत्र रुचिमादधीत। १९७७ वर्षात्प्रभृति ममावकाशग्रहणपर्यन्तं वर्षद्वयान्तरालादृते स्वदेशाद् बहिरेवाहमासम्। अत्र कस्कः[६९] किं करोतीतिज्ञानात्यन्ताभावपरीतचेताः अहमभूवम्। बृहतीयं मदीययोजना सम्पन्नतां गताऽप्यसम्पन्नतां गमिता सर्वङ्कषया भगवत्या भवितव्यतयेति सुतरां दुःखाकरोति मे चेतः। संकलितया सामग्र्या यदुपकर्तव्यमासीदनुसन्धित्सूनां तन्न जातमिति शूलमिव विध्यति मे चेतः। अस्तु। यन्न भावि न तद् भावीति सत्योद्या[७०] प्राचां गीः।

## ६६

एम्. ए. उत्तरार्धे कस्मिंश्चिच्छास्त्रविशेषे विशिष्टयोग्यतोपार्जनमावश्यकं भवति। तत्रास्ति शास्त्रविशेषनिर्देशः। तेष्वेव शास्त्रेषु विशिष्टयोग्यता सम्पादनीया भवति। तेषु शास्त्रेषु तदाऽऽसन् वेदशास्त्रं, धर्मशास्त्रं, व्याकरणशास्त्रं, साहित्यशास्त्रं, दर्शनशास्त्रं चेति। ममाध्यक्षपदारोहणाव्यवहितानन्तरमभिलेखशास्त्रस्यापि तेषु शास्त्रेषु समावेशः कृतः। साधुरामनामासीत्तदानीं किरोड़ीमलकालेज-संस्कृतप्राध्यापको योऽभूदत्र शास्त्रे कृतश्रमः। स इदं शास्त्रमध्यजीगपत्। मयाऽपि एम्. ए. कक्षायां विशेषशास्त्राध्ययनदृष्ट्येदं शास्त्रमधीतमासीदेव। मदीया अध्यापकास्तदानीमासन्नेतच्छास्त्रविशेषज्ञत्वेन ख्यातिं गताः श्रीजगन्नाथाग्रवालाः।

---

६७ स्लिप इति आङ्ग्लभाषायाम्।
६८ फुलस्केप इत्याङ्ग्लभाषायाम्।
६९ कस्कादिषु च (८.३.४८) इत्यनेन विसर्जनीयस्य सकारः।
७० वदः सुपि क्यप् च (३.१.१०६) इत्यनेन क्यपि सम्प्रसारणे च रूपम्। सत्यवदन (रूपा) इत्यर्थः


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कतिपयवर्षानन्तरं प्राकृतं जैनशास्त्रं चेति विषयोऽपि शास्त्रेष्वेतेष्वन्तर्भावितः। सामान्यतया छात्राणामत्र प्रवृत्तिर्न स्यादित्यतस्तत्प्ररोचनार्थं छात्रवृत्तिकल्पना-यायपि[७१] प्रेरिताः केचन जैनधर्मप्रचारोत्सुका जैनधर्मावलम्बिन आढ्यजनाः। मत्प्रेरणया प्रकल्पितास्तैस्त्रिचतुराश्छात्रवृत्तयोऽपि। कालेन नाना छात्राश्शास्त्र-मिदमधिजगिरे प्रावीण्यं चात्र लेभिरे। तेषु मोहनचन्द्रादयः केचन सम्प्रति शास्त्रमिदमध्यापयन्त्यपि। नाना छात्रैरत्र शोधकार्यमपि प्रवर्तितं पीएच्. डी. इत्युपाधिश्चाधिगतः।

कतिपयवर्षपूर्वं मम प्राक्तनच्छात्रस्य परस्ताच्च विभागाध्यक्षपदमप्यधिरूढस्य डाः देवेन्द्रमिश्रस्य प्रयासेन ज्योतिषशास्त्रस्यापि विशिष्टयोग्यतापादनीयतया निर्धारितेषु विषयेषु जातोऽन्तर्भावः। तस्य विभागाध्यक्षत्वकाले तत्प्रभाववशाच्छा-स्त्रान्तराध्येतॄणामपेक्षया ज्योतिषशास्त्राध्येतॄणामेव संख्याऽधिक्यभमजत।

डा. नरेन्द्रनाथचतुर्धुरीणमहाभागस्याध्यक्ष्यकाले व्याकरणाध्येतॄणामेव संख्या बहुलाऽऽसीत्। यद्यपि सोऽभूत् काव्यशास्त्रे कृतभूरिपरिश्रमस्तथापि तस्य व्याकरणं प्रति विशिष्ट आग्रहोऽभूत्, येन व्याकरणमध्येतुं तत्र च विशिष्टां योग्यतां सम्पादयितुं स विद्यार्थिनः प्राचूचुदत्। मदीयाध्यक्ष्यकालेऽपि व्याकरणाध्येतॄणामेव संख्याबाहुल्यमासीत्। मदीयाध्यापनपद्धत्येव तादृश्यासीद्यया कष्टं व्याकरणमि[७२]ति प्राक्कालादेवानुप्राप्तो लोकप्रवादो मिथ्यात्वमापद्यत। अतिसरलतया सरसतया चेदमध्यापितं मया यस्या[७३]द्यापि स्मरन्ति मच्छात्राः। वस्तुतः विषयस्य क्लिष्टता वा सरलता वा बहुशोऽध्यापकेऽधि[७४]। क्लिष्टात्क्लिष्टतरोऽपि विषयोऽक्लिष्टता-मापादयितुं शक्योऽध्यापकेन।

## ७०

ममाध्यक्ष्यकाले नासीद्विभागे कश्चन ज्योतिषशास्त्रविशेषज्ञः। तदैव श्रीलालबहादुर-शास्त्रीराष्ट्रियसंस्कृतविद्यापीठे ज्योतिषशास्त्राध्यापकेन श्रीशुकदेवचतुर्वेदिना ज्योतिषशास्त्रे पीएच्. डी. उपाध्यर्थं शोधकार्यं प्रवर्तयितुं प्रकटितोऽभिलाषः। को

---

७१ कल्पनायै अपि इतिच्छेदः

७२ कृच्छ्रगहनयोः कषः (७.२.२२) इति सूत्रव्याख्यायां काशिकागतमुदाहरणम्।

७३ अधीगर्थदयेशां कर्मणि (२.३.५२) इत्यनेन षष्ठी।

७४ अधिरीश्वरे (१.४.६७) इत्यनेन कर्मप्रवचनीयसञ्ज्ञायां यस्मादधिकं यस्य चेश्वरवचनम् (२.३.९) इत्यनेन सप्तमी।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

नाम तस्य शोधनिर्देशको भवेदिति समुपस्थितः प्रश्नः। विभागाध्यक्षोऽहमिति मयकैव कार्यमिदं निर्वोढव्यं ज्योतिषशास्त्रगन्धिज्ञानवतेति कृतो निर्णयो विभागीयपाठ्यसमित्याऽपि मानवविद्यानुसन्धानसमित्याऽपि च। कालान्तरे प्रवयोभिर्गोस्वामिगिरिधारिलालैरपि हिन्दूकालेजतः स्नातकोत्तरकक्षाऽध्ययनं परिसमाप्य एम्. ए. उपाधिं च लब्ध्वा ज्योतिषशास्त्र एव पीएच्. डी. उपाध्यर्थं शोधप्रबन्धप्रणयनार्थमाविष्कृतः स्वोऽभिप्रायः। तदा स एव शुकदेवचतुर्वेदी ज्योतिषविषये लब्धपीएच्.डी.उपाधिक इति तच्छोधकार्यनिर्देशको भवेदित्यनुशंसितं विभागीयपाठ्यसमित्या। तदा शोधसमित्या (रिसर्च बोर्ड इत्याख्यया) सोऽन्यसंस्थाकार्यरत इति तत्सहचरितत्वेन विश्वविद्यालयीयेन केनापि प्राध्यापकेन निर्देशकेन भाव्यमिति मतमनुसरन्त्या विभागे ज्योतिषशास्त्रविशेषज्ञा-भावात्पूर्ववदहमेव सहनिर्देशकत्वेन (को–सुपर्वाइज़र) स्थापितः। उभयोरप्यावयो–र्निर्देशने तेन शोधप्रबन्धं विरचय्य लब्धः शोधोपाधिः।

इदम्प्रथम एवायमवसर आसीद्यत्र विद्वद्वय्या ज्योतिषशास्त्रविषये गवेषणां प्रवर्त्य लब्धः पीएच्. डी. उपाधिः।

## ७१

प्रोफेसरपदनियुक्तेः पूर्वमेकतानेन मनसाऽहं स्वं ग्रन्थप्रणयने व्यापीपरमन्यसर्वविध-चिन्ताविनिर्मुक्तः। मां[७५] परितः किं भवतीति नाहमवेदिषम्। विद्याभ्यसनमेव मे व्यसनमवर्तत। यदा जोशी प्रोफेसरपदप्राप्त्यर्थमात्मानमुदयुक्त तदा ग्रन्थरचनाया–मेवात्मानमहं व्यापीपरम्। १६५६ वर्षे बृहत्तरं भारतमिति नाम प्रथमं मम शतकं प्राकाश्यमगात्, यत्र यव–बालि–कम्बुजादिदेशानामैतिह्यं मया नाना वृत्तैरुपनिबद्धम्। तत्सम्पूर्णानन्दसंस्कृतविश्वविद्यालयपत्रिकायां सारस्वती-सुषमाख्यायां प्रकाशितमभूत्। तदनु बौद्धजातकान्याश्रित्य श्रीबोधसत्त्वचरितमिति चतुर्दशसर्गात्मकं सहस्रं पद्यैरुपनिबद्धं महाकाव्यं प्रसिद्धिमगाद्यत्कालान्तरे नैकविश्वविद्यालयेषु पीएच्. डी. शोधोपाधिविषयतामप्यगात्। प्रथममिदं १६६० तमे वर्षे स्वव्ययेनैव प्रकाशितमभूत्। १६७३ तमे वर्षे हिन्द्यनुवाद–विस्तृतभूमिका– पादटिप्पण्या–दिसनाथितमिदं नवदिल्लीस्थया मेहरचन्दलछमनदास इत्याख्यया प्रकाशनसंस्थया प्रकाशितम्। नाना वर्षाणि प्रथमः सर्गोऽस्य मेरठविश्वविद्यालये बी. ए. कक्षायां पाठ्यत्वेन[७६] निर्धारितोऽभूत्। १६६३ तमे वर्षे श्रीवाल्मीकीयस्य रामायणस्य सर्वांगीणो

७५ अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि इति वार्तिकेन द्वितीया।

७६ टेक्स्ट बुक इत्याङ्गलभाषायाम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

भाषापरिच्छेदो डा. सुनीतिकुमारचाटुर्ज्याप्राक्कथनसमेतो डा. सिद्धेश्वरवर्ममूमिका-संवलितश्च प्राकाश्यं गतः। न केवलं वाल्मीकीयस्य रामायणस्यापि तु कस्यचनापि संस्कृतग्रन्थस्यायमिदम्प्रथमो भाषापरिच्छेदः। अत्र रामायणस्य चतुर्विंशतिसह-स्रपद्यानि मया भाषादृष्ट्या निपुणं विमृष्टानि। अष्ट वर्षाणि[७७] विषयेऽत्र प्रतिदिनं दशहोरामितकालं मे विमर्शः प्रावर्तत। भूयः श्रान्तमत्र मया। विद्वद्भिः सदसद्विवेक्तृभिः सुतराममिष्टुतो मेऽयं ग्रन्थः। तेन परिश्रमो मे फलेग्रहिरिति सन्तोषविशेषमनुभवामि धन्यं चात्मानं कलयामि।

## ७२

१९६७ तमे वर्षे श्रीगुरुगोविन्दसिंहचरितमिति मम खण्डकाव्यं प्राकाश्यमगात्। कथमिदं प्रणीतमिति तदैतिह्यं विवरीतुमिच्छामि। एकदाऽहं विश्वविद्यालयकार्य-वशात्कुरुक्षेत्रमुपेतः। तदा मयि बद्धस्नेहा डा. परमानन्दमहाभागाः पट्वालय (पटियाला) नगरे पञ्चनदीयभाषाविभागस्य निदेशकपदमध्यासत। पुत्र्या विवाहार्थं दिल्लीस्थेन केनचिद्यूना सह तेषां चर्चा चलति स्म। किमाचारोऽसौ किंशीलश्च किंशीलाश्च तस्य कुटुम्बिन इति ते मत्तोऽजिज्ञासन्ता[७८]हं दिल्लीमधिवसामीति कृत्वा। अहं कुरुक्षेत्रमुपैमि ततः पट्वालयनगरं नातिदूर इति तत्राप्यागन्तास्मीति ते मया सूचिताः। पूर्वाह्णे तानुपेत्यापराह्णे तानामन्त्र्य दिल्लीं प्रति प्रस्थातुमासीन् ममाभिलाषः। यदाऽहं तैः समगंसि तदा तैरुक्तं दिनमेतदस्मास्वेव यापयतु भवान् परस्मिन् दिने च दिल्लीं प्रतिनिवर्तताम्। मयाऽपि तेषां प्रथमः प्रणय इति तदङ्गीकृतम्। मध्याह्ने पर्यवसितायां सग्धौ च सपीतौ च मयोक्तम् – प्रथमवारमहं पट्वालयमागतोऽस्मि। नेदं पुरं मया दृष्टपूर्वम्। एतद्विषये श्रुतं तु मया बहु। नाना स्थानानि सन्त्यत्र दर्शनीयानि बारादरीत्येकं, नवनिर्मितं चलचित्रगृहमित्यपरं, कालीमन्दिरमितीतरदिति तानि सर्वाण्यहं दिदृक्षे[७९]। तैरुक्तमुदारः कल्पः। तैः स्वतनय उक्तो दर्शयेमं तानि स्थानानीति। तस्मिन्मोटरसाइकलयानमासीत्तत्पृष्ठ-भागेऽहमुपविष्टः। अग्रिमे भाग उपविष्टस्स तदचालयत्। तत्तद्दर्शनीयस्थान-दर्शनप्रसंगेनावां बारादरीस्थानमुपेतौ। तदा स्मृतिपथमागतं मे यत्तत्र अचिरप्रारब्धस्य

---

७७ कालाध्वनोरत्यन्तसंयोगे (२.३.५) इत्यनेन द्वितीया। निरन्तरसंयोगोऽत्यन्तसंयोगः। अविच्छेदेन अष्टवर्षाणीत्यर्थः।
७८ ज्ञाश्रुस्मृदृशां सनः (१.३.५७) इत्यनेनात्मनेपदम्।
७९ ज्ञाश्रुस्मृदृशां सनः (१.३.५७) इत्यनेनात्मनेपदम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पंजाबीविश्वविद्यालयस्य कार्यालयोऽप्यस्तीति। तदा डा. परमानन्दतनूजमहमन्वयुक्षि किमिदं सत्यमिति। स आह सत्यमेवेति। किं संनिहितोऽत्र कुलपतिः? तत्सचिवात्तज्ज्ञातुं शक्नुव इति स प्रोवाच। तत्सचिवमावामुपेतौ। संनिहितः कुलपतिरिति स उवाच। यदि तस्मिन्कालः स्यात्तर्हि तं द्रष्टुमहमिच्छामीति तमहमुक्तवान्। स्वपरिचयपत्रिका[८०] मय्यासीत्तामहं तं दर्शितवान्। तामादाय स कुलपतिकक्षं प्रविष्टो दिल्लीतः कश्चन दिल्लीविश्वविद्यालयप्राध्यापकोऽत्रभवतो द्रष्टुमीहत इति तं प्रोचे। स आह प्रवेशयेति। यदाऽहं डा. परमानन्दगृहात्प्रस्थि–तस्तदा सद्यः प्रकाशितं रामायणभाषापरिच्छेदविषयकं पुस्तकं 'दि रामायण – ए लिंग्विस्टिक स्टडी' इति नामधेयं स्वेन सहाकरवं कस्मैचन कदाचिद् तद् दर्शनीयं भवेदिति। नमस्कार–प्रतिनमस्कारानन्तरं तत्पुस्तकं मया कुलपतये दर्शितम्। कृपालसिंहनारंगनामधेयोऽसौ पुस्तकमुद्घाट्य तत्प्रारम्भ एवोपन्यस्तं डा. सुनीतिकुमारचाटुर्ज्याप्राक्कथनं पठितुमारब्धवान्। तत्र मद्विषये लिखितमासीत्तैर्यदहं परिनिष्ठितः संस्कृतकविरिति (He is a finished Sanskrit poet)। तद्वाचयित्वा शिर उन्नमय्य मयि दत्तदृष्टिः स उवाच– किं कर्मण्येकस्मिन् भवानस्मत्साहाय्यं विदध्यात्[८१]। भवदादेशं प्रतीक्ष इति तमहमुक्तवान्। स आह– आगामिनो जनवरीमासस्य (१९६७ वर्षे) सप्तदशो दिवसो गुरुगोविन्दसिंहस्य जन्मतस्त्रिशतीपूर्तिवत्सरः। तस्मिन्नवसरे वयं गुरोश्चरितं नानाभाषाभिरुप-निबन्धयितुमीहामहे। तेषु संस्कृतेनाप्युपनिबद्धं यदि तत्स्यात्तत्रापि च काव्यरूपेण तदस्माकमीप्सिततमम्। नानाभाषोपनिबद्धान् गुरुचरितग्रन्थान् वयं राष्ट्रपति डा. राधाकृष्णन् महाभागेभ्यः समर्पयितुमीहामहे। तेषु संस्कृतपद्यबद्धो गुरुचरितग्रन्थस्तेभ्यो विशेषेणाभिरोचेत। तं ग्रन्थं भवान् अस्मत्कृते निबध्नात्विति। अतर्कितोपनतं तत्प्रस्तावं श्रुत्वा महतीं चिन्तामापन्नः कांश्चित्क्षणान् तूष्णीमेवाहमस्थाम्। सिताम्बरस्य मासस्य तृतीयः सप्ताह आसीद्यदाऽहं कुलपतिमुपसन्नः। अयञ्च जनवरीमासस्य सप्तदशाद् दिवसात् पूर्वं सिद्धं ग्रन्थं द्रष्टुमिच्छति। तत्र ग्रन्थरचनाऽपि मुद्रणादिकं च सर्वं निर्वर्तनीयं भविष्यति। मासत्रयात्मकोऽल्पीयानेव मयि कालः। कथमेतावता कालेन कार्यमिदं साध्यं स्यात्? कुलपतिना महति संशये पातितोऽहम्। नाहं गुरुचरितविषये शिष्यवाङ्मयविषये वा विशेषेण किञ्चिद्वेद्मि। कथमत्र मया प्रक्रन्तव्यमिति महतीं चिन्तामहमापन्नः। तदा मम हृद्देशे स्थितो भगवान् भूतभावनो मां समबोधयत् – अयि भोः! किं चिन्तयसि? सत्संकल्पोऽयमुदितोऽस्य मनसि संस्कृतेन

---

८० विज़िटिंग कार्ड इत्याङ्ग्लभाषायाम्।

८१ शकि लिङ् च (३.३.१७२) इत्यनेन लिङ्। विधातुं शक्नुयात् इत्यर्थः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

ग्रन्थनिबन्धनं नाम। प्रायो नैतादृशाः संस्कृते रुचिं बिभ्रति। अस्य न केवलमभिरुचिरुत्साहोऽपि, भवेत्स स्वार्थवशादेव, संस्कृतकाव्यबद्धो गुरुचरितग्रन्थो संस्कृते बद्धश्रद्धान् दार्शनिकधुरन्धरान् राष्ट्रपतीन् प्रीणयेत्तमामिति। अंगीकुरुष्व तदभ्यर्थनाम्। मा चिरायिष्ठाः। अहं ते सहायो भवितेति। तदा सुप्तोत्थित इव नेत्रे उन्मील्याहमभाणिषम् – अंगीकरोमि भवदादेशमिति। तदा प्रसन्नमुखवर्णः कुलपतिराह – पञ्चनदशासनेन गुरुगोविन्दसिंहजन्मत्रिशतीपूर्तिमभिलक्ष्य गुरुगोविन्दसिंह फाउण्डेशन नाम्नैका संस्था संस्थापिता। अहं तस्या अध्यक्षः। ग्रन्थप्रणयनार्थं सहस्रं मुद्रा भवद्भ्योऽर्पयिष्यति संस्थेयं शतं पुस्तकप्रतिरूपकाणि[८२] च। नैतद्द्वयेन ममार्थः, गुरुचरितगाने भवता वृतोऽस्मीत्येव मत्कृतेऽलम्। तदनु कञ्चित्कालं कुलपतौ व्यतियाप्य चिन्ताचान्तचेताः किञ्चिद्वैलक्ष्यमिवानुभवन् भूयोऽपि भ्रमणतो विरतोऽहं डा. परमानन्दगृहममुपेतः तत्र रात्रिं च व्यतियाप्यापरेद्युः प्राह्णे दिल्लीं प्रति प्रस्थितः। सर्वथा सत्येयमुक्तिः –

अघटितघटितं घटयति सुघटितघटितानि दुर्घटीकुरुते।
विधिरेव तानि घटयति यानि पुमान्नैव चिन्तयति।।

सर्वमकस्मादेव घटितम्। अहं बारादरीदर्शनार्थं तत्र भ्रमणार्थं चोपसन्नः। तत्र कुलपतिदर्शनेच्छासमुदयः, तस्य कार्यालये समुपस्थितिः, कार्यान्तरानतिपातत्वेन स्वकक्ष आह्वानं, मया स्वकृतेः स्वेन सह नयनम्, कुलपतेः सुनीतिकुमारचाटुर्ज्या–प्राक्कथनवाचनं गुरुचरितसंस्कृतकाव्यग्रन्थप्रणयनानुरोधश्चेति सर्वमघटित–घटितमेवाभूत्। भवितव्यानां द्वाराणि नाम भवन्ति सर्वत्र।

## ७३

दिल्ल्यां कार्यान्तरवशात्सिताम्बरस्य मासस्यान्तिमः सप्ताहो गतः। अक्तूबरमास–प्रथमदिवसे मया कार्यं प्रारब्धम्। यतः कुतोऽपि गुरुचरितवर्णनापरा ग्रन्थाः संकलिता गुरुग्रन्थोऽपि देवनागरीलिपिबद्ध आसादितो दशमग्रन्थोऽपि यत्र गुरुणाऽऽत्मकथा वर्णिता विचित्रनाटकनाम्ना। जन्मसाखियां इत्याख्या गुरुजन्मकथा अपि कुतोऽप्यासादिताः। एतस्य महतो ग्रन्थसम्भारस्य पठने रात्रिन्दिवमहं व्यस्तो गच्छन्तं कालं नागणयम्।

---

८२ कापीज़ इत्याङ्ग्ल्याम्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अक्तूबरो मासो गतः, नवाम्बरः प्राप्तः। काव्यप्रणयनं तु प्रारब्धमेव न। तदैकस्यां रात्रौ त्रिवादने निद्राभंगो मे जातः। तदा 'शयनादुत्थाय किञ्चिच्छनैः' शयनकक्षादहमपसृत्योपवेशनकक्ष[८३]मुपेतस्तत्र च 'नैकः सुप्तेषु जागृयादि' ति नियममनादृत्य निद्रामग्नेषु दारेषु पुत्रे च पुत्र्यां च पितृचरणेषु च कक्षस्थिते सोफासन उपविष्टः काव्यप्रणयने प्रवृत्तः। तदा विचित्रमिव किमपि संवृत्तम्। गिरिणदीजलधारेवाकस्मादेव प्रवृत्तो मे गीष्प्रसरः। उपजातिवृत्तोपनिबद्धानि पद्यान्यहमहमिकया आत्मानमाविरकुर्वन्। गुरोः प्रसाद एवायमित्यहममंसि। अयमेव भावो मया काव्यद्वितीयपद्य एभिः शब्दैरुपन्यस्तः –

तस्य प्रभोर्ब्रह्ममयस्य पुंसः
क: शक्नुयाद्वर्णयितुं चरित्रम्।
तथाऽपि तद्गौरवमेव मां त–
च्चरित्रगाने मुखरीकरोति।।

एवं यदेकस्यां रात्रावकस्माज्जातं तत्प्रतिरात्रिचर्यारूपेण परिणतम्। कदाचित्त्रिवादने वा कदाचिद् द्विवादने वा मे निद्राभङ्गोऽभूदहं चोपवेशन–कक्षमाविष्ट आविष्ट इव काव्यकर्मण्यात्मानं व्यापीपरम्। सोऽयं काव्यव्यापारः सार्धचतुर्वादनं पञ्चवादनं यावद्वाऽनारतं प्राचालीत्। तदा पुनरहं शय्यामुपेतो होरां वा होराद्वयं वा शयनसुखमलप्सि।

एवममन्देनाभियोगेन काव्यमिदं दिशाम्बरमासमध्ये पूर्णतां गतम्। विंशतिदिनैश्च मेहरचन्दलछमनदाससंस्थया तन्मुद्रितम्। एवमसम्भवमपि सम्भवि जातम्। जनवरीमासस्य सप्तदशे दिवसे च राष्ट्रपतिमहाभागेभ्यः समर्पितमपि।

इदमेव काव्यमेकवर्षाभ्यन्तर एव काले दिल्लीस्थया साहित्यअकादेमी संस्थया पुरस्कृतम्। सोऽभूत्प्रथमो मे राष्ट्रियः पुरस्कारो येन यशो मे सर्वत्र प्रसृतम्।

यस्मिन्दिने पुरस्कार उद्घोषितस्तदव्यवहितदिनानन्तरमेव कलासंकायभवने पादवीथ्या[८४] सञ्चरमाण इतालवीभाषाप्राध्यापको डा. राजेन्द्रसिंह आहलूवालिया चटुलोत्फुल्लगत्या मामुपासीदद्वर्धापनाभरेण च मां तर्पयित्वाऽप्राक्षीत् – अयि भोः! कथयतु भवान् कुतो नु भवतो गुरुचरितनिबन्धनप्रेरणा? मया तत्क्षणमेवोक्तम् – गुरोः प्रसादादेव[८५]। तच्छ्रुत्वा बाहुभ्यां मां परिष्वज्य सोऽवादीत् – वस्तुतः शिष्यस्तु भवानेव य एवमाह गुरोः प्रसादादिति। केशकटकादिलिंगं न

---

८३ ड्राइंग रूम इत्याङ्ग्ल्याम्।
८४ कारिडोर इत्याङ्ग्ल्याम्।
८५ गुरु दी मेहर सी इति पञ्चनदीयभाषायाम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

शिष्यधर्मकारणम्। शिष्यस्तु भवानेव य एवमाह गुरोः प्रसादादिति। वयं तु केवलं शिष्यलिंगिनो न तु शिष्याः। गुरौ प्रपत्तिरेव शिष्यता नाम।

श्रीगुरुगोविन्दसिंहचरितचर्चाविषय इदमपि विवक्षामि यदस्य प्राक्कथनं प्रथितयशोभी राघवन्महाभागैरुपनिबद्धं यत्रेदं सुतरामभिष्टुतम्।

अपरा मे ग्रन्थरचनाऽभून्मन्निबन्धसंग्रहरूपा 'एसेज़ इन इण्डालोजी'त्याख्या या मेहरचन्दलछमनदाससंस्थया १९६३ तमे वर्षे प्राकाश्यमनीयत। तत्र स्वतन्त्रग्रन्थपरिमाणकलेवरोऽस्ति कालविषयको निबन्धो यो विशेषोल्लेखमर्हति।

## ७४

एवमध्ययनाध्यापनाभ्यां ग्रन्थादिप्रणयनेन विभागीयकार्यसम्पादनेन च व्यतीतानि कतिपयवर्षाणि। यथोक्तं पूर्वं १९७० तमे वर्षेऽहं प्रोफेसरपदमारूढः। तदनु चत्वारि वर्षाणि गतान्यध्ययनाध्यापन– ग्रन्थप्रणयन – विभागकार्यनिर्वहणादिषु व्यापृतस्य मम। १९७५ तमे वर्षे इटलीदेशे टोरीनोनगरे विश्वसंस्कृतसम्मेलनं भवितेति प्रवृत्तिमुपलभ्य तत्रोपस्थातुं मया कृतो निश्चयः। भारतशासनं मां तत्र स्वप्रतिनिधिरूपेणोपस्थापयेदिति तदहं तत् (= शासनं) प्रातर्थिषि। प्रार्थना च मम तेनांगीकृता। शासनप्रतिनिधिरहमिति सर्वोऽपि मे व्ययभारो तेन वोढव्य इत्यपि स्वीकृतम्।

भारतस्थितेन शर्मण्यदेशदूतावासेन सह ममासीत् कश्चन पुरातनः सम्बन्धः। तत्रत्या सांस्कृतिकसम्बन्धपरामर्शदात्री तदाऽऽसीत् सुश्रीर्डुक्विट्ज़महाभागा। तया सहाऽऽसीन्ममान्तरंगता। अहमचिचिन्तं योरुपभूखण्डमुपैम्येव। इटलीदेशस्तदंगभूत एव – तर्हि कुतो न शर्मण्यदेशमपि गमिकर्मीकुर्यां सोऽपि तदवयवभूत एव। अहं योरुपभूखण्ड एव भवामि चेद् भारताद् योरुपभूखण्डं प्रति गमने ततश्च भारतं प्रत्यागमने व्ययस्य भारतशासनेनैव वोढव्यत्वात्तदर्थं शर्मण्यदेशशासनेन न कोऽपि व्ययो वोढव्यो भविष्यति। केवलम् इटलीदेशाच्छर्मण्यदेशं प्रति ततश्च ततः प्रत्यागमने यावान् व्ययः स्यात्केवलं स एव वोढव्यो भवेच्छर्मण्यदेशे यात्राप्रसंगेन यो व्ययो भवेत्केवलं स एव च। डुकविट्ज़महोदययोक्तमहं तथा प्रयसिष्यामि येन भवतां शर्मण्यदेशयात्रा राजकीययात्रा भवेत्। तेन तत्रत्या सर्वाऽपि व्यवस्था शासनेनैव करिष्यते। तत्प्रयत्नादेवं जातमपि। कुत्र कुत्र गन्तव्यं, कैस्कैर्विद्वद्भिः संगन्तव्यमालापश्च प्रवर्तनीयः, कानि कानि च दर्शनार्हाणि स्थानानि द्रष्टव्यानीति डुकविट्ज़महोदयया स्वदेशीयशासनाधिकारिपरामर्शेण साधितम्। यत्र यत्राहं गन्ता तत्र तत्रावासव्यवस्थाऽपि कृता। शासनपक्षत आङ्ग्लभाषाभाषी/भाषिणी


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

वा मत्सौकर्यार्थं नियुक्तः/नियुक्ता येन शर्मण्यभाषामजानतो मम लोकसंव्यवहारे कष्टं न भवेत्।

## ७५

अहं निर्धारितदिवसे विश्वसंस्कृतसम्मेलनार्थमिटलीदेशीयं टोरीनोनगरमुपेतः। तत्र मया संस्कृतपर्यायवाचिनः शब्दा इति विषयमधिकृत्य स्वकीयो निबन्धः प्रस्तोतव्य आसीत्। तत्रत्यपद्धत्यनुसारेण होरार्धं निबन्धप्रस्तुतये निर्धारितम् आसीत्, पञ्चदशकलाश्चासन् निर्धारितास्तत्सम्बद्धप्रश्नोत्तरार्थम्। मन्निबन्धप्रस्तुत्यनन्तरं या चर्चा प्रवृत्ता सा तथाऽतिदीर्घाऽभूद्यथा तया सम्मेलननिबन्धप्रस्तुतिसम्बद्धा सर्वाऽपि व्यवस्थोपरिष्टान्निर्दिष्टा व्यवच्छिन्ना। आमध्याह्नभोजनं होराद्वयं यावद्विद्वांसः स्वस्वमतोपस्थापनेऽभूवंस्तत्पराः। चर्चा समयसीमानमतिक्रान्ता। मयोक्तमासीद्ये शब्दाः कोषेषु पर्यायत्वेन निर्दिष्टास्तेष्वप्यस्ति कश्चन सूक्ष्मोऽर्थभेदः। न वस्तुतोऽस्ति तेषां पर्यायता। सोऽर्थभेदो मया निपुणमुद्भेदितो नानोदाहरणैश्च प्राचीनवाङ्मयगतैः समर्थितः। एच्. डब्ल्यू. फ़ाउलर इत्याख्येनाङ्ग्लभाषाकोषकृता न सन्त्याङ्ग्लभाषायां तादृशौ द्वौ शब्दौ यौ स्यातां पूर्णरूपेण समानार्थकौ (there are no two perfect synonyms in English language) इति तत्प्रारम्भिकवक्तव्य उक्तम्। तदेवाश्रित्य मयाऽप्युक्तं न स्तस्तादृशौ द्वौ शब्दौ संस्कृतभाषायां ययोः पूर्णतया समानार्थकता स्यात्। तयोरर्थभेदोऽस्त्येव। स कदाचित्तथा सूक्ष्मो भवति यथा स वाचा वर्णयितुं न शक्यते, तस्यानुभवैकवेद्यत्वात्। इक्षुक्षीरगुडादीनां माधुर्यस्य महदन्तरं भवति परं यथा केनचिदुक्तं शक्रेणापि तद्वर्णयितुं न शक्यते।

पर्यायवाचित्वेन कोषेषु परिगणितानां शब्दानामर्थविवेचने कथं मे प्रवृत्तिरिति निरूपणाऽत्र नाप्रासङ्गिकी स्यात्। यदाहं श्रीरामायणस्य भाषापरिच्छेदे प्रवृत्तस्तदा मयाऽवलोकितं यत्तत्र नैकशः पर्यायवाचित्वेन स्वीकृताः[८६] शब्दाः सहप्रयुक्ताः। यथा–स पपात हतो भूमौ विटपीव महाद्रुमः[८७], तां विनाऽथ विहंगोऽसौ पक्षी प्रणदितस्तदा[८८], वने वनेचरांश्चान्यान् खेचरांश्च विहंगमान्[८९], विराजयन्ती तं

---

८६ ते वस्तुतः पर्यायवाचिनो न सन्तीति मनसिकृत्य पर्यायत्वेन स्वीकृता इति व्यवहारः।

८७ ४.१.५५

८८ ४.१३.१२

८९ ३.७४.३४


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

देशं विद्युत्सौदामनी यथा[६०], रराज राजपुत्री सा विद्युत् सौदामनी यथा[६१], काञ्चनाभं नभश्चक्रे विद्युत्सौदामनी यथा[६२] इत्यादि। तदाऽभून्मे मनसि यदि पर्यायत्वेन स्वीकृताः शब्दा एकमेवार्थं ब्रुवते तर्हि कथं तेषां सहप्रयोगः? सोऽयं सहप्रयोग एव तेषां पर्यायत्वं विरुणद्धि। एकेन तत्र विशेषणेन भवितव्यमपरेण च विशेष्येण। विटपी महाद्रुम इत्यत्र विटपीति विशेषणं स्यात् द्रुम इति च विशेष्यम्, विटपाः सन्त्यस्य इति विटपी, तादृशो महाद्रुमः, विहंगः पक्षी इत्यत्र विहंग इति विशेषणं पक्षीति विशेष्यं विहायसा गच्छन् पक्षी, खेचरान् विहंगमान् इत्यत्र यो विहंगमशब्द उपर्युद्धृते पद्यांशे विशेषणं स एवात्र विशेष्यतां गतः, विद्युत्सौदामनीत्यत्र सौदामनीति विशेषणं विद्युदिति च विशेष्यम्। सुदाम्नैकदिक् (४.३.११२) इति पाणिनिसूत्रेणाण् प्रत्ययेन निष्पन्नः सौदामनीशब्दस्तां विद्युतं द्योतयति या सुदाम्ना एकदिक् भवति, नेयं सामान्या विद्युदपि तु यथा तिलकटीकाकृता व्याख्यातं सा विद्युद् या सुदाम्नि पर्वते भवति।

शब्देषु पर्यायत्वं कथमायातीति विषये केनचित्प्रसंगेन क्षीरस्वामिकृताममर–कोषटीकामालोचयता मया ज्ञातम्। अमरकोषे तिलकपर्यायत्वेनामी शब्दा निर्दिष्टाः – तमालपत्रतिलकचित्रकाणि विशेषकम्। कोषगतां पंक्तिमिमां व्याख्यन् क्षीरस्वामी प्राह – तमालपत्राकृति कस्तूर्या ललाटे तमालपत्रम्, तिलाकृति तिलकम्, चित्रकं नानावर्णम्, विशिनष्टि विशेषकम्। इत्थं तिलकभेदा एते, पर्यायत्वं त्वदूरविप्रकर्षात्। अदूरविप्रकर्षादित्यत्र बीजपदम्।

अर्थदृष्ट्या परस्परेण न दूरतो भवन्तीति सूक्ष्मं तदर्थगतं भेदं तिरस्कृत्य यः सामान्यस्तदर्थगतोंऽशस्तमेव च प्रधानं मत्वा तेषां पर्यायता (= समानार्थकता) स्वीक्रियते। यत्र कोषकारा महता कण्ठेन समानार्थकतामुद्घोषयन्ति तत्रापि तत्त्वतोऽर्थभेदोऽस्त्येव। अमरसिंहः प्राह – समानौ मरुधन्वानौ[६३], अर्थात् मरुशब्दश्च धन्वशब्दश्च समानौ, अर्थात् समानार्थकौ स्तः। व्याख्याकृतस्त्वत्रार्थभेद-मुद्भावयन्त्येव। तथाहि– 'मरुधन्वमतिक्रम्य' इति भागवत[६४]वचसि सहप्रयुक्तौ मरुधन्वशब्दावेवं व्याख्याति श्रीधरस्वामी – मरुर्निरुदकदेशो, धन्वोऽल्पोदकः। एवमेव 'ततः सरस्वतीकूले समेषु मरुधन्वसु[६५]' इति महाभारतपद्ये मरुधन्वसु इति नीलकण्ठ एवं व्याख्याति – मरुषु निर्जलदेशेषु, धन्वसु जांगलदेशेषु।

---

६० ३.५२.७४

६१ ७.३२.५६

६२ २.६.१२३

६३ २.२.५

६४ १.१०.३५

६५ वनपर्व, ५.३



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अन्यस्मिन् महाभारतपद्ये प्रयुक्तं मरुधन्वसु[९६] इति पदं स श्रीधरस्वामिवदेव व्याख्याति – मरुषु निरुदकदेशेषु धन्वसु अल्पजलप्रदेशेषु। आपातत एवं भाति यन्मरुशब्दविषये यद्यप्युभयोरपि टीकाकृतोः श्रीधरस्वामिनीलकण्ठयोरैकमत्यं धन्वशब्दविषये तयोर्मतभेदो यतः श्रीधरस्वामिमते सोऽल्पोदको देशो भवति नीलकण्ठमते च स भवति जांगलदेशः। अत्रेदमवधेयं यज्जांगलदेशोऽल्पोदको देश एव। तथा च चरकः –

अल्पोदकद्रुमो यस्तु प्रवातः प्रचुरातपः।
ज्ञेयः स जांगलो देशः स्वल्परोगतमोऽपि च।।[९७]

जांगलदेशोऽल्पोदक इति समान एवाभिप्राय उभयोष्टीकाकृतोः। एकमपरमप्युदाहरणं यत्रामरेण महता कण्ठेनार्थसाम्यमुद्घोषितम्। तद्यथा – केयूरमंगदं तुल्ये[९८]। 'तुल्ये' इत्युक्तेऽप्यस्त्येव तयोरर्थभेदः। रामायणे नानास्थलेषु केयूरांगदशब्दौ सह प्रयुक्तौ। तावेवं व्याख्यान्ति राम– गोविन्दराज– महेश्वरतीर्थाष्टीकाकृतः – अंगदं बाहुमूलधार्यं भूषणम् केयूरं तदधोभागस्थम् (रामव्याख्या), अङ्दैः कर्पूरोपरिधार्यैर्बाहुभूषणैः केयूरैर्भुजशिरोव्यापिफणाकार-शिखरयुक्तबाहुभूषणैः (गोविन्दराजव्याख्या), अंगदम् ऊर्ध्वाकारं पत्रलताचित्रितं बाहुमूलधार्यं भूषणं केयूरं तस्याधोभागे धार्यं वलयाकारं भूषणम् (महेश्वरतीर्थव्याख्या)।

लता–वल्ली–वीरुच्छब्दाः कोषेषु पर्यायत्वेन परिगणिताः। परं तत्रापि स्थितिभेदेनास्ति कश्चन भेदः। लतावल्लीश्च वेगेन विकर्षन् पाण्डुनन्दन इति महाभारतपद्ये[९९] सहप्रयुक्तौ लतावल्लीशब्दावित्थं व्याख्याति नीलकण्ठष्टीकाकृत्– लता वृक्षाद्यारूढा गुडूच्यादयः, वल्ल्यो भूमिप्रसारा वर्षमात्रस्थायिन्यः कूष्माण्डाद्याः। केषुचन महाभारतपद्येषु स्वयमेव महाभारतकारेण लतावल्ल्योरर्थभेदः प्रकरण–व्याख्यानमाध्यमेनोद्भावितः–

(क) लताधर्मा धार्तराष्ट्राः सालाः सञ्जय पाण्डवाः।
न लता वर्धते जातु अनाश्रित्य महाद्रुमम्[१००]।।
(ख) वल्ली वेष्टयते वृक्षं सर्वतश्चैव गच्छति[१०१]।

---

९९ आदिपर्व, ७५.५
९७ चरकसंहिता, विमानस्थानम्, अध्यायः ४
९८ २.६.१०७
९९ वनपर्व, १४६.४०
१०० उद्योगपर्व, २६.३६
१०१ शान्तिपर्व, १७७.१३

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

रामायणे[१०२] प्रयुक्तं वीरुच्छब्दं तिलकटीकृद्राम एवं व्याख्याति – वीरुधो भूम्याधाराः। क्षीरस्वामी पदमेतद् व्याख्यन् कात्यकृतामेतद्व्याख्यामेवमुपस्थापयति – वीरुत् सुपर्णजटिला प्रतानशतगामिनी। एवं पर्यायशब्दविषये होरार्धं यावदनवरतं मे वाग्धारा प्रावर्तत। तेन मुग्धा इव श्रोतारो मयाऽन्वभूयन्त। स्वनिबन्धवाचन–पर्यवसानात्पूर्वं मयोक्तं यन्मयाऽत्र यत् प्रत्यपादि तद् दिङ्मात्रमेव। मय्यस्ति तावती सामग्री यदाधारेण पुस्तिका – आङ्ग्लभाषायां मोनोग्राफ़ इति शब्दो मया प्रयुक्त आसीत् – विरचयितुं शक्येत।

निबन्धवाचनपर्यवसाने चर्चा प्रारब्धा। सा तु तथा दीर्घाऽऽसीद् यद् होराद्वयं कुत्र गतमिति न कोऽप्यजानात्। सम्मेलनस्य कार्यक्रमोऽस्तव्यस्ततां गतः। वात्येव विद्वत्सु वाग्युद्धं प्रारभत। ते द्विधा विभक्ताः। केचिन्मन्मतं समार्तथन्त – बह्वी संख्या तेषामेवासीत्– केचिच्च प्रतिपक्षतामशिश्रियन्। दाण्डेकर– सुनीतिकुमार–चाटुर्ज्या – आस्कर बोत्तो – ए. के. वार्डरप्रभृतयो मन्मते स्थिता अजोघुष्यन्तास्ति पर्यायवाचिषु शब्देष्वर्थभेद इति, राघवन् – एलेक्स वेमेन् प्रभृतय आर्हुनास्तीति, समानमेवार्थं ते ब्रुवत इति मतमास्थिताः। मन्मतं समर्थयद्भिर्वार्डरमहाभागैरतीव भावप्रवणतयोक्तं – यावज्जीवमहमेतदेव मतमास्थितः। ये पर्यायवाचिनः शब्दास्ते न वस्तुतः पर्यायवाचिनः, अस्त्येव तेष्वर्थभेदः। परन्तु मयि प्रमाणं नासीत्। श्रीसत्यव्रतशास्त्रिभिः प्रमाणमुपस्थापितम्। प्राचीनव्याख्याकृतां व्याख्यानानि तैरुद्धृतानि। नामूलं किञ्चिदप्युक्तं तैः। स्वनिबन्धवाचनं पर्यवसाययद्भिस्तैरुक्तं यत्तेष्वेतावती सामग्री यया पुस्तिका विरचयितुं शक्या। पुस्तिका (मोनोग्राफ) नाम लघु पुस्तकं भवति। अहं वाञ्छामि यत्ते बृहदाकारं पुस्तकमेकं विरचयन्तु, एतदपि चाहं वाञ्छामि यन्मे तावद् दीर्घमायुः स्याद्येन पुस्तकमिदं मुद्रितरूपेण द्रष्टुमहं शक्नुयाम्। तद्वचो मे हृदयमस्पृशत्। अद्य यदैवाहं तस्मरामि हृदयं मे द्रवति समर्पयामि च तस्मै विद्वद्वरेण्याय शतशः प्रणामाञ्जलीः। अद्य कुत्र नु सन्त्येतादृशा गुणगृह्या विपश्चितः।

मम निबन्धवाचनतः पूर्वं कश्चिदज्ञातो जन एवाहमासम्। वाचनानन्तरं तत्सम्बद्धप्रवृत्तसुदीर्घचर्चावशाच्चर्चाविषयतां सर्वेषामभिज्ञानभाजनतां प्रशंसाभाजनतां चाहं गतः। तद्दिनादेवाहमन्तरराष्ट्रियो विद्वाञ्जातः! यदि कश्चिन्मां पृच्छति कदा भवताऽन्तरराष्ट्रिया ख्यातिः प्राप्ता तदोपरिष्टान्निरूपितमेव प्रसंगमुदाहरामि।

---

१०२ किष्किन्धाकाण्डम्, ४८.१०



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

## ७६

टोरीनोनगरं सप्ताहमध्युष्य सम्मेलनपरिसमाप्तावहं पूर्वनिर्धारितकार्यक्रमानुसारेण शर्मण्यदेशं प्रास्थिषि। तत्र यद् यद् दृष्टं, यत्र यत्र गतं, यैर्यैर्विद्वद्भिः सङ्गतं, यद्यद्विषये च तैश्चर्चितं, यत्र यत्र यान् यांश्च विषयानाश्रित्य भाषितं तत्सर्वं ततः प्रत्यावर्तनानन्तरं रचिते 'शर्मण्यदेशः सुतरां विभाती'ति काव्ये वर्णितम्। विदुषां मनोविनोदाय तदेवात्रोद्धरामि –

### पूर्वपीठिका

दिल्ल्यां नगरमतल्ल्यां
भारतदेशस्य राजधान्यां च।
विलसति लोचनहारी
दूतावासः शर्मण्यदेशस्य।।१।।

व्यूर्फ़ेलनामा सौम्यो
विचक्षणो विलक्षणप्रतिभः।
तत्र नियुक्तोऽधिकृतै–
रुच्चैः सांस्कृतिकेषु कार्येषु।।२।।

योरूपयात्राकाले
गमिकर्मीकरिष्यता मयका।
शर्मण्याख्यं देशं
तं प्रति पत्रं प्राहायि सत्यल्पाल्पेऽपि समये।।३।।

दिल्ल्यामनुपस्थित्या
व्यूर्फ़ेलनाम्नोऽधिकारिणस्तस्य।
तत्सहकर्त्री सौम्या
डुकविट्ज़नाम्नी महाविदुषी।।४।।

मद्यात्रार्थं व्यदधा–
दपेक्षितं संविधानकं सर्वम्।
शर्मण्याख्यं देश–
मपपारं येन गन्तुमहम्।।५।।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

## यात्रावर्णनम्

योरूपभूमण्डलमध्यवर्ती
पारं समृद्धेः परमभ्युपेतः।
नानानदीप्रस्रवणैः सुरम्यः
शर्मण्यदेशः सुतरां विभाति।।६।।

अकृष्टपच्यं खलु यत्र सस्यं
हृद्यास्तथा शाद्वलभूमिभागाः।
दीर्घाश्चकासत्यथ दीर्घिकाः स
शर्मण्यदेशः सुतरां विभाति।।७।।

तरुप्रतानैः समलङ्कृतानि
प्रतानिनीभिश्च विभूषितानि।
श्यामाख्यया लोकसुविश्रुतानि
श्यामायमानानि वनानि यत्र।।८।।

देशानुरागं परमं वहन्तो
मनस्विनो नित्यमुदात्तचित्ताः।
हृष्टाश्च पुष्टाश्च भृशं च तुष्टा–
स्तरस्विनो यत्र जना विभान्ति।।९।।

अभ्रंलिहाग्रा बहुभूमिकाश्च
भूमेश्च खस्यापि च सेतुभूताः।
अट्टालिकालीरवलोक्य यत्र
जनः परं विस्मयमभ्युपैति।।१०।।

एवंविधेऽहं स्थितिमाकलय्य
शर्मण्यदेशे जगति प्रसिद्धे।
यद् दृष्टवान्वा श्रुतवानथो वा
तदेव गीर्वाणगिरोद्गिरामि।।११।।

अष्टादशे जूनदिने बुधेऽहं
विभिन्नदेशभ्रमणप्रसङ्गात्।
पुरं विशालं स्पृहणीयशोभं
फ्रांक्फुर्तनाम प्रतिपन्न आसम्।।१२।।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विमानभूमिं प्रतिपन्नमात्रः
शर्मण्यदेशाधिकृतप्रबन्धात्।
प्रत्युद्गतो यात्रिकसद्म भव्यं
फ्रांक्फुर्तनाम प्रतिपादितश्च।।१३।।

क्रूगर्समाख्या खलु तत्र काचित्
सौशील्यदाक्षिण्यगुणोपपन्ना।
योषा स्वदेशाधिकृतैर्मदीय-
सेवार्थमद्धा विनियोजिताऽभूत्।।१४।।

कृत्वा तया सार्धमहं यथेच्छं
सग्धिं सपीतिं च भृशं प्रतीतः।
सम्प्रस्थितः पूर्वसुनिश्चितत्वा-
न्मार्बुर्ग्समाख्यां नगरीं मनोज्ञाम्।।१५।।

अल्पो हि यस्मान् मम काल आसी-
दतस्त्वराक्रान्तमना अभूवम्।
रेलेन यातव्यमभून्मयेति
सम्प्राप्तवान् रेलविरामभूमिम्।।१६।।

रेलेन मार्बुर्ग्नगरीं प्रपन्नः
क्रूगर्समेतः सुषमां प्रपश्यन्।
शर्मण्यदेशस्य मनोरमस्य
तदीयशोभाहृतमानसोऽहम्।।१७।।

देवो यतस्तत्र भृशं प्रवृष्ट
आसीत्ततः शष्पसमावृता भूः।
कुल्या अभूवंश्च जलस्य पूर्णाः
ते ते विशेषाश्च विशेषदृश्याः।।१८।।

मार्गे मयाऽऽलोकिषताद्वितीया
आवाससङ्घाः सुतरां मनोज्ञाः।
येषामभूवन् पुरतः स्थितानि
काराख्ययानानि मनोरमाणि।।१६।।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

येषां पुरस्ताद् व्यलसंश्च पद्याः
संमृष्टरूपा नयनाभिरामाः।
आलोक्य तान् मानसमन्दिरे मे
विकल्प एष प्रकटस्तदासीत्।।२०।।

ग्रामाः किमेते नगराणि किं वे–
त्यनेन सन्देहलवेन तावत्।
आक्रान्तचेताः कुतुकादपृच्छं
मत्सङ्गिनीं क्रूगरिति प्रसिद्धाम्।।२१।।

प्रोक्तं तया भो! नगराणि नैते
ग्रामानिमान् वेत्तु भवान् सुरम्यान्।
विद्युत्प्रकाशा दृढबद्धमार्गाः
स्वच्छाः समस्तैर्विभवैः समेताः।।२२।।

द्विभूमिकाः सुन्दरवेषधृद्भि–
रधिष्ठिता जानपदैर्जनैश्च।
ग्रामा इमे सन्ति तथापि मित्र!
कुर्वन्ति सत्यं नगरावभासम्।।२३।।

उपेत्य मार्बुर्ग्नगरीं, प्रपन्नो–
ऽहमञ्जसा भारतशास्त्रसंस्थाम्।
प्रपन्नमात्रः समगंसि सद्यो
विल्हल्मरावैः प्रथितैः सुधीभिः।।२४।।

शर्मादिकैरप्यपरैर्बुधैश्च
विशेषतो व्याकरणस्य विज्ञैः।
परस्परेणाथ वयं समेता
विस्रब्धमाख्याम निजाः प्रवृत्तीः।।२५।।

होरात्रयं च व्यतियाप्य तत्र
हृद्यां प्रवर्त्यापि च शास्त्रचर्चाम्।
पुरं सुरम्यं मुदितोऽहमासं
फ्रांक्फुर्तनाम प्रतिसंनिवृत्तः।।२६।।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

प्राह्णेऽपरेद्युश्च पुनस्ततोऽहं
गॉतिंगनाख्यं नगरं प्रयातः।
अध्यर्धहोरामितवेलयैव
सम्प्राप्तवांस् तत्खलु हेलयैव।।२७।।

प्रत्युद्गतश्चाहमथापि तत्र
गुस्तावरॉथाख्यसुधीवरेण्यैः।
टोरीनपुर्यामपि दृष्टपूर्वैः
स्मेराननैः सौगतशास्त्रविद्भिः।।२८।।

सम्मानितश्चापि सुसत्कृतश्च
स्नेहेन नीतश्च शुभां स्वसंस्थाम्।
बुधान्तराणि प्रतिबोधितोऽहं
हर्षस्य कोटिं परमामविन्दम्।।२६।।

तदन्तरा तैः सह विज्ञवर्यैः
श्रीरॉथवाचा द्रुतमक्रियन्त।
चित्राण्यनेकानि हि यानि नित्यं
स्मृतिं तदीयां नवतां नयन्ति।।३०।।

संस्थागृहद्वारि च दृश्यमेकं
प्रविष्टमात्रः प्रमना अदर्शम्।
शर्मण्यदेशीयजनानुरागं
प्रमाणयद् भारतदेशजेषु।।३१।।

प्रवेशकक्षेऽहमवालुलोके
तत्सद्मनः साधुनिविष्टवर्णम्।
आथर्वणं मन्त्रवरेण्यमेक—
मशोकलेखाद्रुचिराश्च पङ्क्तीः।।३२।।

ततः परस्तान्मयकाऽतिहृद्य—
पद्यानि वाल्त्शिमद्रचितानि तत्र।
दृष्टानि सीगाख्यगुरोर्निमित्ते—
नाशीतिवर्षाप्त्यभिनन्दनस्य।।३३।।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

स्थिताऽत्र या भारतशास्त्रसंस्था
तस्या मनोज्ञं खलु वृत्तजातम्।
चित्रैरभूदारचितं च वृत्त–
पत्रोद्धृतैरंशवरैरनेकैः।।३४।।

वाल्तशिमत्कृतस्यापि च पद्यवृन्द–
स्यालोकनं मे तत एव जातम्।
आलोकनेनापि च यस्य सत्यं
हर्षः प्रवृद्धो न तनौ ममामात्।।३५।।

अहो प्रवाहः सुतरामहो नु
माधुर्यलालित्यगुणास्तदीयाः।
आश्चर्यमित्येव वहन्नभूवं
मग्नस्तदा तद्रसचर्वणायाम्।।३६।।

सम्प्रार्थितास्तत्र बुधा मया च
तत्पद्यलेखानुकृतिं यथावत्।
यन्त्रादिसाह्येन कृतां तदानीं
मय्यार्पिपन् स्नेहवशं गता मे।।३७।।

अहं तदादाय भृशं प्रतीतः
संसिद्धकार्यो बुधदर्शनेन।
पुरं विशालं स्पृहणीयशोभं
फ्रांक्फुर्तनाम प्रतिसंनिवृत्तः।।३८।।

ततोऽपरेद्युश्च पुनः प्रयातः
'मार्गं विमानेन विगाहमानः'।
भूयोऽपि शर्मण्यभुवं दिदृक्षुर्–
बॉनाभिधानां खलु राजधानीम्।।३९।।

तत्र स्थितोऽहं समगंसि तूर्णं
हॉनाभिधेयेन विदां वरेण।
सौम्यस्वभावेन सुतीक्ष्णया च
तत्प्रज्ञया तं प्रति बद्धभावः।।४०।।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

बॉनेऽस्ति राईननदोऽतिरम्यो
नेत्रद्वयासेचनको जनानाम्।
तत्र प्रयातो नवसेतुयुक्ते
नौकाविहारार्थमहं सुखेन।।४१।।

कूलद्वये तस्य नदस्य तावद्
बॉनाख्यमास्ते नगरं निविष्टम्।
यस्योपकण्ठे वलया गिरीणां
सौन्दर्यमत्यद्‌भुतमर्पयन्ति।।४२।।

अधित्यकाभिः खलु शाद्वलाभि–
रुद्यानजातैश्च समृद्धिमद्भिः।
द्वीपान्तरीपैर् अनुकूलमत्र
निवेशितैः पुष्पयुतैर्गृहैश्च।।४३।।

द्राक्षाकृषिव्यापृतकर्षकैश्च
नानाविधोद्योगरतैर्जनैश्च।
नौकासमानाकृतिभिर्विचित्रैः
स्वल्पाल्परूपैर्निलयैस्तथा च।।४४।।

कार्यं प्रधानं खलु मन्यमानैः
कार्येष्वतः स्वेषु भृशं प्रसक्तैः।
स्त्रीभिश्च पुम्भिश्च भृतं पुरं तत्
कामप्यपूर्वां सुषमां बिभर्ति।।४५।।

चकास्ति तत्रैव महाविशालं
शालद्रुमाकारवदभ्रचुम्बि।
द्वात्रिंशता भूमिवरैरुपेतं
भालं पुरस्येव नितान्तशोभि।।४६।।

शर्मप्रदं लोकसभासदस्य–
कार्यालयानां स्थितिहेतुभूतम्।
शर्मण्यदेशस्य यशोऽतिशुभ्रं
प्रख्यापयद्दिक्षु विदिक्षु चापि।।४७।।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

राईनवातानुपभुज्य शीतान्
नभःस्थवातानुपभोक्तुकामम्।
भूमिष्ठलोकानवलोक्य कामं
द्युलोकजालोकनकौतुकार्थि।।४८।।

पुरस्य शोभामिव वीक्षितुं वा
तत्कीर्तिमारोपयितुं दिवं वा।
तस्यापि खस्यापि च सेतुभूतं
दूराभिलक्ष्यं भवनं सुरम्यम्।।४९।।

बॉनात्प्रभृत्यंकलमेव यावन्
नौकाविहारो मम तावदासीत्।
शर्मण्यदेशीयसमीरणेन
समीर्यमाणस्य सुशर्मदेन।।५०।।

राईनकूलेऽहमवालुलोके
सञ्चारमन्त्रालयसद्म भव्यम्।
यन्मूर्तयः पञ्च भवन्ति सत्यं
तत्सङ्ख्यकद्वीपविबोधनाय।।५१।।

व्याघ्रो विबोधाय तथैशियायाः
कङ्गारुरास्ट्रेलियनामकस्य।
हस्ती विशालाकृतिराफ्रिकाया
अमेरिकायाश्च कृते वृषोऽस्ति।।५२।।

श्येनस्तथाऽऽस्ते खलु योरुपस्य,
तत्रैव दृष्टो मयकैकभूमिः।
प्रधानमन्त्र्यावसथोऽद्वितीयो
विशालकाचाचितचारुरूपः।।५३।।

बॉनादगच्छं श्तुतगर्तनामा–
परं पुरं व्योमपथेन तूर्णम्।
प्रत्युद्गतोऽहं खलु तत्र चापि
केनाऽपि राष्ट्रप्रहितेन पुंसा।।५४।।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तेनाऽपरेद्युः सह सम्प्रयातः
प्राह्णे पुरं हाइडलबर्गनाम।
श्रीबर्गराख्येन च सङ्गतोऽह-
मकालहीनं विदुषां वरेण।।५५।।

नीतः स्वसंस्थां प्रणयेन चापि
बुधानथान्यान् परिचायितश्च।
अर्वाक्तनं संस्कृतवाङ्मयं द्रा-
गाश्रित्य कालं बहुमभ्यभाषे।।५६।।

मदीयमाभाषणमभ्यनन्द-
न्नुपस्थितास्तत्र बुधाः समेऽपि।
अत्यन्तसम्प्रीणितमानसः सं-
स्तेनाहमासं प्रतिसंनिवृत्तः।।५७।।

मद्भाषणानन्तरमेव मित्रै-
रैथाल्समाख्यैः खलु भारतीयैः।
विद्वद्वरेण्यैः प्रणयेन नीतो
गृहान् स्वकानाशितमाशितश्च।।५८।।

श्तुत्गर्तनामाहमतो निवृत्तः
पुरं पुरात् हाइडलबर्गनाम्नः।
सम्प्रस्थितश्चापि ततोऽपरेद्यु-
ष्ट्यूबिंगनं नाम पुरं पुराणम्।।५९।।

सम्प्राप्तवांस्तत्र च, भारतीय-
विद्याजुषां धाम वरं प्रपन्नः।
श्रीपॉलथीमाख्यविपश्चिताऽहं
बुधैस्तथान्यैः समगंसि हृष्टः।।६०।।

शर्मण्यदेशं मयकाऽधिगम्या-
वलम्ब्य नाना विषयांस्तथा च।
विपश्चितां सन्निधिमास्थितेन
किञ्चिन्नवीनं खलु भाषणीयम्।।६१।।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

इत्येव तावद् धृदि सम्प्रधार्य
जनस्य नूत्नार्थगतां रुचिं च।
अर्थं भृशं चिन्तितपूर्वमेव
मेऽभूदुपस्थापयितुं प्रवृत्तिः।।६२।।

सम्प्रेरितोऽहं तयका प्रवृत्त्या
नानाविधान्मौलिकचिन्तनोत्थान्।
शर्मण्यदेशाधिकृतान् प्रबुद्धान्
असूचयं प्राग् विषयान् प्रवक्तुम्।।६३।।

ते चाऽपि तावद् विषया गभीराः
संसूचिताः पूर्वविनिश्चितत्वात्।
स्वदेशनानाविधविश्वविद्या–
लयेभ्य आसन्नधिकारिभिस्तैः।।६४।।

तेष्वेक आसीत्खलु कालिदास–
गवीविलासप्रणयप्रवृत्तः।
आश्रित्य तावद्विषयं तमेव
मदीयवाक्सम्प्रसरिष्यतीति।।६५।।

उद्घोषणं प्रादुरभूत्पुरस्तान्
मदागमस्येत्यधिगत्य वृत्तम्।
श्रीपॉलथीमेविदुषस्तथा च
शतीतन्क्रनाख्यान् विदुषोऽहमाख्यम्।।६६।।

पर्यायशब्दानधिकृत्य भूयः
श्रमः प्रवृत्तो मम तावदस्ति।
तच्छब्दरूपेष्वपि कश्चिदर्थ–
भेदः समस्तीति मतं मतं मे।।६७।।

वक्ष्यामि यत्किञ्चिदिहात्र विज्ञाः!
प्रमाणपूर्वं न ततोऽन्यथा तत्।
अचर्चितश्चाप्यविमृष्टपूर्व–
श्चाप्येष सद्भ्यो विषयः स्वदेत।।६८।।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

इत्येवमुक्तौ विबुधाग्रगण्यौ
त्यक्त्वा समुद्घोषितपूर्वमाशु।
पर्यायरूपं विषयं गभीरं
नूत्नं समाख्यापयतां तदैव।।६१।।

पर्यायशब्देष्वपि तावदस्ति
सूक्ष्मोऽर्थभेदो नहि स स्फुटश्च।
पुरातनग्रन्थविलोकनेन
टीकाकृतां साह्यवशेन चापि।।७०।।

मूले तथा पूर्वपरान्वयेन
भवेत्स्फुटो निर्वचनेन चाऽसौ।
इत्येव सर्वं मयका स्ववाचा
न्यरूपि सोदाहृति विस्तरेण।।७१।।

गीर्वाणवाण्यामुपलभ्यमानान्
कोषेषु तावत्परिकीर्तितांश्च।
पर्यायशब्दानुपलक्ष्य तत्र
चिराय मे भाषणमाविरासीत्।।७२।।

श्रीपॉलथीमेऽभिधकोविदोऽभूत्
व्याख्यानकाले मम सभ्यधुर्यः।
नूत्ना च शैली विषयश्च नूत्नो
नूत्नं च नो ज्ञानमनेन वृत्तम्।।७३।।

एवं प्रशस्ता मम वाच आस–
न्ननेन विद्वत्प्रवरेण भूयः।
शतीतन्क्रनश्चाप्यपरोऽत्र विद्वान्
साध्वीर्मदीया गिर इत्यवोचत्।।७४।।

सेवानिवृत्तः खलु पॉलथीमे
शर्मण्यदेशीयवरिष्ठविद्वान्।
तत्स्थानभागस्त्यपरो मनीषी
शतीतन्क्रनाख्यो भुवि लब्धकीर्तिः।।७५।।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अद्याब्दपूगे समभून्मनोज्ञा
दिल्ल्यामहो ! भारतराजधान्याम्।
समागतेनाथ विदां वरेण
श्रीपॉलथीमेन मदीयमैत्री।।७६।।

ततः परस्तादभवच्च भूयो
विपश्चितैनेन मदीयसंगः।
सम्प्राप्तवान् कोविदमण्डनोऽयं
दिल्लीपुरीं कार्यवशेन भूयः।।७७।।

श्रीमोक्षमूलर्विदुषः समानां
महोत्सवेऽध्यर्धशतस्य तावत्।
शर्मण्यदेशादुपयातवत्सु
विद्वत्स्वयं दिल्लिपुरीमुपेतः।।७८।।

तत्रैव काले खलु दिल्लिविश्व–
विद्यालयेनाक्रियतातिरम्यः।
नाट्योत्सवो यत्र दिनद्वयेन
षड्रूपकाणामभवत् प्रयोगः।।७९।।

नाट्योत्सवोऽयं रुचिरप्रयोग
आयोजितोऽभूदभिनन्दनस्य।
श्रीमोक्षमूलर्विदुषोऽङ्गभूतः
शर्मण्यदेशाभिजनस्य तस्य।।८०।।

तत्रान्तिमेऽभूत्समुपस्थितोऽयं
मुख्यातिथित्वेन निमन्त्रितः सन्।
श्रीपॉलथीमेबुधवर्यधुर्यः
स्वसंस्कृतेनारमयच्च सर्वान्।।८१।।

आकर्ण्य सुश्लिष्टपदं गभीरं
लालित्यमाधुर्यगुणाकरं तत्।
नाट्योत्सवे रङ्गगतस्य तावज्
जनस्य भूयः प्रिय उत्सवोऽभूत्।।८२।।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

श्रीबर्गरोऽप्यत्र बुधस्तदानीं
भाग्यानुकूल्यात्समुपस्थितोऽभूत्।
विद्वद्द्वयी सेयमनन्यरूपा
जनस्य भूयो मुदमन्वतानीत्।।८३।।

वर्षद्वयेऽतः खलु सम्प्रवृत्तो
नाट्योत्सवोऽयं जनताहिताय।
तस्य स्मृतिश्चारु चकास्ति चित्ते
विद्वद्द्वयस्येत्यभवं प्रतीतः।।८४।।

सुस्वागतं व्याह्रियते भवद्भ्यो
ट्यूबिंगनाख्ये नगरेऽस्मदीये।
श्रीपॉलथीमेबुधवर्यवाचं–
निशम्य मोदं परमं गतोऽहम्।।८५।।

मद्भाषणानन्तरमेव तावत्
श्रीपॉलथीमेऽभिधकोविदेन।
शतीतन्क्रनाख्येन तथाऽपरेण
समाशसौख्यं शुभमन्वभूवम्।।८६।।

आमन्त्र्य चैनौ विदुषां वरेण्यौ
दृष्ट्वा च दुर्गं रमणीयशोभम्।
शर्मण्यदेशीयसहायकेन
सहाहमासं प्रतिसंनिवृत्तः।।८७।।

श्तुत्गर्तनाम प्रवरं पुराणम्,
अन्येद्युरेवाथ ततः प्रयातः।
श्यामाख्यनामानि वनानि रम्या–
ण्यवेक्षितुं नेत्ररसायनानि।।८८।।

दीर्घाणि दीर्घैस्तरुभिर्युतानि
ग्रामैः पुरैश्चान्तरितानि तानि।
विश्रामकामैः श्रमकर्शितैर्वा
नानाजनैश्चापि समाश्रितानि।।८९।।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

झरैश्च रम्यैरनुनादितानि
सुखं गवाध्यासितशाद्वलानि।
जलप्रवाहैः परिशोभितानि
स्रोतस्विनीभिश्च विभूषितानि।।६०।।

बहूनि तावत्खलु योजनानि
विस्तीर्णतामापतितानि तानि।
नेत्रद्वयासेचनकान्यभूव-
मालोकमालोकमहं प्रहृष्टः।।६१।।

सुविश्रुते श्यामवनाभिधाने
भुक्त्वा सुखं भोजनमन्दिरेऽहम्।
प्रीतश्च तृप्तश्च सुखस्थितश्च
श्तुत्गर्तसञ्ज्ञं पुरमाप्रपन्नः।।६२।।

ततोऽपरेद्युश्च शुभां स्वयात्रा-
मानन्दपूर्णामुपसंहरिष्यन्।
सुविश्रुतं दिक्षु विदिक्षु चाहं
सम्प्रस्थितो रोमपुरं पुराणम्।।६३।।

ततश्च देशं प्रति सम्प्रतीत
उद्ग्रीवमौत्सुक्यभरेण युक्तः।
सम्प्रास्थिषि स्वं चिरविप्रयुक्तम्
आनन्दयिष्यन् प्रियबन्धुवर्गम्।।६४।।

रोमे सुखं द्वे अहनी स्थितोऽह-
माप्यायितश्चाप्यदसीयदृश्यैः।
स्वर्गापवर्गस्य च हेतुभूतां
प्राप्तः प्रियां भारतभूमिमासम्।।६५।।

## उत्तरपीठिका

शर्मण्यदेशयात्रायाः प्रसंगोऽयमुदाहृतः।
संक्षेपतः, सुमनसां विनोदाय भवेद्यदि।।६६।।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कलयाऽपि समेधेत मैत्री यद्युभयोरपि।
भारतस्य च शर्मण्यदेशस्य च सतां मता।।९७।।

अनुरागः सम्प्रवृद्धिं यायाद्यद्यंशतोऽपि च।
फलेग्रहिः प्रयत्नोऽयं मम कामं भविष्यति।।९८।।

यदि भवेदुभयोरपि राष्ट्रयोः
सकललोकसुखं सुखवर्धनम्।
उभयमेव तदा दृढसंगतं
रसमयं समयं गमयिष्यति।।९९।।

लघुर्यात्राप्रसंगोऽयमुपसंह्रियतेऽधुना।
विदधातु समेषां नः शिवतातिः शिवं शिवः।।१००।।

काव्यमिदं पृथक् पुस्तकरूपेणापि प्रकाशितम्। शर्मण्यदेशदिल्ली–स्थितदूतावासपत्रिकयो–र्हिन्द्याङ्ग्लनिबद्धयोः जर्मन समाचार – जर्मन न्यूज़ इत्याख्ययोः पत्रिकयोरंगरूपेणापि। डोयशे वेले इति शर्मण्यभाषानामधेयं बिभ्रतो रेडियोतोऽपि क्रमश इदं प्रसारितम्। शर्मण्यभाषानुवादोऽस्य शर्मण्यभाषाप्राध्यापकेन इकलरमहाभागेन कृतः। मूलसंस्कृतग्रन्थेन सह सोऽपि मत्कृताङ्ग्लभाषानुवादश्च प्रकाशितावभूताम्। विदेशयात्रावर्णनात्मक इदम्प्रथमोऽयं सुदीर्घः काव्यग्रन्थः।

## ७७

'शर्मण्यदेशः सुतरां विभातीति' काव्यस्य रचना कुत्र जातेति विषये किमपि दुःखदं प्रसंगमत्र विवर्णयिषामि यः प्रमाणयति यत् संसारो विषमयोऽप्यमृतमयोऽपि च। दिवश्च्युतात्कान्तिमतः खण्डादिवानिन्द्यसौन्दर्यं बिभ्रतः शर्मण्यदेशात्प्रत्या–वृत्तमात्रस्यैव मे महती विपदापतिता। श्रीमतीन्दिरागान्धी तदा भारतस्य प्रधानमन्त्रिपदमध्यास्त। देशे प्रवृत्तं तद्विरुद्धं कोलाहलं शमयितुं तया ऽऽपातस्थितिरुद्घोषिता येनागस्कृतां जनानां सहचारेण नाना निरागस्का जना अपि मिथ्यारोपवशान्निरुद्धाः। अहमपि तेषु मन्दभागधेयेष्वेक आसम्। संस्कृतविभागीया अनेके प्राध्यापका अपि मद्वद् बन्दिगृहं प्रापिताः, येषु मत्पूर्वशिष्यस्तदानीं सहयोगी च कृष्णलालोऽप्यासीत्। तस्मिन् पत्रसञ्चिकै–काऽऽसीत्। ततस्तां गृहीत्वा निरुद्धोऽहं करणीयान्तराभावादात्मानं विनोदयितुं जनाकीर्णे कक्षे स्थितोऽपि तत्रत्येन सांराविणेन बाध्यमानोऽपि शर्मण्यदेश–

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

यात्रासंस्मरणात्मिकायां पद्यरचनायां प्रवृत्तः। दिवसकाले यानि पद्यान्यरचयं सन्ध्याकाले तानि कृष्णलालमश्रावयम्। द्वादश दिनान्यहमासं निरुद्धः, तावता कालेन काव्यमिदं पूर्णतां गतमासीत्। पश्चाच्छासनेन न मे कश्चन दोषो –

मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः।
सञ्जायन्ते त्रयः पक्षा मित्रोदासीनशत्रवः।।

इति प्राचामुक्तिं प्रमाणयता केनचिच्छत्रुभावेन मिथ्यारोपो मयि पातित इत्यनुभवता मोचितोऽहं बन्धनात्। मद्बन्धनवशान्मम कुटुम्बिजनैर्यत्कष्टं सोढं तस्य स्मृतिरद्यापि ममारुंषि तुदति। ऋषिकल्पाः शास्त्रैकचक्षुष्का अभिनवपाणि–निरितिख्यातिभाजो मम पितृचरणा अतर्कितोपनतादस्मादशनिपाता–त्प्रव्यथितान्तःकरणा अनेकशोऽश्रूण्यवर्तयन्निति धर्मपत्नी मां कालान्तरेऽचकथत्। साऽपि म्लानानना लोकस्य वाग्बाणैर्गाढं विध्यमानाऽपि धैर्यं धारयन्ती सर्वं गृहकार्यं निरवर्तयत्। अस्तु यथा मेघैरन्तरितो भवति शशी पुनश्चापगतेषु मेघेषु पुनः प्रसारयति कान्तिं तथैव ममापि स्थितिरभूत्।

मया पुनरपि विभागाध्यक्षकार्यं निर्वोढुं प्रारब्धम्। कलासंकायाध्यक्षपदेऽप्यहं स्थापितः। सर्वमपि यथापूर्वमेव संवृत्तम्।

## ७८

१९७७ तमे वर्षे फ्रांसदेशस्य राजधान्यां पेरिससमाख्यायां जूनमासे विश्वसंस्कृतसम्मेलनमायोज्यते स्म। तत्राहं समुपस्थितः। ततो मया योरुपभूखण्डस्थ पूर्व–पश्चिमशर्मण्यदेशद्वयकं, पोलेण्डदेशम्, हंगरीदेशम्, इटलीदेशं प्रति च भाषणार्थं गन्तव्यमासीत्। यदाऽहं पूर्वशर्मण्यदेशं प्राप्तस्तदाचिन्तितमेव किञ्चिद् घटितम्। बर्लिननगरे अलैक्ज़ैण्डर फ़ॉन हुम्बोल्ट विश्वविद्यालयस्थेन प्राच्यविद्यासंस्थानेन भाषणार्थं निमन्त्रितोऽहं संस्थानभवनात् यदा भाषणस्थलं प्रेक्षागृहं (आडिटोरियम) प्रति प्रतिष्ठमान आसं तदा कश्चिज्जनो मामुपेतः। स प्राह भारतीयदूतावासा– दहमिति। भवतां कृते टैलेक्स इति नामा कश्चिद् विद्युल्लेखोऽस्ति। भारतशासनेन भवद्भ्योऽयं प्रापयितव्य इति तन्निदेशेनात्रभवत उपसन्नोऽस्मि। उक्त्वैतत्स पत्रखण्डमेकमावेष्टनकस्थं मह्यमार्पिपदपगतश्च। अहं प्रेक्षागृहं प्रति त्वरमाण आसमत आवेष्टनकोद्घाटने ममारुचिरासीत्। किञ्च, मद्भाषणं श्रोतुं तदानीन्तना विद्वन्मौलिमुकुटायमाना विपश्चिदपश्चिमाः – तादृशा विद्वांसो यन्नाम्ना वीथिरेकाभिज्ञायते – वाल्टररूबिनमहाभागाः, संस्थाननिदेशकाः


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

प्रो. वोल्फ़गांग मार्गनराथमहाभागा अन्ये च तत्समकोटिका विद्वांस उपस्थिताः स्युरिति प्रवृत्त्युपलब्ध्या किञ्चिद् भीतभीत इवासं मद्भाषणं तद्धृदयंगमं भवेद्वा न वा, तत्तेऽभिनन्देयुर्वा न वाऽहमस्मि शारद[१०३]स्ते तु विशारदा इति। परिसमाप्ते महाकविकालिदासविषयके मद्भाषणे विद्वद्भिश्च मुक्तकण्ठमभिष्टुते संस्थानभवनं प्रति निवर्तमानस्तस्य 'टैलेक्स' इत्यस्या[१०४]हमस्मार्षमावेष्टनकमुद्घाट्य तत्पठितुं च प्राक्रंसिषि[१०५]। मद्धर्मपत्नी मामनुगच्छन्त्युद्ग्रीवाऽपि तत्पठितुमैहिष्ट। तत्रेदमुट्टंकितमासीत् – भवन्नाम बैंकाकनगरेऽभ्यागताचार्यरूपेण कार्यकरणार्थं प्रस्तुतम्। अकालहीनं[१०६] कार्यभारोऽयमधिग्रहीतव्य इति। एतत्पठनानन्तरं चिन्तामहमापन्नः। नैवंविधो निर्णयः कर्तुं शक्यः सहसा। किञ्च, तातपादा अप्यत्र विषये परामृष्टव्याः स्युः। सर्वत्र तत्परामर्शेनैव तदनुमोदनेनैव च मया प्रवृत्तम्। एतद्विषये पुनः कथमेतत्सम्भवि। स्वदेशादतिदूरेऽस्मि। अद्यत्वे यानि दूरभाष–ईमेल इत्यादीनि सुकरसम्पर्कसाधनानि सन्ति तानि तदानीं नासन्। यथा साक्षात्सम्भाषणेन विषयः स्पष्टो भवति न तथा दूरलेख (= तार) द्वारा। भारतशासनं पुनः सद्य एवोत्तरमपेक्षते। एवं स्थिते किमहं करवाणीति न सद्यो बुद्धिं ममोपारुक्षत्। किञ्त्कालानन्तरं व्यवसायात्मिकां बुद्धिमापन्नोऽहमचिचिन्तं यद् भारतशासनं यं कमपि यत् किञ्चिदपि कर्तुं कथयति तत्र स्वीकृतिरुपलक्षणमात्रमेव। वस्तुतस्त्वयमादेश एव यः प्रत्येकं नागरेण[१०७] नागरिकेणाभ्युपपत्तव्यः। एनां बुद्धिमास्थितोऽहमपराह्णे दूतावासमभ्युपागां तदधिकारिभिश्च संगत्य तानवोचं सूचयन्तु भवन्तो भारतशासनं ममाभ्युपगमं तत्प्रस्तावस्येति। एवं कृते निश्चये यतो हि तदादेशा (भारतशासनादेशा) नुसारेण यथाशीघ्रं बैंकाकपुरे कार्यं प्रारब्धव्यमासीदतो ये देशा मया शर्मण्यदेशात्प्रस्थितेन गमिकर्मीकर्तव्या आसंस्तत्रावस्थितेः कालो मया लघूकृतः। यत्र दश दिनानि वासः कल्पयितव्य आसीत्तत्र सप्ताहमात्रावस्थितिः कल्पिता, यत्र सप्ताहो यापयितव्य आसीत्तत्र चतुर्णां दिनानां यापनं कल्पितम्। एवं योरूपीयं कार्यजातं यथाशीघ्रं परिसमापय्य

---

१०३ शारदशब्दः प्रत्यग्रवाची। लक्षणया सद्योगृहीतविद्योऽपरिपक्वबुद्धिरित्यर्थः।

१०४ अधीगर्थदयेशां कर्मणि (२.३.५२) इत्यनेन षष्ठी। अधीगर्थः स्मृत्यर्थः।

१०५ प्रोपाभ्यां समर्थाभ्याम् (१.३.४२) इत्यनेनात्मनेपदे लुङ्युत्तमपुरुषैकवचने रूपम्।

१०६ तदिदमकालहीनं विगतरोषचेतसा भवता .... आगन्तव्यमिति मालविकाग्निमित्र (पञ्चमांके पञ्चदशपद्यानन्तरवर्ति) गतप्रयोगानुसारेण प्रयोगः।

१०७ नागरेण विदग्धेनेत्यर्थः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

दिल्लीमहं प्रत्यावृत्तः। दिल्ल्यां मया बहु कर्तव्यमासीत्। दिल्लीविश्वविद्यालये कार्यरत इति ततः सम्बन्धतदवस्थकतापूर्वकम् अवकाशो[१०८] ग्रहीतव्य आसीत्। विदेशप्रवासार्थमावश्यकं संविधानकमपि कल्पयितव्यमासीत्। तत्सर्वं सम्पाद्याक्तूबरमासस्य १६७७ वर्षीयस्याहं सप्तमे दिवसे बैंकाकनगरं प्राप्तः।

## ७६

बैंकाकनगरे तदा 'कफ़्यूं' इत्याख्यो गमनागमनप्रतिरोधः प्रवृत्तोऽभूद् रात्रिकाले। प्रत्यूषे पञ्चवादनात्पूर्वं व्योमपत्तनाद् बहिरागमनं न शक्यमासीत्। यदाऽहं विमानाद् व्योमपत्तनमागतस्तदा भारतदूतावासादहमित्युक्त्वा कश्चन जन आवेष्टनकमेकं मह्यमार्पिपद् यस्मिन् सार्धद्विशती थाईमुद्राणां, बात[१०६] इत्याख्यानां वासगृहस्य (होटल इत्याङ्ग्ल्याम्) संकेतोऽपि पत्रखण्डे लिखित आसीद्यत्र च मया वस्तव्यमासीत्। आवेष्टनकमर्पयित्वा स जनोऽपगतः। अहं व्योमपत्तन एव प्रतीक्षारतः कालमयापयम्।

जाते पञ्चवादने व्योमपत्तनाद् बहिर्गन्तुमहं व्यवासिषम्।[११०] टैक्सीचालकमहं तत्पत्रखण्डमदर्शयं यत्र वासगृहस्य संकेतो थाईलिप्या लिखित आसीत्। स तदवाचयच्छिरश्चालनपूर्वकं च प्राह – 'होटल साकोन' इति। 'साकोन' इति कः शब्द इति तदानीं नाहमवेदिषम्। भवेदयं कश्चित् थाईशब्द इत्यहमतर्कयम्। पञ्चचत्वारिंशत्कलाभिरहं तत्'साकोन' वासगृहं प्राप्तः। तत्राङ्ग्लाक्षरैर्लिखितमासीत् Sakol इति। तदा मयाऽवबुद्धं संस्कृतशब्द एवायं सकल इति। अकारं प्राच्या ओकाररूपेणोच्चारयन्ति भारतेऽपि। तत्रापि तथैव। तद् वासगृहं विश्वविद्याल– यीयमासीत्। तदानीं विश्वविद्यालयो वासगृह– (होटलं) मपि सञ्चालयति स्म। कतिपयदिनावासार्थं मम व्यवस्था तत्रैव कृताऽऽसीद् विश्वविद्यालयेन। सार्धषड्वादनमासीद् यदाऽहं वासगृहस्थं स्वकक्षं प्रविष्टः सर्वविधौपचारिकता– निर्वहणात्परम्। सर्वरात्रं[१११] जागरैव[११२] ममाभूत्। वस्त्रपरिवर्तनादि कृत्वा यावदहं

---

१०८ लीव एण्ड लियन इति यदुच्यत आङ्ग्लभाषायाम्।

१०६ संस्कृतपत्रशब्द एवायम्। पकारः थाईभाषायां बकाररूपेणोच्चार्यते।

११० षो अन्तकर्मणि इत्यस्य लुङ्युत्तमपुरुषैकवचने रूपम्।

१११ अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः (५.४.८७) इत्यनेनाच्समासान्ते रूपम्। सर्वां रात्रिमित्यर्थः।

११२ जागर्तेरकारो वा इति वार्तिकेन अकारः। अपररूपं जागर्या इति।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

शय्यामधिशये तावद् दूरभाषघण्टिका निनदिता। 'अहमस्मि विसुधबुस्यकुलः चुलालौङ्कौर्नविश्वविद्यालये प्राच्यभाषाविभागे संस्कृतप्राध्यापकः। स्वागतकक्षेऽहं भवतः प्रतीक्षे। कल्यवर्तं सहैव स्वीकरिष्याव' इति वचो मम श्रोत्रशष्कुल्यावस्पृक्षत्। अयमहमागत[११३] एवेत्यहमवोचम्। तदा शय्योत्थायं[११४] वस्त्रपरिवर्तनं कृत्वा त्वरितगत्याऽहं स्वागतकक्षं प्रति प्रस्थितः। तत्र च विसुधबुस्यकुलेन संगतः। स मां बाहुभ्यां परिष्वज्य स्वागतमत्रभवद्भ्य इति मुहुर्मुहुरवोचत्। स मम पूर्वपरिचितः। किञ्चित्कालपूर्वमेव स भारतीयसांस्कृतिकसम्बन्धपरिषन्निमन्त्रणेन भरतभुवमागतो-ऽभून्मया चाभूत्संगतः। कतिचन होरा मिथः सम्भाषणमावयोस्तदा प्रवृत्तमासीन्मम गृहे। यदाऽहं थाईदेशमुपगतस्तदा द्वावेव तत्र मम परिचितावास्तामेकोऽयं विसुधबुस्यकुलोऽपरश्च चाङ्माईविश्वविद्यालयप्राध्यापकः पिचित अकनिच् इत्याख्यो यो दिल्लीविश्वविद्यालयतः पीएच्. डी. त्युपाधिप्राप्त्यर्थं दिल्लीमुपागतोऽभून्मन्निर्देशने च शोधकार्यं प्रवर्तितवान्।

## ८०

कल्यवर्तास्वादनकाले विसुधबुस्यकुलेन समासेन विभागपरिचयप्रदानपूर्वकं किं कार्यं मया तत्र कर्तव्यमिति निर्दिष्टम्। तत एव मया ज्ञातं यद् राजदारिका मयाऽध्यापयितव्येति। यदा तया स्नातकपरीक्षोत्तीर्णा तदा स्नातकोत्तराध्ययनं संस्कृते प्रवर्तनीयमितीच्छा तया प्रकटिता। तां लक्ष्यीकृत्य थाईदेशशासनेन भारतदेशशासनेन सह कृतः सम्पर्कोऽनुरुद्धं च यत्कश्चित् संस्कृताध्यापकोऽत्र प्रेष्यतामिति, यस्तामध्यापयेत्। यदा भवतां नाम भारतशासनेनास्मभ्यं सूचितं तदाऽहं प्रहर्षस्य परां कोटिं गतः। अहं भवद्भिः संगतोऽभूवम्। दिल्ल्यां कश्चित्कालो भवद्भिः सह मया यापित एवासीत्। भवतां वैदुष्यं वेदैव। थाईशासननियमानुसारेण यः कोऽपि प्राध्यापको वैदेशिकशासनेन थाईदेशेऽध्यापनार्थं प्रेष्यते तस्यानुमोदनं तद्विषयवरिष्ठप्राध्यापकेन यदि विभाग एक एव विषयोऽध्याप्यते तर्हि विभागाध्यक्षेण कर्तव्यं भवति। एतन्नियमानुसारेण यदा भवन्नाम मत्समक्षमागतं तदो[११५]ऽमिति मया स्वीकृतिः सपद्येव सूचिता। अत्रभवन्तश्च सम्प्रत्यस्मासु वर्तन्ते। किमतः प्रियतरं स्यात्।

---

११३ वर्तमानसामीप्ये वर्तमानवद्वा (३.३.१३१) इत्यनेन वर्तमानेऽपि भूतवत्प्रयोगः।
११४ अपादाने परीप्सायाम् (३.४.५२) इत्यनेन परीप्सायां (= त्वरायां) णमुल्।
११५ ओमाङोश्च (६.१.९५) इत्यनेन पररूपम्। तदा ओम् इतिच्छेदः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विसुधबुस्यकुलः स्नातकोत्तरमध्ययनं संस्कृतविषयेऽमेरिकास्थपेन्सिलवेनिया-विश्वविद्यालये प्रवर्तितवानिति आङ्ग्लभाषया स धाराप्रवाहेण वक्तुं शक्नोति न त्वन्यथाईजनवत्प्रयत्नेन।

विश्वविद्यालयवासगृहे त्रिचतुराणि दिनान्येव वस्तुमहं शक्त इत्यन्यत्र वासव्यवस्था मया कर्तव्याऽभूत्। दूतावासाधिकारिभिर्मया स्वयं च नाना गृहाणि तदर्थमन्विष्टानि दृष्टानि च परं भाटकस्याधिकत्वान्न तानि वासयोग्यानि मतानि। सीलोम रोड इत्यत्र स्विस गैस्ट हाउस इत्याख्यं वासगृहमेकमासीत् तद् विश्वविद्यालयान्नातिदूर आसीद् भाटकमपि च प्रतिकक्षं नाधिकमासीदतस्तत्रैव कल्पितो मया वासः। प्रथममहमेकाक्येव बैंकाकनगरं गतः। कुटुम्बकं दिल्लीमेवाध्यवात्सीदतो नासीद् बृहत्तरस्य द्विकक्षस्य त्रिकक्षस्य वा वेश्मनः (अपार्टमेण्ट् इत्यस्य) मत्कृते। एककक्षं वेश्मैव पर्याप्तमासीत्।

## ८१

विश्वविद्यालये तदानीं प्रत्येकमध्यापकस्य कृते पृथक् कक्षो नाभूत्। सर्वेऽपि पालिसंस्कृतविभागीयाः प्राध्यापका एकस्मिन्नेवातिविशाले कक्षे (आङ्ग्ल्यां हाल इत्याख्ये) उपविष्टा अभूवन्। किञ्चित्किञ्चिदन्तरेण तेषां कृते पृथक् पृथक् पटलानि (टेबल) आसन्। तदेकपार्श्वे आसन्दी अध्यापकानामुपयोगायापरपार्श्वे च द्वित्रा आसन्द्यश्छात्राणां वाऽन्येषामभ्यागतानामुपवेशनाय। यतः सर्वेऽप्येकस्मिन् कक्ष एवासन्नतः परस्परेण संलापाय पर्याप्तोऽवसरोऽलभ्यत। तेन मिथ आत्मीयताऽप्यजायत। विभागेऽन्येषु पालि–संस्कृतप्राध्यापकेष्वासन् श्रीविसुधबुस्यकुलो यस्य चर्चोपरिष्टात्कृता, इस्लामधर्मावलम्बित्वेऽपि संस्कृते कृतभूरिपरिश्रमा डा. प्राणीलपनिच् यया क्षेमेन्द्रकृतकलाविलासशोधकार्य–हेतोरमेरिकादेशस्य पेन्सिल्वेनियाविश्वविद्यालयात् पीएच्. डी. त्युपाधिः प्राप्तोऽभूत्, संस्कृते पालिभाषायां च लब्धप्रावीण्या वयसा कनिष्ठा तसनी सिंसकुल, विद्याभिधेयश्चीनभाषाध्यापकश्च। वयं सर्वेऽपि मधुरालापेन हासपरिहासेन च सुखं कालमगमयाम।

अस्मद्बृहत्कक्षं[११६] निकषैवैको भोजनालयः, कैन्टीन, इत्यास्त। तत्र मध्याह्ने किञ्चिद्भोज्यमप्यहमसेविषि। यद्यपि थाईदेशीयाः प्रायशो मांसाशिनस्तथापि शाकाहारिभिरपि मांसविरतं[११७] किञ्चिद् भोज्यं तदाहारगृहेषु लभ्यत एव। ओदनं तेषां मुख्य आहारस्तद्व्यञ्जनरूपेण शाकादि न न दुर्लभम्। दध्योदनमपि तत्र

---

११६ 'हाल' इत्याङ्ग्लभाषायाम्।

११७ शाकाहार इत्यर्थे मांसविरतशब्दः थाईभाषायां प्रयुज्यते जनेनाद्यापि।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

लभ्यते फाक्कार्द इतिसञ्ज्ञं भृष्टं शाकौदनमपि। फलानि तत्र सन्ति भारतीयफलेभ्योऽप्यधिकं स्वादूनि सरसानि च। तादृशास्तण्डुला अपि तत्र सन्ति संश्लेष[११८] प्रकृतयो ये वेणुसुषिरेषु गुडादिसंमिश्रणपूर्वकं प्रवेशिता मन्दाग्नौ परितापिताः सुषिरेभ्यो निष्कास्याम्रफलसहकारेण थुरियन्नित्याख्यस्थानीय-फलसहकारेण च भुज्यन्ते। तत्रत्यलोकस्तद् भोज्यमतीव रोचयते। सन्ति तादृशान्यपि फलानि तत्र यानि भारते न सन्ति। तेषु विशेषोल्लेखमर्हन्ति पूर्वोक्तं थुरियन्यस्य तीव्रगन्धोऽत्रत्यानुद्वेजयेद्यच्च सुतरां पित्तप्रकोपनत्वात्पित्तप्रकृति-भिर्वर्जनीयं स्याद् यद्यपि तद्बलवर्धकम्, उपरिभागे मुकुटाकृतिं बिभ्रन्मंकुट (संस्कृते मुकुट इति) इत्यन्वर्थनामधेयं बहिर्नीलम् (जम्बुवर्णं) अन्तश्च शुभ्रम् आयोडीननामकपौष्टिकतत्त्वप्रचुरम्, लाम याई इत्याख्यं लघुगोलाकारं बहिर्बभ्रुवर्णमन्तश्च श्वेतवर्णं माधुर्येण फलान्तराण्यतिशयानम् अन्तर्लीचीवदा-कृतित्वात्समानं परं फलांशस्य त्वग्विनाभाववशादास्वादन ईषत्काठिन्यहेतोः बहिस्तन्तुप्रचुरत्वाच्च तद्भिन्नम्, सोम् इत्याख्यं, नारंगतोऽधिकतरं बृहदाकारं कटुतन्तुपरिहारेणैवास्वादयोग्यम्। आम्राण्यपि तत्र सन्ति बहुविधानि। तेषु हौक् लुङ् नामकमाम्रफलमतीव स्वादु सर्वविधाम्रफलेषु राजानति[११९]।

भारते यथा चतुष्पञ्चप्रकारकाः शाका उपलभ्यन्ते तथा तत्र न। तत्र त्वधिकतरप्रकारकाः। शाकथाईदेश्याः[१२०] शाकसेवने रुचिं बिभ्रति। मांसं भुञ्जत इति शाकप्रयोगस्तेषु नास्तीति न। न केवलमिदमेव। तुलसीपत्रबहुलं तद्भोज्यम्। प्रायो नास्ति तद्भोज्यं यत्र तत्प्रयोगो न। स्वास्थ्याय[१२१]हितमिति तत्प्रयोगः प्रारब्धः स्यान्नाम।

मुद्गफल[१२२]मस्मद्देशे प्रायशः सेव्यते। भर्जनेन तदन्तर्गता त्वगनायासेन पृथक् कर्तुं शक्यते। थाईदेशे पुनस्तद् जले पच्यते। भ्राष्टमपि[१२३] तत् तत्रोपलब्धं भवति परमधिकतया तु जलपक्वमेव।

नारिकेलसेवनं तत्र द्विधा भवति। एकविधं भवति तत्कर्तयित्वा तद्रससेवनम्। अपरविधं भवति तज्जटाः पृथक्कृत्याग्नौ भृष्ट्वा[१२४] ततस्तद्विस्फोट्य तद्रससेवनम्। तत्तथा मधुरं भवति यथा प्रतीयते शर्करा तत्र मिश्रितेति।

---

११८ स्टिकी इत्याङ्ग्लभाषायाम्।

११९ सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्य इति वार्तिकेनाचारार्थे क्विपि अनुनासिकस्य क्विझलोः क्ङिति (६.४.१५)। इत्यनेन दीर्घत्वे रूपम्। राजेवाचरतीत्यर्थः।

१२० शाकप्रिया थाईदेश्या इत्यर्थः। अत्रशाकपार्थिवादिवत्समासः।

१२१ चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः (२.१.३६) इत्यनेन हितयोगे चतुर्थी।

१२२ मूंगफली इति भाषायाम्

१२३ भ्राष्ट्रे संस्कृतमित्यर्थः। संस्कृतं भक्षा (४.२..१६) इत्यनेन सप्तम्यन्तादण्विधानं संस्कृतेऽर्थे, संस्कृतं भक्ष्यं यदि तद् भवति।

१२४ भ्रस्ज पाके इत्यतः क्त्वाप्रत्यये रूपम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कतिपयदशकपूर्वं दुग्धदधिसेवनं थाईदेशे न प्रचलितमासीत्। सम्प्रति जनास्तद्बहुलतया सेवन्ते।

## ८२

मासो नाम व्यतीतः स्यान्मम बैंकाकमागतस्य यदा शिल्पाकरविश्वविद्यालयस्य कश्चित्प्राध्यापको यतः कुतोऽपि ममागमनप्रवृत्तिमुपलभ्य मां द्रष्टुं चुलालौङ्कौर्न–विश्वविद्यालयमुपेतः। स आह – भवन्तो भारतादत्र संस्कृतमध्यापयितुं समागता इति श्रुत्वाऽहमत्रभवत्सूपेतोऽस्मि। अस्मद्विश्वविद्यालये संस्कृताध्ययनं न भवति। अस्त्यस्मासु पुरातत्त्वविभागः – थाईभाषायां तदर्थे पुराणगतिशब्दः – यत्राभिलेखानामध्यापनं भवति – थाय्यभिलेखानाम्, कम्बुजाभिलेखानाम् इत्यादि। अस्माकमभिलाषो यद् भारतीयानां संस्कृताभिलेखानामध्यापनमप्यस्मद्विभागे भवतु। भवत्साहाय्यमेतदर्थं वयं प्रार्थयामह इति। उदारः कल्प इति मयोक्तम्। यदपि साहाय्यं विधातुं मम सामर्थ्यं स्यात् तद् विधास्याम्येव। एतदहमस्मिन् क्षण एव प्रतिशृणोमि। सर्वथा विषयेऽस्मिन् कृतक्षणाः सन्तु सन्त इति प्रसन्नेनान्तरात्मना–ऽहमवोचम्। अहमत्र संस्कृतस्य प्रचाराय प्रसाराय च समुपेतोऽस्मि। तदेव मेऽस्तीप्सिततमं कर्म। नाहमत्र धनोपार्जनायागतः। तत्तु यावदपेक्षं मय्यस्त्येव। प्रकृत्याऽपरिग्रहरुचिरहम्। यदपि द्रव्यं मयि वर्तते तच्छरीरधारणार्थं वा पुस्तकादिसंग्रहार्थं वाऽहं विनियुञ्जे। ततोऽधिकं नाहमपेक्षे। अध्यापयिष्याम्यभिलेखान् संस्कृतेनोपनिबद्धान् भारते समुपलब्धानत्रत्यच्छात्रान्। किञ्च, विचित्रोऽयं संयोगः। स्नातकोत्तरकक्षायामभिलेखशास्त्रमेवासीन्मम विशिष्टविषयः। तत्राहं कृतभूरिश्रमस्तत् सम्यग्वेद। प्राचीनलिपिपरिचयोऽपि ममास्ति। अत्रैनच्छास्त्राध्यापनायैव कदाचिद् भगवत्या नियत्या प्रेरितोऽहमभविष्यम्। को नाम नियतिकृतनियमरहस्यं वेद। प्रसादसुमुखेन मयाऽङ्गीकृते तच्छास्त्राध्यापने शिल्पाकरविश्वविद्यालये प्राच्यभाषाविभागे भारतीयसंस्कृताभिलेखाध्यापनं प्रारब्धम्। अहमुभयत्राप्यध्यापिपं चुलालौङ्कौर्नविश्वविद्यालयेऽपि शिल्पाकरविश्वविद्यालयेऽपि, यद्यपि तद् भूय आयासकरमभून्मत्कृते। द्वाविमौ विश्वविद्यालयौ परस्परेण बहुदूरे वर्तेते। एकत्राध्याप्यापरत्र गमने भूयानध्वाऽतिक्रान्तव्यो भवति। न केवलमिदमेव। वेतनं मया भारतसर्वकारपक्षत एकस्मिन् विश्वविद्यालयेऽध्यापनार्थमेवाध्यगम्यत। एवं स्थितेऽपि संस्कृतप्रचारैकचक्षुष्केण मया न केवलं नाम्नैवापितु कर्मणा च वाचा चापि सत्यव्रतेन भवितव्यमिति दुष्करं व्रतमूढम्। निर्व्यूढं च तद्यावत्कालमहं थाईदेशे स्थितिमचकलम्। एतेन थाईदेश्यानामहमभूवं बहुसम्मानभाक्। शिल्पाकर–


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विश्वविद्यालयस्य प्राच्यभाषाविभागपुस्तकालयः कालेन तद्विश्वविद्यालयेन मन्नाम्ना प्रख्यापितः। किं नामेतः परं वेतनमभविष्यन्मम परिखेदस्य।

## ८३

भारतीयसंस्कृताभिलेखाध्यापनमाध्यमेन संस्कृतं शिल्पाकरविश्वविद्यालये प्रवेशमलभत। यस्मिन् विश्वविद्यालये संस्कृतगन्ध्यध्यनमध्यापनं वाऽऽसीत्तस्मिन् सम्प्रति संस्कृताध्ययनकेन्द्रं समुल्लसति यद्धि आग्नेय[१२५]भूखण्डस्येदम्प्रथममेकमात्रं च संस्कृताध्ययनकेन्द्रम्। सम्प्रत्यत्र पीएच्. डी. इत्युपाधिं यावत् संस्कृताध्ययनं प्रचलति। स्नातकोत्तरकक्षापर्यन्तं नाना छात्राः संस्कृतं परिशीलयन्ति। ये मत्तः संस्कृतमधीतवन्तस्ते सम्प्रति तत्राध्यापकाः संवृत्ताः। केन्द्रनिदेशकपदमपि तेऽलंकृतवन्तो वाऽलङ्कुर्वन्ति वा। इदं पुनरतीव विस्मयावहं यत्संस्कृताध्येतृषु सर्वे थाईदेश्याः – थाय्यभिजना वा – एषु नैकोऽपि भारताभिजनः, यद्यपि भूयसी सङ्ख्या बैंकाकनगरे भारताभिजनानां जनानाम्। तेषां प्रपितामहा वा पितामहा वाऽन्ये वा बान्धवाः शताब्दीद्वयतो धनार्जनेच्छया देशमिममागन्तुं प्रारब्धा अत्रत्या एव जाताः। भारतस्य विभिन्नेभ्यः प्रदेशेभ्यस्ते समागताः, केचन पञ्चनदप्रदेशात्, केचन गुर्जरप्रदेशात्केचनोत्तरप्रदेशात्तत्रापि बड़हलगंज – सुलतानपुर – तहसीलतः, केचन – तेषां सङ्ख्याल्पीयस्येव – दक्षिणापथात्, केचन पुनः सिन्धुप्रदेशात्। प्रदेशभेदेन तेषां वृत्तिभेदोऽपि। पञ्चनदीयाः सिन्धुप्रदेशीयाश्च प्रायेण वस्त्रविक्रयकर्मणि तत्सेवन[१२६] कर्मणि वाऽऽत्मानं व्यापारितवन्तः, सिन्धुप्रदेशीयेषु नैके मणिमाणिक्यादिविक्रयणं जीविकाकृत्य बहुधनमर्जितवन्तः। गौर्जरा अपि तमेव व्यवसायमुपजीव्य सिन्धुप्रदेशीयवदाढ्यतरा जाताः। उत्तरप्रदेशीयाः सेवावृत्तिमेव प्रायश उपाश्रिताः द्वारपालादिरूपेण जीवितं यापयन्ति, केचन तेषु निम्नकोटिकं व्यापारमप्युपाश्रिताः। तेषु केचनैव धनिकाः शेषाः सामान्यकोटिकाः। पञ्चनदीया गौर्जराः सैन्धवा दाक्षिणात्याश्च कुटुम्बिजनैः पत्नीपुत्रादिभिः सह वसन्ति, उत्तरप्रदेशीयाः पुनः परिवारविनाकृता एव सन्ति प्रायशः। तेषां कुटुम्बिजनाः पत्नीपुत्रादयो भारत एव सन्ति। तांस्ते धनादि प्रेषयन्ति, तेन च तान् पुष्णन्ति, ग्रामस्थस्य गृहस्य परिष्कारमपि कारयन्ति,

---

१२५ दक्षिणपूर्व इत्यर्थे आग्नेयशब्द 'आखने' इत्युच्चारणभेदेनाद्यापि प्रयुज्यते थाईजनैः।
१२६ 'टेलरिङ्' इत्याङ्ग्ल्याम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विद्युत्कूपादिकमपि खानयन्ति, कृष्यर्थं क्षेत्रादिकमपि क्रीणन्ति, बैंकाकीयेन धनेन पुत्राणां पुत्रीणां भ्रातृव्यानामन्येषामपि स्वानां[१२७] ते शिक्षाव्यवस्थामपि कुर्वन्ति। शरीरेण ते बैंकाकमधिवसन्ति मनसा पुनर्भारतम्। भारते यद् घटते तत्र तेषामभिरुचिर्न तु थाईदेशे, यद्यपि तद्देशीयास्ते सम्प्रति सन्ति तन्नागरिकता- प्रमाणपत्रं वहन्तः। एतादृशी प्रवृत्तिर्न केवलमुत्तरप्रदेशीयानामेवापि त्वन्येषामपि भारतीयानाम्। अन्तरं केवलं तत्र कुटुम्बिजनसंवासासंवासयोरेव। सम्प्रति बहव उत्तरप्रदेशीया अपि कुटुम्बिजनैः पत्नीपुत्रादिकैः सह वस्तुं प्रारब्धाः। तेषामपत्यजातं थाईविद्याशालेषु सम्प्रत्यधीते। कतिपयवर्षपूर्वमध्ययनार्थं ते तद् भारतमेव प्रैषयन्, तेषु य आढ्यतरास्ते दूनस्कूल – सनावरस्कूल इत्यादिप्रतिष्ठितविद्याशालेषु स्वपुत्राणामध्ययनव्यवस्थां कुर्वन्ति स्म। ते तत्रच्छात्रावासादिषु वासं कलयन्ति स्म। सम्प्रति ते तान् आस्ट्रेलियादेशेऽमेरिकादिदेशे वाऽध्ययनार्थं प्रेषयन्ति।

बैंकाकनगरे तादृशं विपणिद्वयमप्यस्ति यत्र विक्रयार्थं भारतीयमेव पण्यजातं दरीदृश्यते। विक्रेतारोऽपि तत्र भारतीयाः क्रेतारोऽपि च। भारतीयपण्यपरिपूर्णाः सन्ति तत्रापणाः। भारतीया भोजनालयास्तत्र भारतीयानि व्यञ्जनानि परिवेविषन्ति, भारतीया देवमूर्तयः, भारतीयं शाटी (साड़ी) परिधानमन्यच्च बहुविधं वस्तुजातं तत्र सुलभमस्ति। तद्विपणिद्वयमस्ति सम्फैंङ् इति फहुराट् इति च। तल्लघुभारतमिति वक्तुं शक्यम्।

बैंकाकनगरे शिष्य (सिक्ख) धर्मानुयायिनोऽपि सन्ति पर्याप्तसंख्याकाः। तेष्वनेके नामधारिणः गोलाकारश्वेतोष्णीषधराः श्वेतपरिधानाः। तेषु चान्येषु शिष्येषु चायं विशेषो यदन्ये शिष्या दशैव महापुरुषान् गुरुत्वेनाभ्युपयन्ति दशमगुरोर्गोविन्दसिंहस्य वचसि बद्धश्रद्धाः। चतुर्ष्वपि तस्य सुतेषु ब्रह्मभूयं गतेषु तदुत्तराधिकारिरूपेण न तद्वंश्येषु कोऽप्यवशिष्टो यो गुरुपीठमध्यास्तुं शक्नुयाद्, अन्यस्मिंस्तादृशी शक्तिर्भवेद्वा न वेति सम्यग् विचार्य सदसद्विवेकचणेन विचक्षणेन गुरुणाऽऽदिष्टाश्शिष्याः पञ्चमगुरुणाऽर्जुनदेवेन संकलितं ग्रन्थमेव गुरुं कलयतेति न मत्परं शरीरिणा केनाऽपि गुरुणा भाव्यम्। तन्मतमास्थिताः शिष्या ग्रन्थ एवास्माकं गुरुरिति प्रतिपन्नाः, आदरार्थकेन साहबशब्देन तं संयोज्य 'गुरुग्रन्थसाहब' इत्येवंरूपेण तं व्यपदिशन्ति। गुरुगोविन्दसिंहशिष्येषु केचनासंस्तादृशा अपि ये तदादेशं नाभ्युपागमञ्शरीर्येव गुरुर्भवितुमर्हतीति कमप्यन्यं महापुरुषं गुरुरित्यभ्युपागुः। तद्गुरुपरम्पराऽद्यापि प्रचलति। प्रलम्बकेशश्मश्रुकूर्चादिकं तेऽपि धारयन्ति किन्तु ग्रन्थ एव गुरुर्नान्यः कश्चनेति नाभ्युपयन्ति। किञ्च, अन्यशिष्यवन्न ते मांसाशिनः।

---

१२७ बन्धूनामित्यर्थः। ज्ञात्यर्थत्वेनात्र स्वमज्ञातिधनाख्यायाम् (१.१.३५) इत्यनेन सर्वनामसञ्ज्ञाभावः।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

शुद्धशाकाहारमेव ते सेवन्ते। तेषां स्वकीयानि पूजागृहाण्यपि सन्ति यत्र तद्धर्मनिष्णातास्तद्धर्मानुयायिनः सन्मार्गमुपदिशन्ति। बैंकाकनगरे नामधारिण एतेऽन्यशिष्यधर्मावलम्बिभ्य आढ्यतराः।

## ८४

बैंकाकनगरमध्ये भव्यस्वरूपं गुरुद्वारमिति तत्सम्प्रदाये नामभाक् पूजागृहमप्यस्ति यच्छ्रद्धालवो जना अहमहमिकयोपयान्ति। अन्यगुरुद्वारवत् प्रतिदिनं तत्र भोजनं साध्यते, सर्वेभ्यश्च जनेभ्योऽन्यधर्मावलम्बिभ्योऽपि, 'श्रद्धया देयम्' इति भावनया परिवेष्यते।

हिन्दूमन्दिराण्यपि सन्ति तत्र त्रिचतुराणि तेषु सीलमरोडस्थितं दाक्षिणात्यैः स्थापितं मरियम्मन्मन्दिरं प्राचीनतमम्। अन्यमन्दिरेषु विष्णुमन्दिरं, देवमन्दिरम्, आर्यसमाजमन्दिरम् इत्यादीनि सन्ति। देवमन्दिरविषये प्रसंगान्तरवशात् पूर्वं चर्चा कृतैव। सम्प्रति विष्णुमन्दिरविषय आर्यसमाजविषये च किञ्चिद् वक्तुमिच्छामि। प्रथमं तावत् विष्णुमन्दिरविषये।

बैंकाकप्रवासकाले मम विष्णुमन्दिरेण जातः कश्चनान्तरङ्गसम्बन्धः। कञ्चित्कालमहं तत्स्थेऽतिथिनिवास उषितोऽपि। तत्रत्यः पुरोहित आसीच्छ्रीहरिहरशुक्लः। तत्पत्नी गिरिजा तत्सुताः शेषनाथराजेशरमेशाः सुताऽऽशा च मन्दिरमेवाध्यवात्सुः। मद्भोजनं गिरिजयैवासाध्यत। साऽतीवातिथिवत्सला तच्छुश्रूषां स्वं कर्तव्यमित्यभ्युपापद्यत। तत्साधितं भोजनं विशेषतः पराठेति नामधेया करपट्टिका मह्यमतीवास्वदत। एवमेव च शाकादीनि व्यञ्जनानि। मन्दिरमिदं प्रमुखतयोत्तरप्रदेशीयैर्निर्मितमासीत्। तत्प्रबन्धका अपि तत्प्रदेशीया एव। उत्तरप्रदेशेऽपि विशेषतो गोरक्षपुरीय–बड़हलगंज–सुल्तानपुर तहसीलाभिजनास्ते। बहवस्तेषु द्वारपालादिसेवावृत्तिं वा लघु–लघु व्यवसायं वा समुपाश्रिताः।

मन्दिरनिकट एव संकीर्णरथ्यायामेकस्यां श्रीहरिहरज्येष्ठभ्राता पण्डितविद्याधरशुक्लः स्वकुटुम्बेन सह वसति स्म। स थाईदेशे प्रधानहिन्दू–पुरोहितपदभाक् परमसम्मानभाक् च सर्वेषामपि थाईदेशवासिनां भारताभिजनानां पञ्चनदीयानां सैन्धवानां गौर्जराणां च। कर्मकाण्डनिपुणोऽसौ ज्यौतिषशास्त्रेऽपि परं प्रावीण्यं गतः। मन्दिरस्थस्य मम तेनापि कश्चित्प्रगाढः स्नेहसम्बन्धोऽजनिष्ट। संस्कृतज्ञोऽसौ कञ्चित्कालं वाराणस्यां संस्कृतमध्यगीष्टापि। थाईभाषामपि स सम्यग्वेद। सा तस्य कृते मातृभाषावदेव। एषैव स्थितिः श्रीहरिहरकुटुम्बकस्यापि।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

मन्दिरस्थेन मया महच्छरीरकष्टं सोढम्। मेरुदण्डाधोभागे निरन्तरं पीडा प्रावर्तत। तन्निवारणार्थं दीर्घं कालं यावन्मयोष्णजलभस्त्रा[१२८] तत्र स्थापनीयाऽभूत्। तदैवाहमवक्रतया स्थातुं वा गन्तुं वाऽशकम्।

मन्दिरस्थातिथिशालीये स्वकक्षे बद्धासनेन मया भूयान् कालः शास्त्रशीलनादावेवायाप्यत। तेन बहुशः प्रातःकालिक्यां सायंकालिक्यां चारार्तिकायां नाहं समगंसि। तदुपलक्ष्यैकदा गिरिजा मां प्रत्यबोधयद् भवद्भिर्मन्दिरकार्य–क्रमेष्ववश्यं समुपस्थातव्यमिति। तेन परस्परेण स्नेहो वर्धते। मया तद्वचो हृदि कृतम्। यावन्तं कालमहं मन्दिरे स्थितिमचकलं तावन्तं कालमहं तत्पर्यपालयम्। तेन मन्दिरप्रबन्धकानामन्येषां च भगवद्भक्तानामहं जातः परमस्नेहभाजन–मादरभाजनञ्च।

विष्णुमन्दिरैकपार्श्वेऽस्त्यार्यसमाजमन्दिरम्। तत्रापि बहुवारमहं गतः, हवनादिकार्यक्रमेषु सम्मिलितः प्रवचनानि च मया नैकधा प्रस्तुतानि। तदानींतनेन सचिवेन रामपलटपाण्डेयेन कालेन यातो मे प्रगाढः स्नेहसम्बन्धः। योऽद्ययावदक्षुण्ण एव। यदा स दिल्लीमायाति, अहं वा बैंकाकनगरं गच्छामि तर्ह्यवश्यं स मय्युपैत्यहं वा तं द्रष्टुं गच्छामि।

बैंकाकनगरेऽन्यासु धार्मिकसंस्थासु विशेषोल्लेखमर्हति गीताप्रचार–प्रसारपरायणैः स्वामिहरिहरपादैः सम्प्रति ब्रह्मभूयं गतैः स्थापितो गीताश्रमः।

बैंकाकनगरे सन्ति स्वामिपादानां नाना शिष्याः। श्रीमद्भगवद्गीतायाः प्रचारः सर्वत्र भवत्वित्यासीत् तेषां दृढः संकल्पः। ते स्वशिष्यान् गीतापाठाय प्रैरिरन्। तत्प्रेरणया प्रतिशनिवासरं गीताश्रमे तद्भक्ताः समवयन्ति। तत्समवायः सत्संग इति नाम्नाभिधीयते। श्रीमद्भगवद्गीताया द्वादशाध्यायस्य सम्पुटसहितं पाठं तच्छिष्याः कुर्वन्ति। पाठानन्तरं स्वामिपादानां–यदि तेषां तत्र समुपस्थितिरभूद–थवाऽन्यस्य कस्यापि गीताविषयकं प्रवचनं प्रावर्तत। तत्प्रसंगेन संस्कृताध्यापकोऽहं गीतारहस्यमहं वेदैवेत्यहमपि तत्र प्रवचनार्थं निमन्त्रितोऽभूवम्।

हिन्दूधर्मसभेत्याख्यया समित्या संस्थापिते पूर्वनिर्दिष्टे मन्दिरे ये भारताद्यतिवराः प्रवचनकर्तारश्च बैंकाकमायान्ति तेषां प्रवचनान्यप्यायोज्यन्ते। तेषां भोजनावासव्यवस्था मन्दिरेणैव क्रियते। काले काले होलिका–दीपावली–जन्माष्टमीत्यादिपर्वमहोत्सवानामप्यायोजनं भवति। मन्दिरे यत्र तत्र भित्तिषु नानाभक्तवराणां कबीर–रविदास–तुलसीदास–सूरदासादीनां चित्राणि सन्त्युत्कीर्णानि। मन्दिरे रविवासरे समुपस्थितानां श्रद्धालूनां जनानां तज्जीवन–

---

१२८ Hot water bottle इत्याङ्ग्ल्याम्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तदुपदेशादिपरिचयो भवत्विति बुद्ध्या साम्प्रतिकैर्हिन्दूधर्मसभाप्रधान-पदमधितिष्ठद्भिः श्रीचमनजोशिमहाभागैर्निरचायि यत्प्रत्येकं भक्तवरमाश्रित्य केनापि प्रवचनं समुपस्थापयितव्यम्। उदारः कल्प इति सर्वैरपि सोत्साहं तन्निर्णयोऽनुमोदितः। एतेन समुपस्थितानां भक्तवरजीवनपरिचयोऽपि भवति, अस्माभिरपि तादृशः सत्पन्थाः[१२९] समाश्रयणीय इति प्रेरणाऽपि ततः प्राप्ता भवति। दिव्यानि महापुरुषचरितानि नाम। तैरुत्पथ[१३०] प्रस्थितोऽपि जनः सत्पन्थानं[१३१] प्रत्युन्मुखीक्रियेतैव।

एष मे स्वो भावो यद् यस्मिन् कस्मिन्नपि विषये प्रवचनार्थं निबन्धप्रणयनार्थं वा निमन्त्रितो भवामि, किञ्चिन्नूत्नमेव तत्र प्रतिपिपादयिषामि। गीताविषये बहुभिरुक्तम्। परस्सहस्रा निबन्धा विद्वद्भिर्निबद्धा, ग्रन्था विरचिता, भाष्याणि च कृतानि। नाना भाषाभिरयं ग्रन्थोऽनूदितः। तत्र किं नाम नूत्नं भवेत्? तथाऽपि तस्यात्यन्ताभाव एवेति न शक्यते वक्तुम्। सम्भवेदिदं यदहं स्वोपज्ञं पश्यामि तदन्येन केनापि प्रतिपादितं भवेत्। यतो नाहं तज्जानामीत्यतः स्वोपज्ञमित्येव मे तदवभासेत। द्वित्रैरुदाहरणैरिदं स्पष्टीकरोमि।

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन।।

अत्र प्रतियोत्स्यामीति पाठः। न तु योत्स्यामीति। अत्र कश्चन गूढोऽभिसन्धिः। योत्स्यामीत्युक्ते युद्धं तेभ्यो दास्यामीत्यर्थः। प्रथमं ते वा मयि प्रहरेयुरहं वा तेषु। युद्धकाल उभयमपि सम्भवति। प्रतियोत्स्यामीत्युक्ते प्रथमं तेषां मयि प्रहारस्तद्वारणार्थं मम तेषु प्रहार इत्यर्थः पर्यवस्यति–counterfight इति यदुच्यत आङ्ग्ल्याम्।

आचार्यद्रोणोऽर्जुने सुतरां स्निह्यतीति तस्मायभिद्रुह्यति स्म दुर्योधनः। यद्यपि तस्य धनुर्वेदनैपुण्यवशात्स तेन पाण्डवान् योधयितुं सेनाप्रमुखत्वे स्थापितस्तथापि तस्य मनसि तं प्रति मन्युरासीदेव। अतो न कमप्यवसरं स्वकीयमसन्तोषं प्रकटयितुं स त्यजति स्म। धृष्टद्युम्नेन व्यूढां पाण्डवसेनां द्रोणो दृष्टिगतां करोत्विति प्रसंगे स तादृशीं शब्दावलिं प्रयुङ्क्ते याऽन्यथाऽन्विता सती तत्हृत्स्थं द्वेषभावं तज्जनितां चावमाननामाविष्करोति–

पश्यैतां पाण्डुपुत्राणामाचार्य! महतीं चमूम्।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता।।

---

१२९ न पूजनात् (५.४.६९) इत्यनेन ऋक्पूरब्धूःपथामानक्षे (५.४.७४) इत्यनेन प्राप्तस्याचः समासान्तस्य निषेधः।

१३० ऋक्पूरब्धूःपथामानक्षे (५.४.७४) इत्यनेनाचि समासान्ते नस्तद्धिते (६.४.१४४) इत्यनेन च टिलोपे रूपम्।

१३१ न पूजनात् (५.४.६९) इत्यनेन समासान्तनिषेधः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अत्र सामान्योऽर्थः – हे आचार्य, धीमता तव शिष्येण द्रुपदपुत्रेण व्यूढां पाण्डुपुत्राणामिमां महतीं चमूं पश्य। पदानामन्यथा योजनयाऽत्र कश्चिदन्योऽप्यर्थो हेयबुद्धिप्रेरितः समुन्मिषति, येन विषमेऽपि कुटिलमतिर्दुर्योधन आचार्यं वाग्बाणैर्विध्यन्निवावभासते। तथा हि–हे पाण्डुपुत्राणामाचार्य! धीमता तव शिष्येण द्रुपदपुत्रेण व्यूढामिमां महतीं चमूं पश्य। अत्र द्रुपदपुत्रेण, तव शिष्येणेति पदत्रयं साभिप्रायम्। तव शिष्योऽप्यस्मद्विरुद्धमाचरतीति ध्वनिः। एवं द्रुपदस्य पुत्रोऽसाविति तं प्रति संकेतो येन द्रुपदेन पूर्वमासीत् सो(द्रोणो)ऽपमानितः। स एव त्वया शिष्यत्वेनाभ्युपेत इति तं प्रति निपुणमधिक्षेपः।

यदाऽर्जुनः सेनयोरुभयोर्मध्ये श्रीकृष्णेन स्थापिते रथे स्थितः स्वप्रतिपक्षे स्थितान् गुरुजनान्बन्धुजनांश्चापश्यत्तदा तस्य हृदयं विषाद आक्रामत्। स न योत्स्य इति गोविन्दमुक्त्वा तूर्ष्णीं बभूव। तदा गोविन्देन स प्रतिबोधितो यद् धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते। दृढमुक्तश्च– तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः। ततः परं प्रवृत्ता तस्योपदेशवाग्धारा। तमुपदेशं श्रुत्वाऽर्जुनस्य विषादोऽपगतः। स्मृतिश्च तेन लब्धा। तदा स दृढस्वरेणावोचत् – स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव। गीतायाः प्रारम्भो भवति उत्तिष्ठ इति पदेनोपसंहारश्च भवति स्थितोऽस्मीति पदाभ्याम्। पदत्रयान्तराल एव सर्वाऽपि गीताऽस्ति समाहिता। विषादत्यागो नवस्फूर्तेश्चोन्मेष एव गीतोपदेशः।

एवं बहुधा मया गीता व्याख्याता। मम व्याख्या लोकम्पृणेति परं मे सन्तोषमजीजनत्।

'गीतासन्देश' इति नाम्नी पत्रिकाऽपि प्रकाश्यते गीताश्रमेण यत्र गीताश्रमसदस्यानां मुख्यतयाऽन्येषामपि च गौणतया गीतासम्बद्धा निबन्धाः प्राकाश्यं यान्ति। तत्र नैकधा मम च मद्धर्मपत्न्याश्च निबन्धाः प्रकाश्यं गताः।

पौर्णमासीदिने गीताया अखण्डपाठोऽपि यस्य कस्यापि गीताश्रमसदस्यस्य गृहे समायोज्यते स्म। पाठानन्तरं च तेन प्रसाद इति रूपेणाभिख्यायमानस्य सहभोजस्य व्यवस्थाऽपि क्रियते स्म। गीताश्रमसदस्येषु स्वामिपादानां परमभक्ता आसन् बैंकाकस्थसंयुक्तराष्ट्रसंघकार्यालयसेवानिवृत्ताः श्रीमन्तो महेशचन्द्रा–ग्रवालास्तद्धर्मपत्नी राजरानी, रत्नव्यापारजुषस्तन्वानीहोतवानीहिंगोरानीप्रभृतयः सिन्धुप्रदेशाभिजना अन्ये च केचन कलाकृतिविक्रेतारः कृष्णा नरूला, तत्पतिस्तद्भ्राता चेत्येवमादयः। स्वामिपादा बैंकाकप्रवासकालेऽग्रवालगृह एव स्वकीयमावासमकल्पयन्। हिन्दूधर्मसभेत्याख्यया समित्या संस्थापिते पूर्वनिर्दिष्टे मन्दिरे ये भारताद्यतिवराः प्रवचनकर्तारश्च बैंकाकमायान्ति तेषां प्रवचनान्य–प्यायोज्यन्ते। तेषां भोजनावासव्यवस्था मन्दिरेणैव क्रियते।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विश्वविद्यालये विसुधबुस्यकुलमहाभागैः सह सविस्तरं नाना विषयेषु चर्चा प्रावर्तत। आंग्लभाषां धाराप्रवाहेण वक्तुं ते क्षमा आसन्। थाईदेशविषये तच्चर्चया बहुमया ज्ञातम्। मास एवाभून्मम थाईदेशं प्राप्तस्य। एकस्मिन् दिने राष्ट्रियग्रन्थ- संग्रहालयं (नैशनल लाइब्रेरी) थाईभाषायां 'हौङ् समुद्' (हौङ् = गृहम्, समुद् = समुद्रः) इत्याख्यं द्रष्टुमहमुपेतः। तत्र पाण्डुलिपिविभागाध्यक्षा आचार्यछूसक् दीपयगसौर्न महाभागा मया दृष्टाः। ते मया पृष्टाः—आचार्यवर्याः ! अस्ति भवतां ग्रन्थसंग्रहालये थाईदेशविषयकः कश्चन संस्कृतेनोपनिबद्धो ग्रन्थः पाण्डुलिपिरूपो वा प्रकाशितो वा? तैरुक्तम् — नेति। तदा किञ्चिद्विहस्य तैरुक्तम् — आचार्यवर्याः, किमिति भवन्त एव न तं विरचयन्तु। तदिदं परिहासविजल्पितमिति तदानीं न मया किञ्चिदप्युक्तम्। अपराह्णे स्वकीयमावासं परावृत्तेन मया कयाऽप्यन्तःप्रेरणया तद्विषये प्रवर्तित आत्मा। अनायासेनैव—हेलयैव—मया तदानीं पञ्च पद्यानि विरचितानि। परेद्यवि सा कक्षाऽऽसीद्यत्र महाराजकुमार्याऽध्ययनार्थमागन्तव्यमासीत्। तत्र विचित्रा व्यवस्था। अध्यापनं होराद्वयं यावत् प्रचलति न तु भारतवत्पञ्चा–शत्कलामात्रमेव होरां यावदेव वा। कदाचिद्धोराद्वयादप्यधिकं कालं तत्प्रवर्तते। तद्धि विषये[१३५]ऽधि। पद्यव्याख्यायां प्रवृत्तायां प्रथमपंक्तेर्द्वितीयपंक्तेर्वा व्याख्यायां पर्यवसितायां होराद्वयमितः कालः समाप्तिमेतीति नाध्यापकेन तत्र विरामः समाश्रयणीयो भवेत्। स तु स्यात्सम्पूर्णपद्यव्याख्यानन्तरमेव। एतेन कदाचिद्धोराद्व–यादप्यधिकः कालोऽध्यापने व्यतियापितो भवति। तेन यत्राध्यापकस्यायासो भवति तत्राध्याप्यमानस्यापि। तस्य तु भूयस्तरामायासः स्यात्। तेन हि सर्वोऽपि विषयो बुद्धौ स्थापनीयो भवेत्। तच्च न सुकरम्, विशेषतो वैदेशिकानां कृते, ये सर्वथा तद्भाषानभिज्ञा यदीयं वाङ्मयं तेऽधीयते। तच्छब्दस्वरूपं तैरवगन्तव्यं भवति, तदर्थोऽपि च।

कक्षाध्ययने पर्यवसिते मया महाराजकुमारी निवेदिता — भवद्देशविषये काव्यमेकं विरचयितुमिच्छामि संस्कृतेन, नैकाऽपि कृतिस्तद्भाषायामस्तीति कृत्वा, यत्र तदितिहासः तद्दर्शयीयानि स्थलानि, तत्रत्यो राजवंशः, तत्रत्यं वैशिष्ट्यमित्यादिविषया निरूपिताः स्युः। अपरेद्युः सायाह्न एव काव्यप्रणयनप्रारम्भो मया कृतः। पञ्च पद्यानि मया विरचितानि। यदि भवती श्रान्ता न स्याद् भवत्यां च कालः स्यात्तर्हि तान्यहं भवतीं श्रावयितुमिच्छामि। तयोक्तम् — अवश्यं श्रावयन्तु भवन्तः। अहं श्रोतुमुत्सुकाऽस्मि। मया तानि पद्यानि तां सस्वरं भारतीयपद्धत्या श्रावितानि। तानीत्थमासन् —

---

१३५ अधिरीश्वरे (१.४.९७) इत्यनेन 'अधि' इत्यस्य कर्मप्रवचनीयसञ्ज्ञायां यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी (२.३.९) इत्यनेन सप्तमी।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अस्त्येशियानामनि सुप्रसिद्धे
द्वीपे विशालेऽतिविशालकीर्तिः।
आग्नेयदिङ्मण्डलमौलिभूतो
देशोऽतिरम्यो भुवि थाइलैण्डः।।१।।
श्यामेतिनामाति पुराणमस्य
ख्यातं पुराणादिषु यद्विहाय।
थाईतिजात्यध्युषितत्वहेतो-
र्यं थाइलैण्डं कथयन्ति लोकाः।।२।।
राजा प्रजारञ्जनमादधानः
सर्वात्मना बुद्धवचःप्रमाणः।
अतुल्यतेजःपदवीं दधानः
प्रशास्ति यं भूमिबलाभिधानः।।३।।
अकृष्टपच्यं बहु यत्र सस्यं
रम्यास्तथा शाद्वलभूमिभागाः।
मन्दं प्रवान्तश्च यदीयवाता
आगन्तुकानां रमयन्ति चेतः।।४।।
देशस्य तस्यास्ति भृशं विशाला
कण्ठे भुवः शुभ्रतरेव माला।
ऐश्वर्यसौन्दर्यविलासधानी
बैंकाकनाम्नी खलु राजधानी।।५।।

पद्यानि श्रुत्वा परां प्रसत्तिमासेदुषी महाराजकुमारी प्राह – पूर्णतां नयन्तु भवन्तः काव्यमिदमहमेतत्थाईपद्यैरनुवदिष्यामीति। सैषा मत्कृतेऽभूदतर्कितोपनता प्ररोचना। थाईदेशमहाराजकुमारी स्वयं काव्यस्यास्य थाईपद्यानुवादं विधित्सतीति न केवलं द्विगुणितेनापितु सहस्रगुणितेनोत्साहेनाहं काव्यरचनायां प्रवृत्तः। कालेनेदं परिसमाप्य तस्यायिदं[१३६] समार्पिपं तया चेदं न तु पद्यैर्यथा तयोक्तमासीदपि तु गद्येनानूदितम्। कालान्तरे 'ईस्टर्न बुक लिंकर्स' इत्याख्यया प्रकाशनसंस्थया तन्मत्कृताङ्ग्लानुवादसहचरितं राजकुमारीकृतथाय्यनुवादसहचरितं च प्रकाशितम्। जयपुरस्थैः श्रीरामानन्दाचार्यसंस्कृतविश्वविद्यालयशिक्षाशास्त्रविभागाध्यक्षैराचार्य-साम्बशिवमूर्तिभिस्तत्तेलुगुभाषयाऽनूदितं प्रतिपद्यं वर्ण्यमानविषयवस्तुप्रदर्शकचित्र-सवलितं काव्यप्रकाशनपद्धतेर्नूत्नावताररूपतां बिभ्रत्स्वेनैव व्ययेन प्रकाशितम्।

---

१३६ तस्यै इदम् इतिच्छेदः।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विंशयत्युत्तरशतं पद्यानि यदि सन्ति काव्ये तर्हि तावत्संख्याकानि चित्राण्यपि तत्र सन्तीति वैलक्षण्यमस्य।

## ८६

थाईदेशसम्बद्धकाव्यरचनाविषये किञ्चिदन्यदप्यत्रोपस्थापयितुमिच्छामि। ये मम सुहृदः संस्कृतेन मां पत्राणि प्रेषयन्ति तान् प्रतिवचोऽहं संस्कृतेनैव प्रेषयामि, यदि ते गद्येन पत्राण्युपनिबध्नन्ति तर्हि गद्येन, यदि पद्यैः तर्हि पद्यैः। यदि ते हिन्द्या वाऽऽङ्ग्ल्या वा पत्राणि प्रेषयन्ति परन्तु संस्कृतरचनाकुशलास्तर्हि हिन्द्याङ्ग्लभाषामयानां तत्पत्राणां प्रतिवचोऽहं कदाचिद् गद्येन संस्कृतमयेन पद्यैर्वा तथाविधैः प्रेषयामि। एष मे स्वो भावः प्रकृतिनियतत्वादकृतकः। पद्यबद्धानां पत्राणाम् अधिकांशतः– न तु गद्यबद्धानां – प्रतिलिपयो कतिपयवर्षपूर्वं यावन् मया स्वहस्तेन कृताः। तत्पश्चात् प्रारब्धायां चित्रलिपिपद्धत्यां तानि पत्राणि चित्रलिपीकारितानि। कालान्तरे भागद्वयात्मकेन पत्रकाव्यमिति सञ्ज्ञकेन ग्रन्थरूपेण तानि प्रकाशितानि। उभयोरपि भागयोः पद्यसंख्या सार्द्धत्रिसहस्रमिताऽस्ति। तेषु पद्येषु तान्यपि पद्यानि सन्ति यानि जन्मदिवस–विवाह–सम्मानोपलब्ध्याद्यवसरे वर्धापनारूपेण तत्तत्सम्मेलनोद्घाटनभाषणादिरूपेण वा प्रणीतानि। द्वितीयभागे तान्यपि पत्राणि सन्ति यानि विद्वद्भिर्मह्यं प्रेषितानि। एवंरूपेण विचित्रोऽयं पद्यमयपत्रसंग्रहः संस्कृतवाङ्मये मन्य इदम्प्रथम एव।

## ८७

अस्मिन् पद्यमयपत्रसंग्रहे भूयसी संख्या तेषामेव पत्राणां यानि भारताद् बहिः स्थितेन मया स्वबन्धुजनेभ्यः प्रेषितानि। विदेशस्थितस्य जनस्य स्वदेशाद् दूरस्थितोऽहमिति स्वानां[१३७] स्मृतिर्मनः प्रायो मथ्नाति, यत्तेन विदेशे दृश्यते वाऽनुभूयते वा तत्तान् बोधयितुमपि मनस्त्वरते न केवलं दुःखमेव संविभक्तव्यं भवति, सुखमपि च, अनुभूतिसम्भारोऽपि च। स्वेषु स्वेषु[१३८] कृष्णलाला मेऽतीव प्रियाः। ते मम पूर्वच्छात्रा अपि सहकर्मिणोऽपि। संस्कृतेन गद्यपद्यरचनायां तेषां कश्चनानितरसाधारणोऽधिकारः। बहुसंख्याकानि पत्राणि मया तेभ्यः प्रेषितानि।

---

१३७ स्वमज्ञातिधनाख्यायाम् (१.१.३५) इत्यनेन सर्वनामसंज्ञाभावे रूपम्।

१३८ बन्धुजनेष्वित्यर्थः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तेऽपि संस्कृतपद्यैरेव प्रतिवचो मां प्राहैषुः। यदाऽहं बैंकाकं प्राप्तस्तदाऽहं १०.१. १६८६ दिने तान् पत्रं प्रैरिरं यत्र मयोक्तं यदहं सम्प्रति बैंकाकनगरेऽस्मीति। अन्यान्यविषयचर्चाप्रसंगे मयोक्तं यदत्रत्येन चक्रिराजवंशप्रवर्तकेन 'प्रथमो राम' इति नाम्ना ख्यातेन — वर्तमानराजवंश्याः सर्वेऽपि राजानो राम इति स्वकीयमूलतो भिन्नं नामान्तरं बिभ्रति, प्रथमो रामो द्वितीयो राम इत्यादि। साम्प्रतिको नृपालो भूमिबलोऽतुल्यतेजा अस्ति नवमो रामः — रामकथा रामकियन्निति नाम्नी[१३९], (संस्कृतरूपमस्य शब्दस्यास्ति रामकीर्तिरिति) स्वभाषया गीता।

बुद्धयोद्फेति नामासीत्तस्य विद्वन्महामणेः।
रामगाथां स्ववाचा यो जगौ कविधुरन्धरः।।१५।।
रामकीर्तिरितिख्यातं तत्काव्यमतिविस्तृतम्।
नाना सहस्रसङ्ख्याकैर्निबद्धं हृदयङ्गमैः।।१६।।
पद्यरूपै (= प्रशस्तैः पद्यैः) रामगाथामवान्तरकथागतैः।
जोषयत् सुतरां रुच्यैरधिलोकं विराजते।।१७।।

तदनन्तरं मयोक्तं यत् तत्काव्यं पाठं पाठं तद्रसं च पायं पायं न मे तृप्तिः प्रजायत इति। कृष्णलालमहोदयानपि कलया तद्रसं पाययितुं कृतो मया प्रतिश्रवः। तमेव प्रतिश्रवं परिपालयता स्वकीये ४.३.१६८६ दिने प्रेषितेऽन्यस्मिन्पत्रे मयोक्तं यन्मूलकथा तु रामकीर्तौ (रामकियन् इत्यत्र) वाल्मीकिरामायणवदेव,[१४०] परं तत्र स्वपक्षतो नाना कथानकानि तत्रात्मीयभावेन संयोजितानि यानि किञ्चिदन्यदेवास्याः स्वरूपं प्रथयन्ति। एतदनन्तरं मयोक्तं यदस्या मूलरूपं तत्र संयोजितानि कथानकानि चाश्रित्य नवरूपरम्यां रामगाथां गातुं मम मनस्त्वरत इति। तदनन्तरं २०.३.१६८६ दिने प्रेषिते द्विचत्वारिंशत्पद्यात्मके पत्रे नूत्नसंयोजितं हिरन्तयक्षोपाख्यानं बेञ्जकय्युपाख्यानमित्युपाख्यानद्वयं मया वर्णितम्। तदनु पत्रव्यवहारोऽवरुद्धः। पद्यमाध्यमेन यत्काव्यप्रणयनं प्रारब्धं तत् स्वतन्त्रतया, न तु पत्राङ्गत्वेन प्रासरत्। न मया बृहत्कलेवरकाव्यरचनं स्वप्नेऽपि चिन्तितमासीत्। यदा शतचतुष्टयी मया पद्यानां रचिता तदा डा. कृष्णलालं ३.६.१६८६ दिने पत्रमेकं प्रेषितं यत्रोक्तं यत्षष्टिर्वा सप्ततिर्वा पद्यानि भूयो विरच्य काव्यमिदं

१३९ केषाञ्चिद्विदुषां मतेन रामकियन्निति रामाख्यानशब्दस्य परिवर्तितं रूपम्। परं तेषां संख्याल्पीयस्येव। बहुसङ्ख्याकास्तु शब्दोऽयं मूलतो रामकीर्तिरेवासीदिति मन्वते।

१४० एकश्लोकिरामायणमिति यदुच्यते। तत्र सा कथा सङ्ग्रहेणेत्थं निरूपिता—
वालीनिर्दलनं समुद्रतरणं लंकापुरीदाहनं
पश्चाद्रावणकुम्भकर्णहननमेतद्धि रामायणम्।।
आदौ रामतपोवनादिगमनं हत्वा मृगं काञ्चनं।
वैदेहीहरणं जटायुमरणं सुग्रीवसम्भाषणम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पूर्णतां नेष्यामीति। किञ्च, अस्य नाम थाईरामायणकथामञ्जरीति मया चिन्तितमिति। यावन्त्यपि पद्यानि मया रचितान्यभूवंस्तावद्भ्योऽपि तदवधि मयाऽनुभूतमपूर्णा थाईकथेति। भूयोऽपि पद्यरचनाऽत्रापेक्ष्यत इति। अस्तु तर्हि, सहस्रं पद्यानि रचयिष्यामि थाईरामकथा– साहस्रीति च काव्यस्य नाम करिष्यामि, उपदेशसाहस्रीत्यादिवत्। परं यदा सहस्रं पद्यानि रचितानि तदाऽप्यनुभूतं यदपूर्णा कथेति। तदा पद्यबन्धबन्धनं विहाय यावद्भिरेव पद्यैः कथेयं पूर्णतां यायात्तावन्त्येव रचयिष्यामीति संकल्पमहमारूढः। तदा परःसहस्रपद्यात्मकं पञ्चविंशतिसर्गबद्धं काव्यं प्रादुरभूत्। तदद्भुतमिवाभूत्। यदस्य थाईनाम तेनैवेदं कीर्तितं भवत्विति श्रीरामकीर्तिमहाकाव्यमित्यस्य नाम मया कृतम्। थाईभाषायां महाकाव्यकृते 'महाकाब' इति शब्दः प्रयुज्यते। सोऽयं महाकाव्यमिति संस्कृतशब्द एव। रामकियन्निति रामकीर्तिः। अतः श्रीरामकीर्तिमहाकाव्यमिति नाम थाईभाषयाऽपि संवदति संस्कृतभाषयाऽपि च।

## ८८

श्रीभगवच्चरितमत्र गीतमिति धन्यमात्मानं कलयामि। भगवताऽत्र कर्मणि वृत इति नाहं सन्देह्मि। श्रीभगवच्चरितमपि स एव वर्णयितुं शक्नोति यं भगवान् वृणीते। सत्यमेवाह श्रुतिः – यमेवैष वृणुते तेन लभ्यः। अन्यथा कथं मादृशो मन्दो जनः कर्मण्यस्मिन् प्रवृत्तिमान् स्यात्। पुण्यात्मान एव तत्र क्रमन्ते। अनन्तो हि भगवान् अनन्ताश्च तत्कथाः[१४१]। थाईरामकीर्तिरपि रामकथैव, रामकेर इति कम्बुजकथाऽपि रामकथैव, ब्रह्मदेशीये रामथग्यन् – रामवत्थुरिति कथे अपि रामकथैव, लाओदेश्या फ्रलक् फ्रलाम् इति रामकथैव। सर्वा इमाः कथा रामकथा एव। उपाख्यानभेदात्, परस्परेण भिन्नाः सर्वास्ता रामकथा एवेत्यभिन्ना रामकथारूपे सागरे निमज्जन्ति –

यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम्।
सर्वदेवनमस्कारः केशवं प्रति गच्छति।।

सर्वोऽप्येशियाभूखण्डो रामकथाऽऽप्लावित एव। सत्यमेवोक्तं केनापि पाश्चात्येन विदुषा – यदि सम्पूर्णस्यैशियाद्वीपस्य काऽपि कथा तदीयेत्यभिधानभाग् भवितुमर्हति सा नाम रामकथैव। अस्या एव विविधानि रूपाणि सर्वत्र नयनयोरयनं यान्ति। वाङ्मयेऽप्येषा, चित्रकलायामप्येषा, अभिनयेऽप्येषा, पुत्तलिकानृत्येऽप्येषा लोककथास्वप्येषा। भगवता प्राचेतसेन मुनिनाऽस्या विषये सहस्राब्दीः पूर्वं यदुक्तमासीत् तत्पूर्णरूपेण चरितार्थतां गतम् – रामायणकथा लोकेषु प्रचरिष्यति।

---

१४१ हरिअनन्त अरि कथा अनन्ता इति हिन्द्याम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

भारतीयरामायणतस्तत्र प्रमुखघटनास्वस्ति पर्याप्तमन्तरम्। सन्ति तत्र नाना तादृशान्याख्यानान्युपाख्यानानि च यानि भारतीयेषु रामायणेषु[१४२] नोपलभ्यन्ते। थोपलभ्यन्तेऽपि, तर्हि भूयसा वाल्पीयसा वान्तरेणैव। उदाहरणरूपेण कानिचन तत उद्ध्रियन्ते।

## ८६

रामकथाप्रारम्भ एव तत्रान्यया दिशा भवति। चक्रवालपर्वते स्थितो हिरन्तयक्षनामा कश्चिदसुरो देवेष्वन्याय्यमाचरति स्म। तदत्याचारकदर्थिता देवा ईश्वरमुपा-गुरात्मरक्षां च तं प्रार्थयाञ्चक्रिरे। नारायणस्तन्नाशे समर्थ इतीश्वरस्तं सस्मार, स्मृतमात्र एव च स तमुपाससाद तदाज्ञया च तमसुरमायोध्य तं निजघान। तं निहत्य निजालयं क्षीराम्बुधिंस प्रत्याजगाम। प्रत्यागतश्च पद्मे शयानमेकं शिशुं स ददर्श। तत्क्षणमेव स तं दोर्भ्यां परिगृह्येश्वरमुपससाद तस्मै च तं समर्पयामास। ईश्वरस्तस्मायनोमतन्निति नाम ददौ पृथिव्या आद्योऽयं राजा भवत्विति चादिदेश। ईश्वरादेशेन महेन्द्रस्तत्कृते राजधानीं निवेशयामास। मध्येमार्गं तेन संगतानाम-छन्नावीदाहयुगाग्रयागसञ्ज्ञानामृषीणामाद्याक्षरमुपादाय तद्राजधान्याययोध्येति नाम च दत्तवान्। तस्यैवानोमतन्नाम्नो राज्ञो दशरथ इति पुत्रोऽभूत्तस्य च राम इति।

एतत्सहचरितमपरमप्युपाख्यानं थाईरामायण इत्थमस्ति– राज्ञो दशरथस्य तिस्रो महिष्य आसन् परं नैकस्यामपि सुतं स लेभे। तदा ऋषेः कलैकोटस्य (भारतीयरामकथानुसारेण ऋष्यशृंगस्य) साहाय्येन स पुत्रीयामिष्टिमाहर्तुमियेष। तदिष्ट्याहरणात्पूर्वं स ऋषिर्भगवन्तमीश्वरं परामर्ष्टुं कामयाञ्चक्रे तदर्थं च स कैलासमुपजग्मिवान्। तस्मिन् काले ब्रह्मविष्ण्वाप्तवराणां दैत्यानां त्रिलोक्यां महानुपद्रव आसीत्। ऋषिरीश्वरमूचे यद्यदि नारायणो दशरथपुत्ररूपेण भुवमवतरेत्तर्हि लोकस्य प्राणरक्षा स्यात्। तस्मिन्नेवमुक्तवत्येवेश्वरो नारायणं स्मृतवान्। स्मृतमात्र एव च नारायणस्तत्रोपतस्थे। रक्षसां विनाशाय भवान् भुवमवतरत्वितीश्वरेणोक्ते स उवाच यद्यदि तदीयाः शंखचक्रगदा अपि अनन्तनागेन

---

१४२ भारतेऽपि नाना रामायणानि आनन्दरामायणम्, अद्भुतरामायणम् इत्यादीनि संस्कृते, कृत्तिवासरामायणमिति बंगभाषायां, माधवकन्दलीरामायणमिति असमभाषायां, तुलसीरामायणमिति तद्रचयितृनाम्ना ख्याततरं रामचरितमानसमिति अवधीभाषायां, कम्बन् प्रणीतं तन्नाम्नैव ख्यातं कम्बन्रामायणमिति तमिलभाषायाम्, विश्वनाथसत्यनारायण-प्रणीतं रामायणकल्पवृक्षमु इति तेलुगुभाषायाम् — इत्यादीनि।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

लक्ष्म्या च सहिता भुवमवतरेयुस्तर्हि सोऽपि भुवमवतर्त्तुं सन्नद्ध इति। तथास्त्विवतीश्वरेण प्रोक्ते नारायणो रामरूपेण, चक्रं भरतरूपेण, अनन्तनागो लक्ष्मणरूपेण, गदा शत्रुघ्नरूपेण, लक्ष्मीश्च सीतारूपेण भुवमवतीर्णाः।

## ६०

सीताया जन्मापि थाईरामायणे विचित्ररूपेण वर्णितमस्ति। पुत्रेष्ट्यर्थम् ईश्वरानुमत्यै कलैकोट ऋषिस्तमुपसन्न आसीदिति पूर्वमुक्तमेव। ईश्वरेणानुमतिः प्रदत्तेत्यपि च। अनुमतिकाल ईश्वरेणोक्तमासीद्यद् प्रवृत्ते यज्ञे यज्ञकुण्डात् कश्चन दिव्यपुरुषश्चतुरोऽन्नपिण्डान् कर आददानः प्रकटीभविष्यति। तदानीमेव दक्षिणदिशातः कश्चित् समुत्पत्यान्नपिण्डार्धमाच्छिद्योत्पतिष्यति। तदन्नपिण्डार्धं तेन रावणाय समर्पितम्, रावणेण च तन्मन्दोदर्यै दत्तं यदशित्वा सान्तर्वत्नी सञ्जाता कालेन कन्यकामेकां च प्रसूतवती। प्रसूतमात्रैव सा कन्यका त्री रावणो हन्यतामित्युवाच। तच्छब्दः पित्रोर्न केनापि श्रुतः। लक्षणपरीक्षार्थं सा कन्यका रावणेन विभीषणाय दत्ता। लक्षणानि परीक्ष्य तेनोक्तम् — अन्यन्तमशुभान्यस्या लक्षणानि, रक्षःकुलविनाशायैषा कल्पिष्यत इति। तच्छ्रुत्वा त्रस्तेन रावणेन तद्विषये यदुचितं स्यात्तद् भवान् अनुतिष्ठत्विति स उक्तः। तेन परित्यागस्तस्या उचित इति बुद्धया सा कुम्भे निक्षिप्ता कुम्भश्च नद्यां प्रवाहितः। प्रवहन् कुम्भस्तत्स्थानं प्राप्तो यत्र राजर्षिर्जनकस्तपश्चरणाय स्नानार्थं तदुपसन्न आसीत्। कुम्भस्तद्दृष्टौ पतितः। यावत्कुम्भमुद्घाट्य स पश्यति तावत्सद्यः प्रसूता कन्यकैका तद्दृष्टिमापतति[१४३]। तपोविघ्न एतस्याः पालनपोषणाभ्यां भवेदिति कुम्भमुखं पिधाय स कुम्भं कस्यापि वृक्षस्य मूले निखातवान्, तपश्चरणे चात्मानं व्यापारितवान्। अतिक्रान्तानि षोडश वर्षाणि तपश्चरणप्रवृत्तस्य तस्य। तदा राजधानीं प्रति गमनेच्छा तस्य मनसि जागरिता। तदा तस्य मनसि तत्कुम्भस्य स्मृतिरुदिता। सर्वमपि स्वकीयं सैन्यं तेन तदन्वेषणार्थमादिष्टम्, न चाभूत्कथमपि कुम्भोपलब्धिः। तदा स्वयमेव जनको नृपालो 'हलं धृत्वा समुद्यतो भूमिविकर्षणेऽभूत्'। तदा तत्कालमेव—

प्रकटो घटोऽभूत्
तन्मध्य आसीच्च विलोभनीया

१४३ यावत्पुरानिपातयोर्लट् (३.३.४)


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अध्यासती पंकजपत्रपंक्तिं
दिव्यस्वरूपा खलु कन्यकैका।।
गण्डच्छविन्यक्कृतपुण्डरीका–
ममूं विशालायतपक्ष्मलाक्षीम्।
हेमद्युतिं चन्द्रमरीचिगौरीं
दृष्ट्वा जना विस्मयमभ्युपायन्।।

यतः सा लांगलकृष्टसीतातः समुद्भूताऽऽसीदतः सीतेति तस्या नाम बभूव जनकश्च तस्याः पितृरूपेण ख्यातिं जगाम।

## ६१

रावणस्य जन्मापि थाईरामायणे विचित्ररूपेणैव वर्णितम्। पूर्वजन्मनि स नन्दकाख्यो देवयोनिरभूत्। कैलासशैले सेवकत्वेन नियुक्तः स महेश्वरं द्रष्टुमुपागतानां सुराणां पादप्रक्षालनं करोति स्म। सुरास्तच्छीर्षकेशोद्धरणेनात्मानं विनोदयन्ति स्म। तत्तस्य दुःखाकरभभूत्। दुःखभरभरार्दितोऽसौ महेशमुपगम्य प्रार्तथत। स्वदुःखसंनिवृत्यर्थं स तं वरमयाचत। स वरोऽभूत् – यं कमप्यहमंगुल्या निर्दिशेयं स प्रमीतः पतत्विति। तथास्त्विति प्रोक्तं महेशेन। तद्वराल्लब्धशक्तिर्नन्दकस्तत्पश्चात् प्रभुदर्शनार्थमुपेतं परिहासवशाच्च तस्मिन्नन्याय्यं व्यवहरन्तंयं कमपि देवमंगुल्या निरदिक्षत्स च व्यसुः पपात। तेन त्रस्ताः कदर्थिताश्च देवा महेशमुपायंस्तद्विनाशं च तं प्रार्तथन्त। देवानां करुणां दशां वीक्ष्य करुणावरुणालयो भगवान् नारायणं सस्मार। स्मृतमात्र एव स तमुपतस्थौ। उपस्थितं च तमीश्वरस्तं नन्दकनिर्जयद्वारा देवरक्षां विधेहीत्युवाच। ततः सम्मोहनमप्सरोरूपं धृत्वा स नन्दकनृत्यकाले यां मुद्रां दधार तामेव स्मराभिभूतो नन्दकोऽपि। नृत्यरतोऽसौ स्वकरांगुलिं शीर्षोन्मुखीमकरोत्। तमनुकुर्वन् नन्दकोऽपि तथैव चकार। येन स्वकीयांगुलिः स्वं प्रति तेन कृता ततो भग्नकायः स पपात। अनुबभूव चच्छलितोऽस्म्यनेनेति। तमुपालभमानः स उवाच न त्वया निन्द्यं पन्थानमाश्रितवता साधु समाचरितमिति। तच्छ्रुत्वा नारायणेनोक्तं यद्येवमस्ति तव धीस्तर्हि तादृशमहं विधानं विधास्यामि येन जननान्तरे त्वं दशाननो विंशतिबाहुकश्च जनिष्यसेऽहं च जनिष्ये द्विभुजैकशीर्ष एव। स एव नन्दको जननान्तरे रावणरूपेण प्रजातो नारायणश्च श्रीरामरूपेण। श्रीरामरूपेण नारायणेन स रावणरूपो नन्दको हतः। पूर्वजन्मनि अंगुलिमात्मशिरसि कृत्वा भग्नकायः सन्नारायणेन स हतोऽभूत्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

## ६२

रामकथाया उपसंहारोऽपि थाईरामायणेऽन्यथैव वर्णितः। प्रतिवर्षमीश्वरेण कैलासपर्वते देवसभाया अयोजनं क्रियते। तत्र देवैः सृष्टिप्रपञ्चे यद् जातं वा जायते वा तस्य विवरणं प्रस्तूयते। शततमं वर्षमितीश्वरादेशवशात्कैलासशैले देवसभाऽऽसी– दायोजिता। तत्रेन्द्रादिभिर्देवैः सूचितं यत्सर्वत्र वार्तमस्ति, रामेण जिता राक्षसा मूषकवद् बिलेषु प्रविष्टाः। परं यद्वशात्सर्वत्र शान्तिः प्रसृता स श्रीरामः सुतरामशान्तः। तेन भगवांस् तादृशं कञ्चिदुपायं चिन्तयतु येन तस्य मनसोऽशान्तिरपेयात्, स्वस्थचित्तश्च स भवेदिति। देवोक्तिं श्रुत्वेश्वरेण श्रीरामोऽयोध्यातः सीता च पाताललोकादानाय्येताम्। प्रथममीश्वरेण श्रीरामो निर्भर्त्सितो यथास्थितिमजानतैव तेन सीतावधः समादिष्टः, पुनर्हनुमन्मुखेन स्वमृत्युं प्रख्याप्य सीता वञ्चिता, एवमेव श्रीराममृत्युवृत्तं श्रुत्वाऽयोध्यां प्राप्तायाः सीताया निर्गम उपरुद्ध इति। तदनु समादिष्टो राम उपरिनिर्दिष्टस्यापराधत्रयस्य हेतोः सीतां क्षमां याचस्वेति। तदादेशेन श्रीरामेण क्षमा याचिताऽपि। भगवतेश्वरेण रामं स्वीकुर्विति प्रेरिताऽपि सीता तस्यास्थिरचित्तत्वात्तं स्वीकर्तुं न मनो बबन्ध। तदेश्वरेण मत्प्रसादरूपेण स्वीकुरु राममित्युक्ता सा तं स्वीकर्तुमभ्युपजगाम यद्रामस्य हृदि हर्षप्रकर्षं ववर्ष। ससीतः सोऽयोध्यापुरीं प्रत्याजगाम पौरैरभिनन्द्यमानः। तत्पश्चान्नाना यज्ञानाहरन्सोऽतिविमलां कीर्तिमवाप सुखं चायुःशेषं निनाय।

थाईरामायणे बेञ्जकय्युपाख्यानं, सुवर्णमत्स्योपारव्यानं, मलिवग्गब्रह्मोपाख्यानं रावणात्मोपाख्यानं, नीलहनुमद्विग्रहोपाख्यानं लंकोपद्रवोपाख्यानमित्यादीनि नानोपाख्यानानि सन्ति यानि भारतीयेषु रामायणेषु नोपलभ्यन्ते। यान्युपलभ्यन्तेऽपि तत्राप्यस्ति स्तोका वा भूयसी वा भिदा[१४४]। तद्भिदाया मूलान्वेषणे प्रवर्तितः कैश्चिद् भारतीयै रामकथाविद्भिरात्मा। साफल्यं चाप्यलम्भि। सुदीर्घोऽयं विषयः पृथग्रूपेण चर्चामपेक्षते।

## ६३

श्रीरामकीर्तिमहाकाव्यसम्बद्ध एवायं विषय इतीममप्यत्रोपस्थापस्थापयितुमिच्छामि। महाकाव्यप्रणयनकाले किञ्चिदपूर्वमेव घटितम्। गिरिणदीप्रवाह इव पद्यानि स्वत

---

१४४ वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपञ्चैव हलन्तानां यथा वाचा निशा दिशा।।
इति भागुरिमतेनात्र प्रयोगः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

एव निःसृतानि। नानावृत्तोपपादकानि नानावृत्तोपनिबद्धानि तानि स्वतःप्रकाशान्यासन्। न तत्र ममायासः कलयाऽप्यभूत्। सम्पूर्णपंक्तेः, तत्रस्थपदस्य, पदानां तु का कथा, कुत्रापि मात्रायाः परिवर्तनमपि नापेक्षितमभूत्। यतः कुत्रापि संशोधनं पदपरिवृत्त्यादिरूपं मात्रापरिवृत्त्यादिरूपं वा न मया कृतमतो यो मदीयो मूलपाठः स एव परिष्कृतः पाठोऽभूत्। तद्रचनाऽनपेक्षितेति न तत्र प्रवर्तितो मयाऽऽत्मा। टंकणाय तत्सज्जमास्त। तच्च बैंकाकनगरे न सम्भवीति काव्यपाण्डुलिपिर्मया भारतं प्रति प्रेषणीयाऽऽसीद् येन टंकिता सा मुद्रणसौविध्याय मुद्रणालयाय दीयेत। यदा सर्वमिदं चिन्तयन्नेवाहमासं तदा केनापि प्रसंगेन बैंकाकस्थाया यूनेस्कोसंस्थाया अध्यक्षा मद्गृहानुपेताः। तैः सह प्रवृत्तायां नानाविषयिण्यां चर्चायां मयोक्तं यन्मया थाईरामकथामाश्रित्य महाकाव्यमेकं प्राणायीति। तच्च परिष्कारानपेक्षमिति न तत्र कलयाऽपि परिवृत्तिमहमचीक्लृपं तेन यो मे मूलपाठः स एव मे परिष्कृतः पाठ इति बैंकाकनगरे टंकणासौविध्यात्तमेव भारतं प्रेषयितुमिच्छामि। स च डाकद्वारैव शक्यः स्यात्। तदा परिहासमुखेनोक्तं मया यदि डाकाव्यवस्थावशाद् ग्रन्थपाण्डुलिपिरस्थाने स्थापिता स्यात्तर्हि ग्रन्थ एव लुप्तः स्यात्। तच्छ्रुत्वाऽत्यन्तमुद्विग्नास्तेऽभाणिषुः—अप्रतिहतममंगलम्। नैवं भवद्भिः कदाप्येवं करणीयम्। भवन्तो मत्कार्यालयमायान्तु। यूनेस्कोव्ययेनाहं यावदिच्छं पाण्डुलिपेरस्याः चित्रप्रतिलिपीः कारयिष्यामि। टंकणार्थमपि चित्रप्रतिलिपिमेव भवन्तो भारतं प्रेषयन्तु। मूलग्रन्थो भवत्स्वेव तिष्ठतु, विनैव पदपरिवर्तनं, न केवलं पदपरिवर्तनमपितु मात्रापरिवर्तनमपि, कथमेतादृशः पञ्चविंशतिसर्गात्मको बृहत्कलेवरो ग्रन्थः प्रणेतुं शक्यत इत्यत उत्तरकालिकानाञ्जनानां प्रत्यायने प्रमाणमुपस्थापयितुम्। तथैव च मया कृतम्। मूलग्रन्थोऽद्यापि मयि तिष्ठति। प्रकाशितोऽयमिति न मया स विसृष्टः। अन्ये ग्रन्थास्तु स्वहस्तलिखिता मयि न सन्ति, प्रकाशने सति तेषामनपेक्षितत्वात्। एतद्ग्रन्थविषये तु न मया तथा प्रक्रान्तम्, यूनेस्कोनिदेशकवचो हृदये धारयता।

## ६४

कालान्तरे यदोपरिनिर्दिष्टः प्रसंगो मयोत्कलीयेभ्यो वाग्मिनां धुरि कीर्तनीयेभ्यो भगवद्भक्ताग्रगण्येभ्यः सम्प्रति ब्रह्मभूयं गतेभ्यो डा० गौरीकुमारब्रह्ममहाभागेभ्यो निवेदितस्तदा ते योगनिद्रां गता इव कांश्चित्क्षणान् नेत्रे निमील्य पुनश्च ते उन्मील्य मन्द्रगम्भीरया वाचा मामवादिषुः — आचार्यवर्याः ! नायं ग्रन्थो भवद्भिः प्रणीतः। काचिन्महती देवताऽत्रभवत्सु प्रविष्टा। सैवात्रभवद्भ्यो ग्रन्थमेनं


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

प्राणाययत्[१४५]। तद्वचो मयाऽनेकधोद्धृतम्। सत्यं सत्योद्या तद्गीः। नैतादृशा ग्रन्थाः सामान्यबुद्धिविभवप्रभवाः। दिव्यशक्तिरेव तत्र हेतुः। वाल्मीकिरामायणीयमेवैकं प्रसंगमत्र प्रमाणत्वेनोपन्यस्यामि। स चेत्थमस्ति – ऋषेर्वाल्मीकेराश्रमे भगवान् ब्रह्माऽवतरति। आदिशति स ऋषिं प्रणयतु भवाञ्श्रीरामचरितवर्णनात्मकं ग्रन्थमिति। क्व दिव्यं श्रीरामचरितं क्व चाहं मन्दमतिः प्राकृतो जनः। न मे सामर्थ्यं तच्चरितगाने इति ऋषिर्वक्ति। भगवान् ब्रह्मा तदानीं भणति – ऋषे! त्वं मयैतदर्थं वृतोऽसि। मच्छन्दादेव ते ब्रह्मन् निर्गतेयं सरस्वती – मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समा इति नूत्नेन केनाऽपिच्छन्दसामवतारेण परस्ताच्छ्लोकाख्येनोपनिबद्धा। मत्प्रसादाच्छ्रीरामस्यान्तरंगतमा अपि प्रसंगास्ते प्रत्यक्षा भविष्यन्ति। व्यापारय स्वमेतादृशे पुण्यकर्मणि। उक्त्वैतदन्तर्धिं गच्छति भगवान्। वाल्मीकेश्च श्रीरामायणप्रणयनं प्रारब्धं भवति। एतत्प्रसंगविषये तर्कैकचक्षुष्का विषयोपप्लुत–चेतस्का दिव्यं रहस्यमसंविदानाः[१४६] केचित् त्वरिता वक्तारो भवन्ति मिथक[१४७]मिदमिति चेति प्रकीर्तयन्ति। तदिदं मिथकमनेकशो मयाऽनुभूतम्। साक्षाद् ब्रह्मणोऽवतरणं न वेत्यन्यदेतत्। ऋषौ दिव्यशक्तेराविर्भाव इत्येवात्र निर्गलितोऽर्थो योऽत्र कथामाध्यमेन प्रस्तुतः। भगवता वाल्मीकिनाऽपि रामकथा प्रस्तुता मयाऽपि। तेन यथा श्रुताऽनुभूता च, मया यथा थाईदेशे प्रसिद्धा। वाल्मीकिकृते रामायणे वाल्मीकिः स्वयमपि काञ्चन भूमिकां निर्वहति, थाईरामायणे न तथा। उभयत्रापि रामकथा, परं स्वरूपं तस्याः परस्परेण भिन्नम्। नानाख्यानान्युपाख्यानानि थाईरामायणे नूत्नतया संयोजितानि। तानि तत्रत्यां रामकथां वाल्मीकिवर्णितरामकथातो व्यवच्छिन्दन्ति। भेदेऽप्यभेदः। उभे अपि – वाल्मीकीया च थाईदेशीया च, रामकथे इत्यभेदः। श्रीरामचरितमेवोभयत्रापि वर्णितम्। श्रीरामकथा–प्रस्तुतिकाले वाल्मीकौ दिव्यशक्तेः प्रादुर्भाव एवं थाईरामकथावर्णनकाले यदि ममापि तथा भवति तर्हि न किमप्याश्चर्यम्। भगवतः श्रीरामस्यैवानुग्रह एषः। मन्महाकाव्यस्य स्व–स्व–भाषानुवादेऽहमहमिकया प्रवृत्तं नाना विद्वद्भिरित्यत्रापि भगवतोऽनुग्रह एव हेतुः। अन्तःप्रेरणैव तान् विदुषोऽत्र कर्मणि प्राचूचुदत्। नान्योऽत्र हेतुः।

---

१४५ Professor, you did not write this work. Some divinity positioned itself in you and made you write it.

१४६ समो गम्यृच्छिभ्याम् (१.३.२६) इतिसूत्रान्तर्गतविदिप्रच्छिस्वरतीनामुपसंख्यानम् इति वार्तिकेन सम्पूर्वकस्य विदेरादादिकस्यात्मनेपदम्।

१४७ Myth इत्याङ्ग्ल्याम्

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

## ६५

कास्काभिः स्वदेशविदेशभाषाभिरनूदितमिदं महाकाव्यमिति प्रसक्तानुप्रसक्तः सम्प्रति विषयः। प्रथमोऽस्यानुवादः कर्णाटभाषया जातः। स च कृतो बैंगलोरनगरस्थ आर्. वी. इन्स्टिट्यूट निदेशकेन डा. सम्पतूर रंगनाथमहाभागेन यो बैंकाकनगरे मूलामलसचदेव–अमरनाथसचदेवप्रतिष्ठानाभ्यां मूलसंस्कृतपाठांग्लानुवादसहचारेण प्रकाशितः। द्वितीयोऽनुवादोऽस्यासमभाषया। स च गुवाहाटीस्थया डा० सुव्रता बरुआ इत्याख्यया विदुष्या कृतः। स मूलसंस्कृतपाठं विनैव गुवाहाटीस्थया 'बुकहाइव' इत्याख्यया प्रकाशनसंस्थया प्रकाशितः। तृतीयोऽनुवादोऽस्य विजयवाटिका (विजयवाड़ा) स्थमारिस स्टेलामहाविद्यालयसंस्कृतप्राध्यापकेन डा धूलिपाल रामकृष्णमहाभागेन कृतः। मूलसंस्कृतपाठसहचरितः स तिरुपतिस्थ–श्रीवेंकटेश्वरवैदिकविश्वविद्यालयेन प्रकाशितः। चतुर्थोऽनुवादोऽस्य चैन्नैवास्तव्यया बैंगलूरनगरस्थपूर्णप्रज्ञसंस्कृतविद्यापीठकुलाधिपतिचर्या[१४८] डा. राजलक्ष्मी श्रीनिवासन् महाभागया कृतः, दिल्लीस्थया साहित्यअकादेमीसंस्थया च प्रकाशितः षष्ठोऽनुवादोऽस्य गुर्जरप्रदेशीयेन साबरकण्ठामण्डलान्तर्गत– शामलाजीस्थकला–शालाप्राध्यापकेन डा० मधुसूदनव्यासेन कृतस्तत एव च स्वकीयेन व्ययेन प्रकाशितः। वैदेशिकभाषासु आङ्ग्लभाषया थाईभाषया चेदमनूदितम्, आङ्ग्लभाषया डा. जीयालाल कम्बोजेन, थाईभाषया बैंकाकनगरस्थशिल्पाकरविश्वविद्यालय–संस्कृताध्यापकपुराणगतिसंकायोपाध्यक्षचरेण डा. चमलौङ् सरपद्नुक् इत्यनेन फ्रैञ्चभाषयाऽप्यस्यानुवादो जात इति कोऽपि मां प्राह। बंगभाषयाऽस्यानुकादकार्य सम्प्रति प्रचलति। एवं नवभाषाभिरनूदितं नवमिदं काव्यम्। मन्य इदम्प्रथममेवेदम–र्वाचीनयुगीनं संस्कृतमहाकाव्यं स्याद्यदेतत्संख्यभाषाभिरनूदितं स्यात् नानाभाषाभिरनुवाद एव न केवलमस्य वैशिष्ट्यं द्वादशसंख्याकराष्ट्रियान्ता–राष्ट्रियपुरस्कारसत्कारोऽपि। भारतीयेषु सप्त विश्वविद्यालयेषु पीएच्. डी तिशोधोपाधिविषयतामपीदं गतम्। राजस्थानप्रदेशान्तर्गतश्रीगंगानगर–स्थैर्विद्वद्धौरेयैर्डा. सत्यव्रतवर्ममहाभागैः डी. लिट्. उपाध्यर्थं स्वीकृते डा सत्यव्रतशास्त्रिकृतमौलिककृतिविमर्शाख्ये ईस्टर्नबुकलिंकर्स इत्याख्यया दिल्लीस्थया प्रकाशनसंस्थया प्रकाशितेस्वकीये ग्रन्थे चेदं महाकाव्यं सुदीर्घं निपुणं च विमृष्टम् तथैव चेदं विमृष्टं खण्डद्वयात्मके डी. लिट्. उपाध्यर्थं स्वीकृते 'संस्कृत संस्कृतिसाधना इति शीर्षके' मदीयसमग्रवाङ्मयसमीक्षणपरे ग्रन्थे डा. कमल आनन्दमहोदयया।

---

१४८ भूतपूर्वे चरट् इत्यनेन (५.३.५३) चरट्। चरटष्टित्वात् टिड्ढाणञ् (४.१.१५) इत्यादिना ङीप्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

श्रीरामकीर्तिमहाकाव्यानुवादप्रसंगेन तत्सम्बद्धं विषयमपरमप्यत्रोपस्थापयितुमिच्छामि। यद्यप्यन्तःकरणप्रेरणयैव – उपरिष्टादिदमुक्तमेव– विद्वद्भिर्महाकाव्यस्यास्यानुवादकर्मणि व्यापारित आत्मा तथापि मम काव्यं तैरनुवादेन सभाजितं च समीक्षितं चेति तान् प्रति कृतज्ञतां वहाम्येव। अनुवादकाः पारिश्रमिकविषये बहु चिन्तयन्ति। अत्र तु तत्प्रश्न एव नासीत्। न मया ते प्रेरिता अनुवदितुम्। केनापि देवेन हृदि स्थितेन ते न्ययोजयन्नात्मानमेतत्कर्मणि। यथा तैर्मद्विषये कृतं तथैव मयाऽपि तद्विषये किञ्चित्करणीयमेव। न खलु प्रयत्नः फलाद् व्यतिरेच्य इति शास्त्रकृतां डिण्डिमः। किञ्च, तत्फलं किं भवेद्यन्मयाऽनुवादकेभ्यो विद्वद्भ्यः समीक्षकाय च देयं स्यात्। धनं स्याद्वा तत्? नाहं तथाऽऽढ्यो यथा वित्तेन तांस्तर्पयेयम्। किञ्च, विद्याधनं सर्वधनप्रधानमिति मन्यमानानां तेषां धनाया[१४९] नैव स्यान्नाम। तर्हि कथं ते प्रतिकर्तव्याः स्युः। कृते च प्रतिकर्तव्यमिति शास्त्रवचो मया परिपालनीयमेव। बह्वत्र विषयेऽहमचिचिन्तम्। तदा स्फुरितं मे मनसि मानो हि महतां धनमिति सुप्रथितोक्तिः। माननीयानां विद्वत्प्रवेकानां यदि कुतश्चित्सम्मानव्यवस्था कार्येत तर्हि तेषां यदृणं मयि तच्छोधनं सम्भवेत्। उत्तमर्णास्तेऽहं पुनरधर्मणः, यद्यपि स्वप्नेऽपि तैर्नैवं कदापि चिन्तितं स्यात्। ममैव तत्र तादृशी मतिः। न मद्वचसा तैः प्रवृत्तमनुवादकर्मणि समीक्षाकर्मणि च यथोक्तमेव मयोपरिष्टात्तथापि तदुपकारभरभरेणाक्रान्तमासीदेव मम मनः। थाईदेशराजकुमारी यदि तत्सम्भावना[१५०] मभ्युपगच्छेत्तर्हि मम मनसि यो भारः स कदाचिच्छिथिलतामुपगच्छेत्। एवं प्रजागरकृशेन मया नीता बह्व्यो निशाः। तदा समागतः सोऽवसरो यो मया चिराय प्रतीक्षित आसीत्।

## ६७

बहूनि वर्षाणि थाईदेशीयसंस्कृताभिलेखाध्ययनानुसन्धानविषये कार्यं प्रवर्तयमानस्य मम। थाईदेशेऽवस्थितिकाले ततः परस्ताच्च तत्र नैकशो गत्वा मया तत्सम्बद्धा सामग्री संकलिता। अथवा श्रेयसि केन तृप्यत इति न्यायेन ततोऽप्यधिकां सामग्रीं

---

१४९ अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु (७.४.३४) इति सूत्रेण क्यजन्तस्य अस्य निपातनम्। जीवनार्थं सत्यपि धनेऽधिकधनेच्छा इत्यर्थः।

१५० सम्भावना समादर इत्यर्थः। तथाहि कालिदासीयः प्रयोगः – सम्भावनागुणमवेहि तमीश्वराणाम् (अभिज्ञानशाकुन्तले)

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

संकलयितुं मया बद्धं मनः। तदनुसारेण २०१३ वर्षे मईमासस्य सप्तदशेऽहनि बैंकाकनगरमहं प्राप्तः। तत्र प्रस्थानात्पूर्वं समुदितो मे मनसि विचारः—बैंकाकं गच्छाम्येव। कुतो नेममवसरं थाईदेशमहाराजकुमारीदर्शनार्थमप्युपयोजयेयम्। एतद्विचिन्त्य सा मया ईमेल द्वारा सूचिता यदहं मईमासस्य सप्तदशेऽहनि सायाह्ने बैंकाकनगरं प्राप्तास्मि। दश वा द्वादश वा दिनानि मम तत्रावस्थितिः सम्भाव्यते। वासो मम तत्र 'सनाम् लुआङ्'नामकं भूभागं निकषा स्थिते रायल होटल इत्याख्ये वासगृहे भविष्यति। तद्दूरभाषसंख्याऽपि तस्यै सूचिता। महाराजकुमार्या ईमेल द्वारैव सद्यः प्रतिवचः प्रेषितम्—अष्टादशे दिवसे – स हि ममागमनाव्यवहितानन्तरो दिवसः – द्वादशवादने मध्याह्ने भवन्तो राजप्रासादमुपयान्तु। भवदानयनार्थं कारयानं प्रेषयिष्यामि। मम वासगृह (होटल) प्राप्तिपूर्वमेव वासगृहव्यवस्थापकै राजप्रासादान्ममागमनसूचना प्राप्ताऽऽ—सीदागामिन्यहनि द्वादशवादने मध्याह्ने महाराजकुमारी द्रष्टव्येति च ज्ञातमासीत्।

परेद्यवि, अष्टादशे दिवसे, प्रातर्दशवादन एव राजप्रासादात् कारयानमागतम्। तेन मां तत्र प्रापयितुम् तेनैव यानेन ज्ञानुत्म (संस्कृते 'ज्ञानोत्तमा' नाम्नी) प्रासादेऽधिकृता वासगृहं प्राप्ता। निर्धारितः समयस्तु द्वादशवादनमित आसीत्। तत्कुतो होराद्वयपूर्वं दशवादन एव तस्या आगमनमिति विस्मयाविष्टचेता अपि किञ्चिदनुक्त्वैव तया सह 'पथुम सा' इत्याख्यं राजप्रासादं प्रत्यहं प्रस्थितः। पूर्वं महाराजकुमारी महाराजेन महाराज्ञ्या च सह चित्रलते (थाय्युच्चारणानुसारेण चित्लदे, तकारो दकाररूपेणोच्चार्यते त्रकारश्च तकाररूपेण) त्याख्यं राजप्रासादमधिवसति स्म। सम्प्रत्यन्यस्मिन् प्रासादे तस्या अधिवासः। सोऽयं प्रासादः पूर्वं तत्पितृष्वसुर्गलियानी वधना (कल्याणीवर्धनेति संस्कृते) इत्याख्याया आवास आसीत्। तन्निधनानन्तरं स महाराजकुमार्या आवासः संवृत्तः।

दशवादने रॉयल होटल इत्याख्याद् वासगृहात्प्रस्थाय सार्धदशवादनेऽहं 'पथुम साख्यं' राजप्रासादं प्राप्तः। तत्रत्यैः कर्मकरैः प्रथमं चायं परिवेषितम्। महाराजकुमारी तु तदानीं कुत्रापि न दृश्यते स्म। ज्ञानुत्मया सूचितं यत्प्रतिशनिवासरं सा दशवादनाद् द्वादशवादनं यावच्चीनभाषामधीते। द्वादशवादने मया सा संगंस्यत इति। चीनभाषां तामध्यापयति थाईदेशस्थचीनदूतावासाधिकारी कश्चन। यथोक्तं पुरस्तात्सार्धदशवादनेऽहं राजप्रासादं प्राप्तः। होरार्धमितः कालः चायादिसेवनेन यापितः। एकादशवादनवेला वृत्ता भवेत्। द्वादशवादने महाराजकुमारीसमागमो भविष्यति। होरामितः कालः सम्प्रत्यप्यस्तीति तं

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

राजप्रासादपरिदर्शनेन यापयाव इति प्रस्तावः ज्ञानुत्मया मत्सम्मुखमुपस्थापितः। मयाऽप्युदारः कल्प इति स हृदयेनानुमोदितः।

अहं राजप्रासाददर्शनार्थं प्रस्थितः। तत्रत्याभिर्नाना ऋजुकुटिलपादवीथिभिः सञ्चरमाणस्तत्सुषमामुपोषिताभ्यामिव लोचनाभ्यां साक्षादकरवम्। प्रावृट्काल–स्तदानीमासीत्। किञ्चित्कालपूर्वमेवासीद् वृष्टो देवः। मन्दमन्देन वातेन वीज्यमानास्तरवश्च गुल्माश्च लताश्च वीरुधश्च सद्यःस्नाता इव कमप्यपूर्वं सौन्दर्यातिरेकमभृषत[१५१]। स्थाने स्थाने जलस्य पूर्णाः कुल्यास्तत्र च स्वैरं विहरन्ती कारण्डवततिः, पक्षती प्रसार्यानन्दोल्लासद्योतकस्तत्क्रेङ्कारवः सर्वमिदं नेत्रपेयमप्यासीच्छ्रोत्रपेयमपि च।

प्रासादे तद्भवनमप्यहमदर्शं[१५२] यद्वर्तमानराजवंशस्य षष्ठो राम इत्यपरां सञ्ज्ञां दधानः फ्र मंकुट इति नामधेयो नृपोऽधिवसति स्म। अतीव रमणीयं तद् भवनम्। भव्यता तस्य यत्सत्यं गिरामगोचरा। प्रासादपरिभ्रमणेन होरामितः कालः कुत्र गत इति नाहं वेद। द्वादशवादनवेलोपसर्पति स्म। ज्ञानुत्मा मां प्राह प्रतिगन्तव्यमावाभ्यां सम्प्रति। प्रत्यावृत्तमात्र एव महाराजकुमार्याऽहं समगंसिषि। सा मां प्रतीक्षमाणैवासीत्। प्रसादसुमुखी सा मह्यं स्वागतं व्याहार्षीत्। भोजनवेलेति भोजनकक्ष एवाहं तदनुचरैः प्रवेशितोऽभूवम्। तत्रैव महाराजकुमार्याऽहं प्रत्युद्गतः। किञ्चित्क्षणानन्तरं द्वावन्यावप्यावाभ्यां संगतौ। एकस्तयोरासीन्मत्पूर्वशिष्यो महाराजकुमार्याः सतीर्थ्यः सम्प्रति चुलालौङ्कौर्नविश्वविद्यालये प्राच्यविभागाध्यक्षः प्रफोद अस्सवविरुल्हकानपरा च विषयान्तराध्ययनकाले महाराजकुमार्याः सतीर्थ्या बासिनी। अहं मांसविरत[१५३]भोजनमेव स्वीकरोमीति सर्वेषामपि कृते तदेव परिवेषितमभूत्। तत्तद्व्यञ्जनसंकेतो भोजनपटले समुपस्थितस्य प्रत्येकं जनस्य पुरतः संस्थापिते पत्रखण्डे कृतो यत्रेदमपि निर्दिष्टमासीद्यत्सहभोजोऽयं महाराजकुमार्या मत्सम्मानार्थमायोजित इति। तत्पत्रखण्डस्य चित्रप्रतिलिपिरधस्तात् प्रस्तूयते –

---

१५१ भरणार्थकाद् भृञ्धातोरात्मनेपदे प्रथमपुरुषबहुवचने प्रयोगः।

१५२ प्रेक्षणार्थकाद् दृशिर्धातोर्लुङ्युत्तमपुरुषैकवचने रूपम्। इरित्वाच्च्लेरङि ऋदृशोऽङि गुणः (७.४.१६) इत्यनेन गुणः।

१५३ थाईभाषायां शाकाहारि भोजनं मांसविरत आहार इति उच्यते।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri



Lunch
Hosted by
H.R.H. Princess Maha Chakri Sirindhorn
in Honour of
Professor Satya Vrat Shastri
Saturday, May 18, 2013

********

Pumpkin Cream Soup

********

Mixed Salad

********

Lasagna

********

Green Curry with Vegetables

********

Stir-fried Mushroom in Oyster Sauce

********

Stir-fried Sweet Corns
and Snow Peas with Bean Curd

********

Mango and Sticky Rice

********

Fresh Fruits

********

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

राजपरिवारजनैः केषामप्यतिविशिष्टजनानां कृत एवैतादृशमायोजनं क्रियते। अहमपि तेषु समावेशित इति महाराजकुमार्या मय्यादरातिशयं द्योतयति। स गुरुरहमित्येतत्प्रवृत्तिजन्य एव। थाईदेश्यानां गुरुं प्रति विलक्षणः कश्चनादरातिरेकः। पुराऽस्माकं देशेऽपि तथाऽऽसीदेव। गुरुर्ब्रह्मा गुरुर्विष्णुरित्यादय उक्तय अस्मद्देशीया एव। परं गच्छता कालेन स आदरभावो ह्रसिमानमाप्तः। गुरुर्ब्रह्मेत्यादि वयमद्यापि जोघुष्यामहे परं न तं यथोचितमाद्रियामहे। शास्त्रशुश्रूषुष्वपिच्छात्रेषु विशेषतो महाविद्यालयेषु विश्वविद्यालयेषु वाऽधीयानेषु केचनैव गुरून् शुश्रूषन्ते[१५४]। अन्ये तु शुल्कं वयं दद्मो विद्यां चोपार्जयामः। अत्र किं गुरोरस्मासूपकर्तृत्वम् इति प्रतिपद्यन्ते गुरुरध्यापयति चेत् नायं तस्यास्मास्वनुग्रहः। तदर्थं स वेतनं लभते। कुतो वयं तं सेवेमहीति बुद्धिमाश्रयन्ति। अधीतविद्याश्च कदाचित्तं परिचिन्वन्त्यपि न। पुराकल्पे नैवमासीदिति न। तदानीमपि प्रवृत्तिरभूदेतादृशी शिष्याणाम्। अन्यथा कुतो महाभारतकार एवमवक्ष्यत् –

षडेते ह्यवमन्यन्ते जनं पूर्वोपकारिणम्।
आचार्यं शिक्षिताः शिष्याः कृतदाराश्च मातरम्।[१५५]

अथवा महाभाष्यटीकाकृत्कैयट एवमभाणिष्यत् – छात्राणामुपहास्यत्वं यास्यामि पिशुनात्मनाम्। तदानीं छात्राणां संख्याऽल्पीयसस्येवासीत्। अधिकांशतस्तु विनेया गुरौ विनयेनैव प्रावृतन्नेकतानेन मनसा च गुरुं शुश्रूषमाणा विद्यामध्यगमन्। विद्याधिगम आद्यं साधनं गुरुशुश्रूषैवाभूत्। अपरं साधनं – तदवरकोटिकं– नाम पुष्कलं धनमासीत् यद् गुरुभ्यः समर्प्य तेन च तान् सन्तोष्य भूमिपतयो वा राजसभासदस्या वाऽन्ये वा राज्याधिकारिणस्तेभ्यः स्वतनयानध्यजीगपन्। अत्र द्रोणादय उदाहरणम्। तृतीयं साधनं विद्यया विद्येति, विद्याव्यतिहारेण विद्या। यथा कश्चिद् ग्रीकभाषाविदपरश्च संस्कृतविद्। संस्कृतविद् ग्रीकभाषाविदो ग्रीकभाषामधीयीत, ग्रीकभाषाविच्च संस्कृतविदः संस्कृतभाषाम्। अत्रोदाहरणमहमेव। मया मैकडानलकृतश्छात्रोपयोगी वैदिकव्याकरणग्रन्थो हिन्द्याऽनूदितः। स्थाने स्थाने मैकडानलेनाङ्ग्लसन्दर्भेषु ग्रीकलिपिबद्धा ग्रीकभाषासन्दर्भा उपन्यस्ताः। नास्तां ममानुवादकाले ग्रीकभाषाज्ञानं ग्रीकलिपिज्ञानं च। उभयमपि मया शिक्षणीयमास्त। आसमहं तदानीं दिल्लीविश्वविद्यालयसंस्कृतविभागाध्यक्षः।

---

१५४ ज्ञाश्रुस्मृदृशां सनः (१.३.५७) इति सूत्रेणात्मनेपदम्।
१५५ उद्योगपर्व (३३.८७)

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तस्मिन्नेव काले स्पेनदेशात् एण्टोनियो इति नामधेयः कश्चिद्विद्वांस्तद्विश्वविद्यालये स्पेनभाषामध्यापयितुमागतः। तस्य संस्कृभाषायामपि रुचिरासीत्। एकस्मिन् दिने स मामुपसन्न उक्तवांश्च – आचार्यवर्या! अहं भवत्तः संस्कृतं शिक्षितुमिच्छामि। मया तथास्त्विवति प्रोच्य प्रावर्ति वचः – भवान् ग्रीकभाषां मामध्यापयत्विति[१५६]। ओमिति तेनावाचि। एवं विद्यया विद्या मयाऽधिगता। उपरिनिर्दिष्टं विद्याधिगमसाधनत्रितयम् अधस्तादुद्ध्रियमाणे पद्य एवमाविष्कृतम् –

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा।
अथवा विद्यया विद्या चतुर्थी नैव विद्यते।।

एण्टोनियोमहाभागाद् ग्रीकभाषां तल्लिपिं चाधीत्य मया मैकडानल–ग्रन्थान्तर्गतग्रीकसन्दर्भाणामपि हिन्द्यानुवादः प्रास्तावि।

## ६६

भोजनवेलायां महाराजकुमार्या सह नाना विषयेषु मम चर्चा प्रावर्तत। चर्चाप्रसंगे तया पृष्टम् – अद्यत्वे कस्मिन् कर्मणि व्यापृताः श्रीमन्त इति। मयोक्तं – ग्रन्थद्वयरचनायां व्यापृतोऽस्मि। प्रथमो ग्रन्थोऽस्ति– मानवमूल्यानां परिभाषाश्च व्याख्याश्च। शोभनोऽयं विषयोऽद्यतनसमयविशेषोपयोगी च। अद्यत्वे सर्वत्र परिलक्ष्यते मानवमूल्यानां ह्रासः[१५७]– अवोचन्महाराजकुमारी। स्वं वचोऽग्रे सारयता मयोक्तम् – अपरो ग्रन्थोऽस्ति थाईदेशसंस्कृताभिलेखा इति। कति संस्कृताभिलेखा भवद्भिरधिगताः– अप्राक्षीन्महाराजकुमारी। परःसप्ततिरित्यहमवोचम्। तेषु केषाञ्चन दुरवस्थैव। पाठस्त्रुटितो वा, ऽस्पष्टो वा भ्रष्टो वा। तत्संयोजना परिश्रमसव्यपेक्षा च समयसव्यपेक्षा च। अर्थः, प्रकरणं, लिङ्गं, शब्दस्यान्यस्य सन्निधिः, सामर्थ्यम्, औचितीत्यादिभिस्त्रुटितस्य पाठस्य पुनरुद्धारो भ्रष्टस्य च संस्कारः कर्तव्यौ भवतः। कतिपयेऽभिलेखाः पुनः सम्यगवस्थाः। तेषां संख्याऽपि पर्याप्ता। अभिलेखेषु केचनातिलघवः, केचनातिदीर्घाः। अतिलघुषु केचन द्वित्रास्त्रिचतुरा वा – एकपंक्तिका वा द्विपंक्तिका वा। एकस्त्वेकपद एव। अतिदीर्घेषु सन्ति केचन ये लघुकाव्यरूपा एव। पाषाणस्तम्भेषूत्कीर्णास्ते भागद्वये भवन्ति विभक्ताः। चतसृषु दिक्षु प्रत्येकं भागस्योत्कीर्णत्वाच्चत्वारो वर्गास्तेषां भवन्ति। पृथक् पृथग्विषयस्तत्र

---

१५६ पाश्चात्यदेशेषु भाषाध्येतॄणां कृते ग्रीक–लैटिन भाषाध्ययनम् अनिवार्यं भवति। अतः असंदेहो मम मनसि यत्तस्य ग्रीकभाषाज्ञानं भवेदेव।

१५७ There is erosion of human values these days इत्याङ्ग्ल्याम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

निरूपितो भवति यः पुष्पिकायां निर्दिश्यते। तद्यथा – इति सौन्दर्यपटलं समाप्तम्, इति विद्याभ्यासपटलं समाप्तम् इति। एते बृहत्कलेवरा अभिलेखाः प्रायशः पद्यबद्धा एव। कतिपयाभिलेखेषु इन्द्रवज्रोपेन्द्रवज्रोपजातिमालिनीवसन्ततिलकास्रग्धरा-शार्दूलविक्रीडितमौक्तिकदामेति नानावृत्तानां प्रयोगः। यमकानुप्रासदृष्टान्तो-पमोत्प्रेक्षार्थान्तरन्यासादिभिर्नानाऽलंकारैरलंकृतास्ते सुतरामावर्जयेयुः सदयहृदयानां सहृदयानां चेतांसि। उदाहरणरूपेणैकस्मादभिलेखादनुप्रासच्छटाविच्छुरितं पद्यमेकं श्रावयामि–

नमध्वं हरदेहार्धहारिणीं हिमवत्सुताम्।
अम्बा न वेति साशंकं पश्यति स्म गुहोऽपि याम्।।

अत्र हकारानुप्रासः प्रथमपंक्तिगतः कमपि विच्छित्तिविशेषं जनयति। एवमेव जनयन्त्यधोनिर्दिष्टपद्यगतसकारजकारनकारानुप्रासाः –

यज्जाज्वलीति ज्वलनक्षमाम्भः, भास्वन्नभस्वन्मृगवन्नभस्सु।

अलंकारेष्वतीव रुचिरस्योत्प्रेक्षालंकारप्रयोगस्याप्युदाहरणमहं प्रस्तौमि–

नमः शिवायास्तु शिवाय वो यो
मन्ये शशांकानलसूर्य्यनेत्रः।
उष्णत्वशीतत्वसमत्वमीप्सु–
स्स्वास्ये बिभर्त्यर्यदभुतजह्नुजाताम्।।

श्रुत्वैतदवोचन्महाराजकुमारी – किं नैवं चिन्तयन्ति श्रीमन्तो यदेतादृशानि पद्यानि भारतादत्रागतैः कविभिर्विरचितानि। अभिलेखा थाईदेशीयाः परं तद्रचयितारो भारतीया एव भवेयुः। मयोक्तम् – भारतवंशीयास्ते स्युः, न तु साक्षाद् भारतात्प्राप्ताः। तेषां पितृपितामहादयो भारतात् थाईदेशमागताः स्युः। स्वयं ते थाईदेशीया एव संवृत्ताः स्युः। यथा तेषामत्रत्यस्थानादिपरिचयस्तेनैषाऽनुमैव बलवती प्रतिभाति। जन्मपालनपोषणादि तेषामत्रैव जातं स्यात्। एतदपि सम्भाव्यत इत्याह महाराजकुमारी। तदनु मयोक्तम् – ममायं हार्दोऽभिलाषो यदस्य ग्रन्थद्वयस्य 'मानवमूल्यानि परिभाषाश्च व्याख्याश्च' इत्याख्यस्य – 'थाईदेशीयाः संस्कृता–भिलेखा' इत्याख्यस्य च लोकार्पणमत्रभवत्येव करोत्वत्र बैंकाकनगर एव। कुत्रेदं कर्तव्यं स्यादिति महाराजकुमारीप्रश्ने मयोक्तं यद्यपि होटलाख्येषु वासगृहेषु सन्ति प्रेक्षागृहाणि यदेतद्विधकार्यार्थमुपयुज्यन्तेऽपि तथाऽपि न मम तत्र रुचिः। अहं कस्यापि विश्वविद्यालयस्य प्रेक्षागृह एवेमं कार्यक्रममायोजयितुमिच्छामि।

महाराजकुमारी – कस्य विश्वविद्यालयस्य?

अहम् – सिल्पाकौर्नविश्वविद्यालयस्य। तत्रत्यं प्रेक्षागृहं किञ्चित्कालपूर्वमेव पुनर्नवीकृतम्। अतो विलक्षणैवास्याभा। किञ्च, विश्वविद्यालयोऽयं मध्येनगरं स्थितः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तेनात्रागमनं सर्वेषामेव सुकरं स्यात्। विकल्परूपेण चुलालौङ्कौर्नविश्वविद्यालय-प्रेक्षागृहमपि साधीयः स्यात्।

अत्रान्तरे प्रफोद अस्सवविरुल्हकान योऽपि भोजनवेलायामुपस्थित आसीद् वक्तुमुपाक्रंस्त[१५८]। स उक्तवान् – चुलालौङ्कौर्नविश्वविद्यालयप्रेक्षागृहार्थं भाटकं देयं स्यात्। तद्राशिश्च नाल्पीयान्। विश्वविद्यालयकार्यातिरिक्तकार्यार्थं यदि तस्योपयोगः कर्तव्यो भवति तर्हि तदुपयोगकर्त्रा भाटकं देयं भवेदिति नियमः कश्चन समाश्रीयते विश्वविद्यालयाधिकृतैः।

अहम् – सिल्पाकौर्नविश्वविद्यालये न कदाचिद् भाटकादिप्रतिबन्धः स्यात्। किञ्च, यतोऽहं तत्रत्यपूर्वप्राध्यापकस्तर्हि तत्रत्यानां मम पूर्वसहकर्मिणामद्यतनानां च प्राध्यापकानां ये मम पूर्वच्छात्रा एव सहयोगोऽपि मया लभ्येत।

महाराजकुमारी – तर्हि सिल्पाकौर्नविश्वविद्यालयप्रेक्षागृहमेवास्तु। तत्रत्यः कुलपतिरपि मम परिचितः।

कदा लोकार्पणं वाञ्छन्ति भवन्तः?

अहम् – (आत्मगतम्) यद्यपि मानवमूल्यविषयको ग्रन्थस्तु सिद्धः, थाईदेशाभिलेखग्रन्थस्तु पूर्णतामपि न गतः। तन्मुद्रणायापि कालोऽपेक्षितः स्यात्। एतत्सर्वस्य कृते मासद्वयावधिकः कालोऽपेक्षितो भवेदेव। मन्ये मासत्रयावधिकः कालस्तदर्थं पर्याप्तः स्यात्। एतद्दृष्ट्या सिताम्बरे मास एव लोकार्पणं सम्भवि स्यात् – (एतत्सर्वं विचार्य) मयोक्तम् – सिताम्बरे मासे।

महाराजकुमारी – सिताम्बरे मासेऽपि कदा?

अहम् – तत्प्रथमसप्ताहे वा तदुपान्त्यदिवसे वा।

महाराजकुमारी – 'उपान्त्ये दिवसे' इत्यत्र कोऽभिसन्धिः?

अहम् – स हि मम जन्मदिवसः।

महाराजकुमारी – यद्यपि तस्मिन् दिवसे पूर्वनिर्धारिता नैके कार्यक्रमा विघ्नमुपजनयन्ति तथापि जन्मदिवस इति स एवास्तु। सायं षड्वादनादनन्तरमेव मयि कालः स्यात्।

अहम् – षड्वादने तु नातिविलम्बः। स कालः सर्वेषामपि कृतेऽनुकूलः स्यात्।

J ß0aa egkjkt d ek; kZ Ul ßFkk; a[१५९] पटला[१६०]त्समीपस्थादिदन-पञ्जिकामानीय स्वहस्तेनालेखीत् – सत्यव्रतशास्त्रिपुस्तकलोकार्पणं सिल्पाकौर्नविश्वविद्यालयप्रेक्षागृहे २६ सितम्बर, २०१३ दिने षड्वादने।

---

१५८ प्रोपाभ्यां समर्थाभ्याम् (१.३.४२) इत्यनेनात्मनेपदे लुङि रूपम्।

१५९ अपादाने परीप्सायाम् (३.४.५२) इत्यनेन णमुल्। परीप्सा = त्वरा। त्वरया आसन्द्या उत्थायेत्यर्थः।

१६० मेज़ इति भाषायाम्, टेबल इत्याङ्ग्ल्याम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

महाराजकुमार्या मम प्रार्थनांगीकृतेति परां निर्वृतिमहमन्वभूवम्। तदनु 'श्रेयसि केन तृप्यत' इति न्यायेन भूयोऽपि तामन्यमर्थमहं प्रार्थयितुमुपक्रान्तः।

अहम् – मया थाईरामकथामाश्रित्य श्रीरामकीर्तिमहाकाव्यं संस्कृतेन प्रणीतमिति परमराजकुमारी[१६१] भवती जानात्येव। भवत्यैवास्य प्राक्कथनं सन्दृब्धम्। इदं ज्ञायमानं भवत्याः परमसन्तोषाय भवेद्यदिदं भारतस्य प्रमुखाभिः षड्भाषाभिरनूदितम्, कर्णाटभाषया, असमभाषया, हिन्दीभाषया, तेलुगुभाषया, तमिलभाषया, गुर्जरभाषया च। एवमेव ममापरं काव्यं थाईदेशविलासाभिधानं यद् भवत्या थाईभाषयाऽनूदितं तदपि केनापि विदुषा तेलुगुभाषयाऽनूदितम्। प्रतिपद्यं तस्मिन् कस्याऽपि स्थानविशेषस्य थाईदेशीयस्य, दृश्यविशेषस्य वा वर्णनम्। वामतो मूलसंस्कृतपद्यं तदधस्ताच्च तेलुगु – अनुवादं प्रस्तुत्य तेन दक्षिणतश्चित्रविन्यासोऽपि कृतो यत्र पद्यगत–स्थान–वस्तु– निरूपणमस्ति। सोऽयनभिनवः कश्चित्प्रयोगः सांस्कृते वाङ्मये। ममायमभिलाषो यदेते सर्वेऽप्यनुवदितारो यैः स्वस्वभाषामाध्यमेन थाईरामकथा स्वस्वभाषाभाषिभ्यो ज्ञपिता[१६२] थाईदेशपरिचयश्च प्रस्तुत एवञ्च कुर्वाणैः थाईदेशस्योपकृतं ते सर्वेऽप्यत्रभवत्या सभाजिताः स्युरिति।

महाराजकुमारी – अत्राप्योमिति ब्रवीमि। किं सा सभाजना तस्मिन्नेव दिने भवेद्यस्मिन् दिने ग्रन्थलोकार्पणम्?

अहम् – परतरे दिने भवतु, यद्यत्रभवत्यां स्यात्कालः।

प्रफोद अस्सवविरुल्हकानः अत्राक्षिप्य वदति –

एकस्मिन्नेव दिने कार्यद्वयं सम्पादनीयं स्यात्। परतरे दिने नास्ति महाराजकुमार्यां कालः। किञ्चाव्यवहितपूर्वदिने समुपस्थाय परतरे दिने समुपस्थातुं प्रेक्षकाणामुत्साहोऽपि न भवति। तदनुपस्थितौ किं वौचित्यं सम्भावनायाः?

अहम्– अस्तु तर्हि, एकस्मिन्नेव दिने कार्यक्रमद्वयं, पुस्तकलोकार्पणं च विद्वत्सपर्या च।

यद्यन्मया चिन्तितं तत्तन्महाराजकुमार्याङ्गीकृतमिति सर्वथा निर्वृतस्वान्तो धन्यमहमात्मानमचकलम्[१६३]। नहि सामान्यतो राजवंश्या कार्याण्येतानि प्रतिपद्यन्ते। तदुपगमोऽपि न सुकरः। किं पुनस्तैः प्रार्थनांगीकारः। महाराजकुमारी मय्यतितरां

---

१६१ थाईभाषायाम् इदमेव विशेषणं महाराजकुमारीकृते प्रयुज्यते आङ्ग्ल्यां तु भवेत् Her Royal Highness.

१६२ ज्ञप मिच्च इति धातुपाठे ज्ञपधातोर्मित्त्वात् मितां ह्रस्व (६.४.९३) इत्यनेन ह्रस्वः।

१६३ हलिकली अदन्ताविति धातुपाठः। अदन्तत्वात्कलधातोरभ्यासस्य नेत्वं न च दीर्घत्वम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

स्निह्यतीति यद्यन्मयोक्तं तत्तत्तयाङ्गीकृतम्। महाराजकुमार्या मम कार्यक्रमे समुपस्थितिर्भारतथाईदेशसम्बन्धबन्धं द्रढयेदिति सामान्यजनेन मयाऽप्येतद्दिशा किञ्चित्कर्तुं शक्यत इति बोधोऽपि मे परमाय सन्तोषाक्लृपत्।

सार्धहोराद्वयकालो व्यत्यगाद्विभिन्नचर्चारतानामस्माकम्। सार्धद्विवादनवेला सञ्जाता। त्रिवादने महाराजकुमार्या कुत्रापि गन्तव्यमासीत्। कालोऽयमामन्त्रणस्येति यदाऽहं महाराजकुमारीमामन्त्रयितुं प्रवृत्तस्तदैव साऽवादीत् – मम सर्वेऽपि कर्मकरा अत्रभवद्भिः सह चित्रं कारयितुमिच्छन्तीति। सर्वेऽपि ते पंक्तिबद्धाः सोपानमार्गे स्थिताः। राजप्रासादस्थेन चित्रकारेण चित्रं कृतम्। तदनु महाराजकुमार्या स्नेहपरिवाहिभ्यां चक्षुर्भ्यां विसृष्टोऽहं पूर्वनिर्दिष्टया ज्ञानुत्माख्यया राजप्रासादा–धिकारिण्या सह रायल होटल इत्याख्यं वासगृहं प्रत्यावृत्तः।

तदा कथम् अष्टसङ्ख्याकाना[१६४] विदुषां मार्गव्ययव्यवस्था तद्भोजनावासादिव्यवस्था च भवेदिति चिन्ता प्रासरीसरीन्मे मनसि। कदाचिदत्र थाईदेशस्थितो भारतीयो राजदूतः साहाय्यमियृयादिति स मया द्रष्टव्यो भवेत्।

## १०१

अत्रान्तरे बैंकाकस्थार्यसमाजसंस्थाप्राणभूतानां मम प्रियसुहृदां श्रीमतां रामपलटपाण्डेयमहाशयानां दूरवाणीसन्देशो मया प्राप्तः। यतः कुतोऽपि मम बैंकाकागमनप्रवृत्तिमुपलभ्य तैर्मया सह कृतः सम्पर्कः। उक्तञ्च – श्वो रविवासरः। आर्यसमाजे यज्ञश्च प्रवचनादिकं च प्रवर्त्स्यत इति। अत्रभवन्तस्तत्रोपतिष्ठन्तु। भारतीयराजदूतोऽप्यस्मामिर्निमन्त्रितः। स्वीकृतं च निमन्त्रणं तेन। तेन भवतामपि तेन परिचयः कुशलपरिप्रश्नादिके च भवेताम्। नानावारं सोऽस्माभिर्निमन्त्रितः, यस्मात् कस्मादपि कारणात्सोऽस्मासूपस्थातुं नाशकत्। श्वस्तेनोपस्थानं स्वीकृतम्। यदि भवन्तोऽप्युपतिष्ठेयुर्महानुत्सवोऽयं स्यादस्माकम्। श्रुत्वैतत्किं कर्म किमकर्मेति व्यामोहमहमापन्नः। नैतादृशषु स्थलेषु गम्भीरचर्चा सम्भवति, विशेषतस्त्वपरिचितेन जनेन, तत्रापि च महाजनेन। यदि राजदूतेन सह मया चर्चा करणीया, तर्हि दूतावास एव मया गन्तव्यं स्यात्। किञ्च, बैंकाकस्थहिन्दूसमाजेन सञ्चाल्यमाने देवमन्दिरेऽपि रविवासर इति कृत्वा शतशः श्रद्धालवो जनाः समवयन्ति देवदर्शनार्थं पुरोहितेन वा ललितमोहनाख्येन तद्धर्मपत्न्या ममताख्यया वाऽन्येन भारतात् समागतेन संन्यासिजनेन वाऽन्येन केनापि विद्वज्जनेन प्रस्तूयमानं प्रवचनादि

१६४ सप्तानुवादका अष्टमश्च मम वाङ्मयस्यानुसन्धाता।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

शृण्वन्ति तदनन्तरं सग्धिं सपीतिं च प्रवर्तयन्ति। मन्दिरप्रबन्धकाः प्रायशः पञ्चनदाभिजनाः। श्रद्धालुषु भूयःसङ्ख्याका उत्तरप्रदेशाभिजनाः। तत्र भूयांसो मम परिचिताः, मयि सुतरां स्निग्धाः। तत्र गमनेन शतशो जनैः साक्षात्कारोऽपि भवेत्। आर्यसमाजमन्दिरे पुनरासन्नविंशा एव जना समवयन्तीति तावत्संख्याकैरेव संपर्कः स्यात्। किञ्च, राजदूतसङ्गमेच्छा मे बलवतीति श्रीपाण्डेयमहाशय आभाषणप्रारम्भ एव प्रतिपादितः। यद्यार्यसमाजमन्दिरं गच्छामि तत्र च राजदूतेन सङ्गच्छे तर्ह्यकस्मादतर्कितं वा तत्रोपनतं मां दृष्ट्वा कदाचित्स औदासीन्येन व्यवहरेत्। विना पूर्वसूचनां केनापि महाजनेन संगमः कदाचिदौचित्यकोटिं नाटीकेत। अतः यस्मिन् दिने काले च राजदूतस्य सौविध्यं स्यात्तद्विनिश्चित्य तद्दर्शनमुचितमिति बुद्धिमास्थाय पाण्डेयमहोदयो मयोक्तो न सम्भवि ममार्यसमाजमन्दिर आगमनमिति। तच्छ्रुत्वा नातिप्रमनसा तेनोक्तं यथा पश्यन्ति भवन्तस्तथैव प्रवर्तन्तात्। अत्र याथाकामी भवताम्। नात्राग्रहग्रहिलोऽहमस्मि।

रविवासरेऽहं देवमन्दिरं गतः। तत्र मम गमनं तत्रत्यानां कृत उत्सव इवासीत्। शास्त्रिणः समागता इति वृत्तं क्षणेनैव प्रसृतम्। माल्यादिनाऽहं सत्कृतः। मयाऽपि किञ्चिद्वक्तव्यमिति हिन्दूसमाजप्रधानपुरुषाणामाग्रहेण होरार्धं यावन् मया भाषितम्। बैंकाकनगरागमनं मम स्वगृहागमनमिवेति प्रस्तावनारूपं वचः पूर्वमुपन्यस्य किमर्थं मम थाईदेशागमनमिति विषयो मया स्पृष्टः। अद्यत्वे थाईदेशसंस्कृताभिलेखविषये कार्यं करोमीति मयोक्तम्। तत्सम्बद्धा पर्याप्ता सामग्री मयि वर्तते। ततोऽप्यधिकतरां तां संकलयितुमुपेतोऽस्मीति मयोक्तम्। सामग्रीसंकलनप्रसंगे कथं थाईदेशीयसंस्कृताभिलेखान्वेषणानुसन्धानविषये मम प्रवृत्तिरभूदिति श्रोतारो मया बोधिताः।

## १०२

नानावर्षपूर्वं थाईदेशे परिभ्रमणरतेन मया नाना प्राचीनहिन्दूमन्दिराणि दृष्टानि। त्रिचतुराणि विहाय न तेषु सम्प्रति पूजाऽर्च्चादि प्रवर्तते। बहूनि तेषु खण्डितानि। 'लेटराइट' इतिसञ्ज्ञकपाषाणस्य तेषु प्रयोगः। तत्खण्डा विनैव संयोजकचूर्णप्रयोगमुपर्युपरि न्यस्ताः। यद्येकोऽपि पाषाणखण्डस्तेषु स्वस्थानाच्च्यवते तदधोभागस्था उपरिभागस्था वा नाना पाषाणखण्डाश्च्यवन्ते। तेन मन्दिराणि जीर्णतां शीर्णतां च गतानि। इदानीं सौगतधर्मप्रभाव इति नैव संप्रति गर्भगृहेषु देवविग्रहाः सन्ति। ते संग्रहालयेषु स्थापितास्तच्छोभां वर्धयन्ति, तस्करैर्वोच्छिन्नाः, कलाकृतय इति

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कृत्वा च विक्रीताः। तद्भित्तिषु सन्ति रामायण – महाभारत–पुराणादि–कथानकाश्रितदृश्यान्युत्कीर्णानि यद्दर्शनाय यत्र यत्र मन्दिराणि सन्ति तत्र तत्राहं गतः। नैकशो मन्दिराणां पुरतो गरुडस्तम्भेषु, तद्भित्तिषु तन्निकटस्थ–पाषाणखण्डेषु लिपिरुत्कीर्णा मया दृष्टा। ते स्तम्भाः पाषाणखण्डा वा शासनेनाधिकांशतोऽद्भुतालयेषु स्थापिता राष्ट्रियसंग्रहालये वा, केचित्पुनर्यथा–स्थानमेव सन्ति। मन्दिरदर्शनसहकारेण तद्दर्शनमपि मे सञ्जातम्। तेषु या लिपिरुत्कीर्णा सैवाभिलेख इत्युच्यते। योऽयमभिलेखसम्भारो मद्दृष्टिमापति–तस्तद्विषये मद्विचारसरणिः प्रावर्तिष्ट यदयं ग्रन्थरूपेण संकलयितव्य इति। ख्मेर–प्राचीनथाय्यादिलिपिबद्धोयमधुनातनपाठकानां सौकर्याय देवनागरीलिप्या रोमनलिप्या च प्रस्तोतव्यः। अत्रत्यो भ्रष्टः पाठः संशोधनीयः। बोधगम्यमिमं विधातुमाङ्ग्ल्याऽयमनूद्यः। भाषादृष्ट्या काव्यसौन्दर्यदृष्ट्या च परिच्छेद्यः। विषयवस्तुदृष्ट्या चापि विश्लेष्यः। एतत्सर्वं मया समपादि। पाठशोधनविषये भूयः परिश्रान्तं मया। नैकेषु स्थलेषु पाठस्तथा भ्रष्टो यथा तस्य मूलस्वरूपोन्नयनं न सुकरमासीत्। अर्थः, प्रकरणं, लिङ्गं, शब्दस्यान्यस्य संनिधिः, सामर्थ्यम्, औचितीत्यादिभिरुपायैस्तदुन्नेतुं नाना होराः, कदाचित्सम्पूर्णं दिनमेव मे प्रयासः प्रावर्तत, कदाचित्ततोऽधिकं कालं वा। गच्छन्नश्नन् पिबन् केनाऽप्यन्येन वा संवदन्नहमेतच्चिन्ताचान्तचेता एवासम्।

अभिलेखकार्यसन्दर्भ एको मार्मिकः प्रसंगोऽपि मयोपन्यस्तो यः श्रोतृणां मनांसि गाढमस्प्राक्षीत्। अस्ति बुरीरमनाम्नि थाईदेशीये प्रदेशे 'पनोम् रुङ' इति नामधेयः पर्वतः। तच्छिखरे तन्मुकुटायमानमिवास्ति देवायतनं यत् 'प्रासाद पनोम् रुङ' इत्याख्यां बिभर्त्ति। थाईभाषायां देवालयार्थे संस्कृतप्रासादशब्द – प्रासादो देवभूभुजाम् इत्यमरः – एव प्रयोगमवतरति। तद्देवायतनमूर्धभागे चकास्ति भगवतो नटराजस्याष्टभुजा मूर्तिः। तत्पुरतः स्थितोऽस्ति गरुडस्तम्भो यत्र पद्यबद्धोऽभिलेखोऽस्त्युत्कीर्णः। तस्य मध्यभागादुपरितनो भागः कस्मिन्नपि कालखण्डे तत उच्छिन्नः सन्कुत्रापि पतितः। तदन्वेषणे थाईशासनेनान्वष्ठीयत महान् प्रयत्नो न चाभूत्स फलेग्रहिः। यद् गतं तद् गतमेवेति दृष्ट्या भूयोऽपि प्रयत्नाद्विरताः शासनाधिकृताः। यावान् भागस्तस्य स्तम्भस्य स्वस्थाने स्थितस्तत्रत्यं लेखं फ्रांसदेशीयेनैकेन जार्ज सीडेस इति नामधेयेन विदुषा वाचयितुं कृतः प्रयत्नः, परन्तु यत उपरितनभागस्थः स्तम्भ एव नष्ट इति तत्स्थलेखोपलम्भ-विरहात्पाठसांमजस्यं स्थापयितुं तत्कृते न सम्भवमभूत्। अत्रान्तरे किञ्चिदघटितमघटत।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

# १०३

एकदा तद् देवायतनं द्रष्टुमहं तत्र गतः। तन्निकषाऽतिथिगृहमस्ति द्वित्रिकक्षम्। तद्व्यवस्थार्थं नियुक्तोऽस्ति व्यवस्थापकः कश्चन। तस्य नामाहमद्यापि स्मरामि। छविन् इति तस्य नामासीत्। तदतिथिगृहं शासनाधिकारिणामुपयोगायैव। यतो मम राजपरिवारेण सम्बन्ध इत्यहमपि तदधिवस्तुमनुमतः। दिनत्रयं तदहमध्यवात्सम्। वर्षाकालस्तदानीमासीत्। प्रातर्भ्रमणार्थं तदानीं मे प्रवृत्तिरासीत्। इदानीं सा प्रवृत्तिर्मया परिहृता, प्रभातवेलाऽध्ययनानुसन्धानकार्यार्थं ग्रन्थादिप्रणयनार्थ–मुपयुक्ततरेति विपरीतां बुद्धिमुपाश्रितवता। एकस्मिन् दिने प्रातर्भ्रमणोत्सुकेन मया व्यवस्थापकश्छविन्नुक्तः – सर्वरात्रं[१६५] वृष्टो देवः। सम्प्रति तु न वर्षति। सुखस्पर्शो वाति वातः। रमणीयेयं पर्वतोपत्यका। भ्रमणेच्छा मयि स्फुरिता। भवानत्र मे सहायो भवतु, अज्ञातदेशे नैकाकिना मया गन्तव्यमिति। उभावप्यावामतिथि–गृहात्प्रचलितौ रम्यरम्येण दृश्यभरेणात्मानं विनोदयन्तौ। अकस्मादेकः विचित्ररूप इव कश्चन प्रस्तरखण्डो मम दृष्टौ पतितः। तं दृष्ट्वैव हठादहमवरुद्धः। छविंश्चोक्तः – छविन्, अयमेवासौ स्तम्भभागो य उच्छिन्नोऽभूत्। श्रुत्वैतत्साट्टहासं प्रहसितोऽसौ। उक्तवांश्च पर्वतीयोऽयं प्रदेशः। प्रस्तरखण्डास्त्वत्र सन्त्येव यत्र तत्र विकीर्णाः। अयं प्रस्तरखण्डः किञ्चिदुत्क्रान्तस्तस्यैव स्तम्भस्य भाग इति कथं शक्यते वक्तुम्। अत्र नाना विशेषज्ञैः पुरातत्त्वविद्भिः प्रवर्तितमन्वेषणं न चासादितः स स्तम्भभागः। अत्र विषये न प्रवर्तयितव्यो भवद्भिरात्मा। मयोक्तम् – केनापि देवेन हृदि स्थितेनाहमुच्ये स एवायं स्तम्भभाग इति। अस्तु। अत्रत्यां मृदमपनीय पश्यामस्तावत्। इत्युक्त्वा हस्ताभ्यामेव मृदमपनेतुमहं प्रवृत्तः। प्रवृष्टोऽभूद् देव इति मृत्तिकाऽऽर्द्रैवासीत्। तस्या अपनयनं न कठिनमासीत्। मत्प्रेरितः छविन्नपि तत्र कर्मण्यात्मानं व्यापीपरत्। सुतरामनिच्छया स व्यापीपरदात्मानमिति तन्मुखवर्ण एव प्रत्याययति स्म। मृत्तिकापनयनं कञ्चिकालं प्रावर्तत। कञ्चिद्गम्भीरांशं यावन्मृत्तिकायामपगतायामक्षरत्रयं मम दृष्टिमापप्तत् – ॐ सिद्धम् इति तदा प्रहृष्टेनान्तरात्मना छविन् इत्येतं सम्बोधयन्नहमवोचं – पश्य तावत्, अत्र लिपिरुत्कीर्णेति। तां दृष्ट्वा सोऽपि चकितचकितः स्वप्नो नु माया नु मतिभ्रमो नु इति वैलक्ष्यं किमप्यनुभवन्नाह – अहो! आश्चर्यम्। पुनरपि वाचं सन्धारयता मयोक्तम् – सिद्धमिति संस्कृतम्, पालिभाषायां त्वन्यदेव रूपं भवति। इदमपरमप्याशाजननम्। अस्तु तर्हि। आवामत्रैव विरमावः। नातः परं

---

१६५ अहःसर्वैकदेशसङ्ख्यातपूर्वाच्च रात्रेः (५.४.६७) इत्यनेनाचि समासान्ते यस्येति च (६.४.१४८) इति रात्रीकारालोपे रात्राह्नाहाः पुंसि (२.४.२६) इत्यनेन पुंस्त्वम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

मृत्तिकादि वोपलखण्डादि वापनेयम्। नावामुत्खननविशेषज्ञौ। कदाचित् मृत्तिकाद्यपनयन्तावभिलेखमेव विघातयेव यच्चानर्थाय कल्पेत।

भ्रमणानन्तरमतिथिगृहं प्राप्तेन छविन् इत्यनेन विद्युत्सन्देशो बैंकाकं प्रेषितो वृत्तं च प्रातर्यद् वृत्तं तत् सर्वं न्यक्षेणाधिकृतेभ्यः सूचितं यद्वशादुत्खननविशेषज्ञास्तैः प्रेषिताः पाषाणखण्डमुदचीखनन्। उत्खातश्च पाषाणखण्डः स्तम्भस्यैवोपरिभागरूप आसीत्। महती समुपलब्धिरिति हर्षप्रकर्षवर्षः सर्वत्र प्रसृतः। यत्सर्वथा लुप्तमित्यमन्यत तल्लब्धमिति विलक्षणमेवानन्दसन्दोहमजनयद् विद्वद्वृन्दारकेषु। तेन ममापि यशः प्रासरीसरीत्सर्वत्र। भारतीयेन विदुषेदमन्विष्टमिति। एतेनाघटितं घटयति विधिरिति यदुक्तं तत्प्रमाणितं भवति।

## १०४

एतत्सन्दर्भप्रसंगे मयकाऽन्यापि घटना श्राविता या प्राचामुपर्युद्धृतामुक्तिं सत्यापयति। अस्ति महाराष्ट्रेषु लादूरनामकं स्थानम्। कतिपयवर्षपूर्वं तत्र भूरकम्पत। तेन महान् विध्वंसः सञ्जातः। अभ्रंलिहाग्रा अट्टालिका अपि भूमिसाज्जाताः। गृहाणि ध्वस्तानि। तत्र शयाना जना पतन्तीभिश्छदिभिर्भित्तिभिरिष्टकाभिश्च हता आवृताश्च। शासनेन संखण्डा[१६६] वृतेषु जनेषु केचिज्जीवेयुरेवेतिधिया प्रवर्तितं तदपनयनकार्यम्। एकं दिनं यातं, द्वितीयं दिनं गतं, तृतीयं दिनमपि व्यतीतम्। चतुर्थदिन एकस्मिन्स्थले कश्चन दण्डी परिव्राजकः स्थितिमान् बभूवोवाच च संखण्डापयनकर्तॄन्, अपनयतेतः संखण्डानिति, अत्रास्ति कश्चिज्जनो योऽद्यापि जीवति। तद्वचसि प्रत्ययमनादधानाः संखण्डापनेतार ऊचुः – व्यतीतं दिनत्रयम्। एतावन्तं कालं संखण्डान्तर्हितः कोऽपि जनः प्राणान् धारयेदित्यसम्भवि। तेन संखण्डापनयनेन नार्थः। नैव, जीवत्येवात्र कश्चिज्जनः, श्वासप्रक्रिया तस्य साम्प्रतमपि प्रचलति – इत्युवाच परिव्राजकः। नैवं सम्भवति। किमिति भवानस्माननर्थके कर्मणि व्यापारयतीति पुनरूचुः संखण्डापनेतारः। अपनीयतामेवेति दृढस्वरेणोचे परिव्राजकः। परिव्राजक इति तद्वचोऽङ्गीकर्तव्यमेवेति सुतरामनिच्छन्तोऽपि संखण्डापनयनकर्मणि प्रवृत्ताः कर्मकराः। अपनीते च संखण्डे जन एकस्तैर्दृष्टो यस्तदानीमपि श्वसिति स्म। स तैरुद्धृतश्चिकित्सालयं प्रापितश्च। सम्यक् चिकित्सितः स उल्लाघतां प्रपेदे। अत्र कथं तेन परिव्राजकेन बुद्धं जीवत्यत्र इष्टकापाषाणदारुखण्डादिभिराक्रान्तोऽपि जन इति? नैषा तर्केण मतिरापनेया। अत्र प्रमाणमन्तःकरणप्रवृत्तय एव।

---

१६६ मलबा इति हिन्द्याम्, कमइतपे इत्याङ्ग्ल्याम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

यथा तस्य परिव्राजकस्य विषये जातं तथा ममापि।

ममायं वचोविन्यासः श्रोतृभिरुत्कर्णैः श्रुतः सुतरामभिष्टुतश्च। किञ्चित् मध्ये मध्ये प्रवर्तिताभिः करतालिकाभिरभिनन्दितश्च। तेन सुतरां प्रीतः पुनर्नवीकृत इव देवमन्दिरस्थसुहृज्जनैः सग्धिं सपीतिं च प्रवर्त्य रॉयल होटलाख्यं वासगृहं प्रत्यावृत्तः।

अपरेद्युः, सोमवासरे, २०.५.२०१३ दिने, प्रातर्दूतावासेन कृतो मया सम्पर्कः। राजदूतं द्रष्टुमिच्छामीति चेच्छा मया प्रकटिता। राजदूतसचिवेनोक्तं बैंकाकाद् बहिर्वर्तते राजदूतः। द्वादशवादने मध्याह्ने भवेत्तस्य प्रत्यावृत्तिः। भवन्तो द्विवादने समागच्छन्त्विति। अहं टैक्सीयानेन सार्धैकवादन एव दूतावासं प्राप्तः। द्विवादनेऽहं राजदूतेन समगंसिषि। तेनाध्यर्धहोरां यावन्मम चर्चा प्रवृत्ता। राजकुमार्या सह यद्यच्चर्चितं तत्तत्सप्रकरणं न्यक्षेण निवेदितम्। भारतादागच्छतामष्टविदुषां गमनागमनव्ययव्यवस्था तदावासभोजनादिव्यवस्था च बैंकाकनगरे करणीया भवेदित्यप्युक्तम्। एतद्विषये भारतीयसांस्कृतिकसम्बन्धपरिषदं पत्रं प्रेषयिष्याम्यार्थिक-साहाय्यार्थम् इत्यवोचद् राजदूतः। तदाश्वासनेन सन्तुष्टान्तःकरणोऽहं होटलं प्रत्यावृत्तः। विंशाद्दिनात्सप्तविंशं दिनं यावद् बैंकाकनगरे स्थित्वाऽष्टाविंशेऽहं भारतं प्रत्यावृत्तः।

## १०५

न प्रत्यावृत्तमात्र एवाऽहं भारतीयसांस्कृतिकसम्बन्धपरिषदा सम्पर्कमसाधयम्। एतादृशानि कार्याणि कालसव्यपेक्षाणि भवन्तीति किञ्चित्कालानन्तरमेव जिज्ञासा प्रवर्तनीयेत्यर्धमासं यावन्नैभृत्यमेवावलम्बिषि। तदन्वत्येति काल इति बुद्ध्यैकस्मिन् दिनेऽहं भारतीयसांस्कृतिकसम्बन्धपरिषत्कार्यालयमुपेतः। ततश्च प्रवृत्तिमलप्सि यत् परिषदा विद्वद्यात्राव्ययो तदावासादिव्ययो वा न शक्यो वोढव्योऽर्थाभावात्। यावद्धनं शासनेन परिषदे दीयते ततः सुतरामल्पमेवैषमो दत्तं येन यद्यत्कार्यार्थ-मार्थिकं साहाय्यं पूर्वं प्रतिश्रुतमपि परिषदा तत्तत्कार्यार्थमपीयं न दातुं शक्ता। नूत्नोपक्रमाणां कृते नु तत्कथैव नोदेति। श्रुत्वैतत्परं नैराश्यमहमापन्नः। साहित्य अकादेमी कदाचित्साहाय्यमभ्युपेयादिति तत्सचिवं द्रष्टुमहमुपेतः। तेनोक्तमुपलब्ध-मस्माभी राजदूतपत्रम्। परम् अकादेमीपद्धत्यनुसारेण स्वदेशे सम्पद्यमानानां कार्यक्रमाणां कृत एव वयं साहाय्यं प्रदातुं क्षमा न तु विदेशे। अत्रासामर्थ्यमस्माकम्। भवन्तोऽकादम्या महत्तरसदस्या[१६७] इति तदनुध्याय भवतां यात्राव्ययव्यवस्थां

---

१६७ फैलो इत्याङ्ग्ल्याम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

वयं यथाकथञ्चित्कर्तुं क्षमा न त्वन्येषां विदुषाम्। श्रुत्वैतन्महतीं चिन्तामहमापन्नः। परिषदा प्रतिषेधः। अष्ट विदुषां यात्रार्थं वासादिव्यवस्थार्थं च महान् धनराशिरपेक्ष्यते। कुतस्तद्व्यवस्था स्यात्। किमत्र करवाणि। विद्वत्सम्मानः महाराजकुमारीं प्रार्थितो मया। स तयाऽङ्गीकृतोऽपि। यथा कथमपि मया व्यवस्था करणीयैव। न निश्चितार्थाद् विरमन्ति धीराः। क ईप्सितार्थदृढनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत्। मम मनोऽपि तादृशमेव। बहु चिन्तयता मया मार्ग एक उद्भावितः। भारतस्थितो थाईदेशराजदूतो मयाऽत्रार्थे द्रष्टव्यः कदाचित्स कमप्युपायं मन्मनोरथसिद्धये मां बोधयेत्।

राजदूतं 'पिसान मनवपात्' इति नामधेयं द्रष्टुमहमुपेतः। राजकुमार्या आचार्योऽस्मीति तस्यासीन् मयि महानादरभावः। यद् वृत्तं पूर्वं वृत्तं तत्सर्वं तस्मै निवेदितम्। तदाकर्ण्य स उक्तवान् —"किञ्चित्कालपूर्वमेव भारतथाईदेशाभ्यां परस्परसम्बन्धसंवर्धनाय सन्धिः कश्चन समाश्रितः। तदर्थमुभाभ्यामपि देशाभ्यां वित्तकोषः कश्चन स्थापनीय इति निश्चितम्। कोषेऽल्पीयानेव राशिः प्रत्येकं देशेन प्रतिश्रुतः। पञ्चलक्षपरिमित एव सः। तं राशिमत्रभवतां कृतेऽहं प्रतिशृणोमि। परं भारतीयोऽयमुपक्रम इति भारतेनाप्यत्र सन्धिकृते प्रतिश्रुतो राशिर्विनियोक्तव्यः, कश्चन तदंशो वा। तत्रैवौचित्यमिति मयोक्तम्। भवन्तोऽस्मद्राजकुमार्या अध्यापकाः, भवत्सम्मानोऽन्येषां विदुषां च सम्मानः थाईदेशगौरवाय कल्पिष्यत इति निश्चप्रचम्। अहं स्वकीयं विदेशमन्त्रालयमेतदर्थं प्रेरयिष्यामि। अहं भवदर्थे यत्किञ्चिदपि कर्तुं शक्तः तत्सर्वं करिष्यामि। सर्वमपि व्ययं वोढुं स्वकीयं विदेशमन्त्रालयं प्रार्थयितुमहं सन्नद्धः। परं विदेशमन्त्रालयाधिकृता अत्र कथं पश्येयुरिति नाहं वेद। तदानुकूल्यं कदाचित्कष्टकरं स्यात्। प्रथमं तावद् बैंकाकस्थितेन भारतीयेन राजदूतेन अनिलवध्वा इत्यनेन चर्चां करोमि प्रेरयामि च तं यद्यो भारतीयो राशिभागस्सन्ध्यन्त– र्गतस्तं भवत्कार्यार्थं स विनियुङ्क्तामिति। दिनत्रयेणैव कार्यान्तरवशादहं बैंकाकं प्रति गच्छामि। तत्र अनिलवध्वा इत्यनेन चर्चां विधास्यामि। तन्निष्कर्षं च ततः प्रतिनिवृत्यात्रभवतः सूचयिष्यामि। प्रतिनिवृत्य तेनोक्तं यदनिलवध्वा इत्यनेनोक्तं यद् भारतीयो राशिभागोऽन्यकार्यविनियोगार्थं प्रतिश्रुत इति। तदा विचित्रा स्थितिर्मेऽभूत्। यावत्किमपि समस्यासमाधानं पश्यामि, तत्रान्तरायः कश्चनापतति। एवं चिन्ताचान्तचेतसो मे गतानि कतिपयान्यहानि। तदैकस्मिन् दिने प्रवृत्तिर्मयोपलब्धा यदनिलवध्वा इत्यनेन भारतीयो विदेशमन्त्रालयो विशेषार्थव्यवस्थां प्रार्थितः तत्प्रार्थना च मन्त्रालयेनाङ्गीकृतेति। तेन भारतशासनेनाष्ट विदुषां ममापि च नवमस्य यात्राव्ययो वोढव्यो भवेत्, आवासादिव्यवस्थाव्ययश्च थाईशासनेन। एतया व्यवस्थया परां निर्वृतिमहमापन्नः। यन्मया संकल्पितमासी– त्तत्सम्पन्नतासम्भावना सुतरां मां प्रासीषदत्। अष्टविद्वत्सु

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

प्रत्येकं विदुषा विदुष्या च मया कृतः सम्पर्कः, पारपत्रं तेष्वस्ति न वेति तेभ्यो ज्ञातं यात्रार्थं ते सन्नद्धाः सन्त्विति चोक्तम्। विद्वांसो विदुष्यश्च विभिन्नस्थानस्था इति तैः स्वनिकटस्थाद् विमानपत्तनाद् बैंकाकयात्रा प्रारब्धव्याऽऽसीत्। पाटलिपुत्रीया मिथिलेशकुमारी, गुवाहाटीया सुव्रताबरुआ चैन्नेनगरीया राजलक्ष्मीश्रीनिवासन् कालिकातातः, विजयवाटिकास्थो धूलिपालरामकृष्णो हैदराबादतः, सम्पतूर रंगनाथो बैङ्गलूरतः, श्रीगङ्गानगरस्थः सत्यव्रतवर्मा, जयपुरस्थः कम्भम्पाटि साम्बशिवमूर्तिः, शामलाजीस्थः मधुसूदनव्यासो दिल्लीतो बैंकाकनगरं प्रतस्थिरे। दिल्लीस्थथाई–दूतावासप्रथमसचिवो विचायाः स्वयं तान् प्रत्युद्गन्तुं विमानपत्तने समुपस्थितोऽभूत्। विभिन्नस्थानेभ्यो विभिन्नकाले विमानान्यागच्छन्ति। कालभेदासौविध्यमविगणय्य स विमानपत्तने समुपस्थितोऽभूदेव प्रापयच्च सर्वानपि विदुषो विदुषीश्च होटलाख्यं गृहं यत्र तेषां भारतस्थथाईदूतावासेन वासार्थं व्यवस्था कृताऽऽसीत्।

## १०६

अत्रान्तरे महाराजकुमारीकार्यालयात् सूचना प्राप्ता यत्सा कार्यान्तरातिपात–वशादेकोनत्रिंशेऽहनि नोपस्थातुं शक्तेति। सप्तविंशेऽहनि तयोपस्थातव्यं स्यात्। तदनुसारेण कृतं तिथिपरिवर्तनम्। सर्वाऽपि व्यवस्था समीचीनेति सुनिश्चितं कर्तुमहं दशदिनपूर्वमेव सिताम्बरमासस्यैकोनविंशेऽहनि बैंकाकं प्राप्तः। शिल्पाकरविश्वविद्यालयीयाः सर्वेऽप्यधिकारिणः संस्कृताध्ययनकेन्द्रस्य प्राध्यापकाश्च मया कार्यक्रमव्यवस्थार्थं सुतरां व्याप्रियमाणा अलक्ष्यन्त। निमन्त्रणपत्रादिकं तैर्मुद्रापितमासीत्। मत्परिचयं प्रस्तुवती पुस्तिकाऽप्येका श्रोतृषु वितरणाय तैरासीत् साधिता। सप्तविंशे दिने ग्रन्थद्वयलोकार्पणं विद्वत्सपर्या च सिंहासनकक्ष[१६८] इत्याख्ये शतद्वयसंवत्सरपूर्वं निर्मिते सम्प्रति च कलावीथिकारूपेणोपयुज्यमाने नातिदीर्घे कक्षे भविष्यतः सग्धिश्च सपीतिश्च विशाले प्रेक्षागृह[१६९] इति विश्वविद्यासंसदध्यक्षाया कुलपतिचर्या[१७०]श्चाचार्याया[१७१] खाइस्री सी अरुन् (संस्कृतरूपम् – कायश्रीः श्रीअरुण इति) इत्यस्या आसीन्ननिर्णयः।

---

१६८ Throne Hall इत्याङ्गल्याम्।

१६९ Auditorium इत्याङ्गल्याम्

१७० कुलपतिचरस्य स्त्रियां कुलपतिचरी इति रूपम्। भूतपूर्वे चरट् (५.३.५३)। इत्यनेन चरटि, चरटेष्टित्वाद्दिड्ढाणञ् (४.१.१५५) इत्यादिना ङीप्।

१७१ स्वयमाचार्या। आचार्यस्य स्त्री इत्यर्थे तु आनुकि ङीषि च सति णत्वाभावे आचार्यानी इति रूपम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कार्यक्रमदिवसाद् दिवसद्वयपूर्वं तं कक्षमहं द्रष्टुं गतः। लघुरयं कक्ष इति मे बुद्धिरभूत्। संस्कृतकेन्द्रपूर्वाध्यक्षो डा. सोम्बाद्यो मां तं कक्षं दर्शयितुं मया सत्राऽऽसीत् स मया स्वमभिप्रायं बोधितः। परन्तु प्राचीनोऽयं कक्षो महाराजकुमार्या स्वोपस्थित्याऽनेकशोऽलङ्कृतस्तत्पूर्वजैर्नृपतिभिश्चाध्यासित इति पर्याप्तस्थाना-भावेऽपि तत्रैव कार्यक्रमायोजनं समुचितमिति आचार्या खाइस्री मनुत इति स प्राह। अस्तु। सप्तविंशे दिने कार्यक्रमः प्रारब्धः। अकल्पनीयो जनौघस्तत्र समुपस्थितः। अहमासन्नदशकद्वयान्तरालेऽपि, थाईदेशाद् भरतभुवं प्रत्यागतोऽपि जनानां तादृक् स्नेहभाजनमिति रोमाञ्चं मेऽजनयत्। सर्वेषामप्यभ्यागतानां जनानां कृते कक्षे स्थानं नासीदिति तद्बहिरप्यासनव्यवस्था कृताऽभूदधिकृतैर्मण्डपे। कार्यक्रमप्रारम्भः सार्धपञ्चवादने निर्धारितः। तथैव सूचितमासीन्महाराजकुमार्या। अभ्यागतास्तु होरापूर्वमेव तत्रोपस्थिताः। तेषु प्रमुखा आसन् विश्वविद्यालयाधिकृता, भारतीयराजदूतस्तत्पत्नी च, भारते थाईदेशीयो राजदूतस्तत्पत्नी च, कनाडादेशे थाईदेशीयो राजदूतश्छलित इति नामधेयः, हिन्दूसमाजाध्यक्षः, तत्सचिवो, मानवमूल्यपरकस्य मद्ग्रन्थस्य प्रकाशिकायाः कालिकातास्थाया भारतीयविद्या-मन्दिराख्यायाः संस्थाया प्रमुखः सिम्प्लैक्स इंफ्रास्ट्रक्चर्स इत्याख्याया मार्ग-सेतु-भवनादिनिर्मात्र्याः संस्थायाः प्रमुखो बिट्ठलदास मूंधड़ा तद्धर्मपत्नी च, तस्या एव निर्मात्र्याः संस्थायाः प्रबन्धप्रमुखः शिवकिशन दमानी तद्धर्मपत्नी च, बैंकाकस्थेऽन्यस्मिन् विश्वविद्यालये, धर्मशास्त्रविश्वविद्यालये भारतीयविद्याध्ययन-केन्द्रस्य प्रमुखा डा. नाङ्लोक् लखना च।

## १०७

महाराजकुमार्यामासनमलङ्कृतवत्यां प्रारब्धः कार्यक्रमः। प्रथममीशवन्दना प्रस्तुता कोकिलकण्ठ्या श्रीमत्या ताराश्रीनिधिमहोदयया या नैकशो मम कार्यक्रमेषु, यदाऽहं बैंकाक आसं, सुमधुरं मङ्गलाचरणं प्रास्तौषीत्। सा तदानीं बैंकाकमधिवसति स्म तत्रत्येऽन्ताराष्ट्रिये विद्यालये च प्राध्यापिकारूपेण कार्यं करोति स्म। ततः सेवानिवृत्ता सा सम्प्रति स्वकीयं मूलनगरं बैंगलूरुमधिवसति। मदीयः कार्यक्रमो महाराजकुमारी चोपस्थिता भविष्यति तत्रेति च मत्तः प्रवृत्तिमुपलभ्य स्वकीयेन व्ययेनैव बैंकाकनगरमुपागता सा मय्यतितरां स्निग्धा। ईशवन्दनानन्तरं मत्परिचयः प्रस्तुत आचार्यया खाइस्री महोदयया। तदनु मानवमूल्यपुस्तकपरिचयः प्रास्तावि डा० बिट्ठलदासमूंधड़ामहाभागेन थाईसंस्कृताभिलेखग्रन्थपरिचयश्च मत्पूर्वसहकर्मिणा संस्कृताध्ययनकेन्द्रनिदेशकचरेण डा. चिरपत प्रपण्डविद्येन।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तदनु मद्भाषणमाविरासीत्। यत्र मया लिखितभाषणात्कश्चिदेवांशो वाचितो बहु च मौखिकमेवोक्तम्। मानवमूल्यपरकग्रन्थस्य वैशिष्ट्यं प्रतिपादयता मयोक्तं यदत्र मानवमूल्यशब्दानां परिभाषाः प्राचीनवाङ्मयादन्वेषमन्वेषं मया प्रतिपादिताः। स्थालीपुलाकन्यायेन सत्यशब्दमुद्दिश्य मयोक्तं यदस्य प्रथमपरिभाषा केनोपनिषद्यु–पलभ्यते। तत्रोक्तम् – अमायिता सत्यमिति। अकौटिल्यं वाङ्मनःकायानाम्। मद्भाषणानन्तरं भाषितं महाराजकुमार्या। अन्ते प्रवृत्ता विद्वत्सपर्या। प्रथमं पुष्पगुच्छेनाहं सभाजितो महाराजकुमार्या। मया स्वकीयं ग्रन्थद्वयं तस्यायर्पितम्। तच्च तया सर्वेभ्योऽभ्यागतेभ्यः प्रदर्शितम्। तदनु तया स्वपक्षतः किञ्चिदुपायनं मह्यं प्रत्तम्। तत्पश्चात् प्रत्येकं विदुषे विदुष्यै च सा स्वकीयमुपायनं समार्पिपत्। पूर्वनिर्धारितकार्यक्रमानुसारेण प्रत्येकं विदुषा च विदुष्या च स्वकीयोऽनुवाद–ग्रन्थस्तस्यायर्पणीय आसीत् परं किञ्चित्कालपूर्वमेव तस्या दक्षिणहस्त आघातो जात इति प्रासादाधिकृतैरनुवादग्रन्थार्पणं निरस्तं कदाचित्तत्कष्टं वर्धयेदिति। अनुवादग्रन्थाः पुनरेकपार्श्वे पटले स्थापिताः, महाराजकुमारी प्रतिगमनकाले तान् दृक्पातेन सम्भावयेदिति। तथैव च जातमपि। प्रत्येकमनुवादग्रन्थस्य परिचयो मया दत्तः। यदा मया सह साऽऽसीत्तदा सर्वेऽप्यन्ये स्वस्थान एवाभूवन् स्थिताः। मद्धर्मपत्न्याः स्वास्थ्यविषये साऽजिज्ञासत। नातिसमीचीनं तत्स्वास्थ्यमिति तामहं प्रत्यपीपदम्। 'भवतामपि कञ्चिच्छरीरसादं परिलक्षये। स्वास्थ्येऽवहिताः सन्तु श्रीमन्त' इति मां सा प्राह। न कश्चिद्रोगविशेषः, केवलं शरीरशैथिल्यमेव कार्यबाहुल्यजनितं च वार्धक्यजनितं चेति तामहमवोचम्। विंशतिक्षणान् यावदावयोर्मम च महाराजकुमार्याश्च सम्भाषणं प्रावृतत्। तदानीं प्रतिनिवर्तनोद्यता सा। यावत्कक्षदेहलीं सा प्राप्नोति तावत्सर्वेऽपि भारतादागता विद्वांसो विदुष्यश्च मंगलाचरणप्रस्तुतकर्त्री ताराश्रीनिधिश्च पंक्तिबद्धा स्वं प्रणामं तस्यै न्यवीविदन्। तदानीमवसरोऽयमिति तेषु तासु च प्रत्येकं विदुषो विदुष्याश्च मया परिचयः प्रस्तुतः। कया भाषयाऽनुवादः कृतः कस्य ग्रन्थस्येति चोक्तम्। कुतस्त्यः/कुतस्त्या वा विद्वान् विदुषी चेति चोक्तम्।

एवं सर्वानामन्त्र्य स्वकीयं कारयानं प्रति प्रस्थिता महाराजकुमारी। अहं निरन्तरं तया सहैवासम्। कारप्रवेशात्पूर्वं मामभिलक्ष्य पुनरवोचन्महाराजकुमारी – आचार्यवर्याः! स्वकीयस्वास्थ्येऽवहिताः सन्तु श्रीमन्तः। अमूल्यमस्मत्कृते भवज्जीवनम्[१७२]। मत्स्वास्थ्यविषये तच्चिन्ता मद्धृदयं गाढमस्पृशत्। एवं तस्या अहं स्नेहभाजनमादरभाजनं चेति हृदयद्रवप्रादुर्भूतैरुपचितैरस्रैर्मम दृष्टिरालुप्यत।

---

१७२ Professor, take care of your health. We need you.

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

## १०८

प्रसक्तानुप्रसक्ततयाऽत्रान्योऽपि कश्चन विषयो यमत्र चचर्यितुमिच्छामि। नवदिल्लीस्थया साहित्यअकादेमी संस्थया प्रमुखभाषात्वेन चतुर्विंशतिभाषाः स्वीकृताः। संस्कृतमपि तास्वेका। प्रत्येकं भाषाकृते तत्रास्ति भाषापरामर्शसमितिः। कतिपयमासपूर्वं संस्कृतभाषापरामर्शसमित्या निर्णीतं यन्मज्जीवनचरित्रवर्णनात्मकं चलचित्रद्वयं – एकमर्द्धहोरात्मकमपरञ्च होरात्मकं – निर्मातव्यमिति। कस्तन्निर्मात्विति चिन्ताप्रसंगे पूर्वतनं किञ्चिद् वृत्तं मे स्मृतिपथमुपामगत्। १९९६ वर्षीयोऽयं विषयः। एका चलचित्रनिर्मात्री मद्गृहमागत्य मामब्रवीद् दिल्ली–दूरदर्शनकृते 'लेखनीधारकाः' इति शृंखलायां चलचित्रनिर्माणायाहमादिष्टाऽस्मि। भवतां जीवनवृत्तमाश्रित्य चलचित्रं मया निर्मातव्यम्। महता संरम्भेण परिश्रमेण च चलचित्रं तया निर्मितं यद् दूरदर्शनतः प्रदर्शितमासीत्। साहित्यअकादेमीद्वारा चलचित्रनिर्मितिप्रसंगे तस्याश्चलचित्रनिर्मात्र्याः स्मृतिर्मे मनस्युद्गता परं तस्या नाम न मे स्मृतिपथमारोहत्। तस्याः संकेतोऽपि मयि नासीत्, यवननामानुसारि तस्या नामासीदिति धूमिला स्मृतिरासीन्मम। एकस्मिन् दिनेऽहं, धर्मपत्नी, सुतः शरच्चन्द्रश्च चलचित्रविषये विचारं प्रवर्तयमाना आस्म। परन्तु यस्या नामापि न ज्ञायते नापि च संकेतः कथं तया सम्पर्कः साधनीयः स्यादिति यक्षप्रश्नोऽस्माकं पुरत आसीत्। यदा मयोक्तं यवनीनां नामवत्तस्या नामासीदिति तदा सहसा धर्मपत्न्युक्तवती नीलोफर इति तस्या नामासीत्। तन्नाम्न उत्तरभागो न तत्स्मृतिपथमारूढः। तदा शरच्चन्द्रेणोक्तं नामप्रथमभागाधारेणापि इण्टरनेट–माध्यमेनाहं तस्याः संकेतमन्वेष्टुं प्रयतिष्ये। कृतश्च तेन प्रयत्नो लब्धं च साफल्यम्। डिफैंस कालोनीं निकषैव लाजपतनगराख्यायां वसतौ तस्या गृहम्। इण्टरनेटतस्तद्दूरभाषसंख्यां ज्ञात्वा कृतः शरच्चन्द्रेण तया सम्पर्कः। सर्वं स्मरामीति तयोक्तम्, रूपनगरे यदा शास्त्रिमहोदया आसंस्तदा तज्जीवनचरितवर्णनात्मकं चलचित्रं मया निर्मितमासीत्। सम्प्रत्यहं कश्मीरस्थश्रीनगराद् दिल्लीं प्रति प्रतिष्ठमानाऽस्मि। श्वस्तत्र प्राप्य भवद्भिः सह सम्पर्कं करिष्यामि। दिल्लीं प्राप्य कृतस्तया सम्पर्कः। स्वपतिना सञ्जयभानेन सहसाऽस्मद्गृहमुपेता सा। व्यतीतेऽप्यध्यर्धदशके भवद्भिः स्मृतास्मीति यत् सत्यं कृतकृत्यामात्मानं कलयामीति साऽवोचत्। यच्चलचित्रं १९९६ वर्षे तया निर्मितमासीद् दूरदर्शनकृते तस्य प्रतिलिपिस्तयाऽस्मभ्यं समर्पिताऽऽसीत्परं सा सम्प्रति कुत्रास्तीति न ज्ञायते। रूपनगराद् डिफैंसकालोनीस्थानपरिवर्तनकाले कुत्रापि न्यस्ता भवेदथवाऽस्थाने स्थापिता स्याद् भ्रष्टा वा स्यात्। सम्प्रति पुनर्नोपलभ्यते। किं साऽत्रभवत्या–मस्तीत्युक्ते साऽऽहास्तीति। तेन महती चिन्ता नोऽपेता। इतः पूर्वं सुतरां चिन्ताकुला

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

आस्म वयं कथं सा प्राप्या भवेदिति। महत्यन्तराले दूरदर्शनकार्यालयतस्तस्याः प्राप्तिर्न सुकरा। किञ्च, तत्प्राप्त्यर्थमावदेनं कर्तव्यं भवति, शुल्कादिकं वा देयं भवति। सेयं सुदीर्घा जटिला च प्रक्रिया। नीलोफरशमायां साऽस्तीति सर्वमपि सुसाधतां गतम्।

## १०६

साहित्यअकादेमी भवद्विषयकं चलचित्रं निर्मित्सतीति प्रसादसुमुखी साऽवश्यं तदर्थं चलचित्रं निर्मास्यामीति प्रोवाच। तच्च चलचित्रं मयाऽद्यावधिनिर्मितेभ्यः शताधिकेभ्यश्चलचित्रेभ्य उत्कृष्टतरं भवेदिति सर्वात्मना मम प्रयासः प्रवर्त्स्यतीति सा मामाश्वासयत्।

स्वपतिना सह सा साहित्यअकादेमीं गतवती तत्सचिवं साक्षात्कृतवती, चलचित्रनिर्माणविधौ स्वानुभवं कौशलं च निवेदितवती, अनुमानितव्ययविवरण–सूचकपत्रकसहचरितमावेदनपत्रं च तस्मै प्रदत्तवती। समितिरेकास्त्यकादेम्यां यैतादृशेषु विषयेषु विचार्य निर्णयमाश्रयति। तदनु साऽकादम्युपसचिवया रेणुभान इत्यनया समगंस्त। रेणुभान इत्यनयोक्तं यत् समितेरधिवेशनं मासपूर्वमेव जातम्। अपरमधिवेशनं षण्मासानन्तरं भवेद्वा ततोऽप्यधिककालानन्तरं वा। एतच्छ्रुत्वाऽपि न तस्या उत्साहो मन्दतां गतः। समितिस्तत्प्रस्तावं स्वीकरिष्यत्येवेत्यनुध्याय विनैव स्वीकृतिपत्रोपलम्भं सा चलचित्रनिर्माणकर्मण्यात्मानं व्यापीपरत् पुण्योदयोऽयं मम यन् मूर्धन्यविदुषश्चरितं चलचित्रमाध्यमेन वर्णयितुं मयाऽवसरो लब्ध इति। नाना दिनान्यस्मद्गृहे चलचित्रनिर्माणकार्यं प्रावर्तत। आ प्रातरानिशीथम्। तदीया नैके सहायका एतत्कर्मणि तया व्यापारिताः। अस्माकमुपवेशनकक्षस्तया स्टूडियोरूपेण परिणमितः। नैकेषां महापुरुषाणां मद्विषयकमभिप्रायं जिज्ञासितुं तत्साक्षात्कारोऽपि तया समायोजितः। अनेकशोऽन्यत्रापि स्वसहकर्मिभिः सह गत्वा तया साक्षात्कारप्रक्रिया सम्पादिता, यथाहि डा. कर्णसिंहगृहं सा गता, भारतीयविद्याभवनकार्यालयं च गता। सिताम्बरे मासि मम ग्रन्थद्वयलोकार्पणं बैंकाकनगरे भविष्यति, लोकार्पणं च करिष्यति थाईदेशमहाराजकुमारीति कस्मिंश्चिद् दिने सा मयोक्ता। तच्छ्रुत्वैव वयमपि तत्र गमिष्यामस्तदीयमपि वृत्तजातं चलचित्रे समावेशयितुमिति सोत्साहं साऽवोचत्। कुतो मार्गव्यवस्था भवेदिति किञ्चिच्चिन्तितमिव मामवलोक्य साऽवादीत्स्वयमेव स्वकीयमार्गव्ययं वयं वक्ष्याम इति। भवच्चलचित्रनिर्माणकर्मणि न वयमर्थेनार्थिनः। अद्भुतमभूतपूर्वमिति यद् व्याख्यातं पूर्वसूरिभिस्तद्वद्भवच्चलचित्रं भवत्वित्यत्रैवास्माकमर्थः। अहो! विलक्षणोऽ–

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

दृष्टपूर्वोऽश्रुतपूर्वश्चैतस्या एतद्भर्तुस्तत्सहायकानां मय्यादरभाव इति तां सर्वानप्यहं हृदयेनाभ्यनन्दिषम्। मार्गव्ययोऽस्माभिर्वोढव्यः स्यादेव। यद्यावासव्यवस्थां भवन्तोऽस्माकं कृते कर्तुं शक्नुयुस्तर्ह्यार्थिको भारोऽस्मासु नूनं नैयून्यं भजेतेति तदर्थं वयमत्रभवतः प्रार्थयामहे। प्रयतिष्येऽहं तदर्थं यथा कथञ्चिदित्यहं तानाश्वासयम्।

## ११०

चत्वारो जना चलचित्रनिर्मातृमण्डलांगभूताः सिताम्बरस्य मासस्य षड्विंशेऽहनि बैंकाकनगरमुपेताः। 'सुकोसोल होटल' इत्याख्यस्य वासगृहस्य यत्र ममावासव्यवस्थाऽऽसीत् सम्मुख एव पारेरथ्यं स्थिते 'फ्लोरिडा होटल' इत्याख्ये वासगृहे तद्वासव्यवस्था मया कारिताऽऽसीत्। तत्रैकोनत्रिंशं दिवसं (सिताम्बरस्य मासस्य) तैः स्थातव्यमासीत्।

डा. बिट्ठलदास मूंधड़ामहाभागा, यत्संस्थया मानवमूल्यपरको मम ग्रन्थः प्रकाशितः, तेऽपि ग्रन्थलोकार्पणकार्यक्रमे भागं ग्रहीतुं धर्मपत्न्या सह तद् वासगृहमध्यवसन् यदहम्। भारते थाईदेशराजदूतोऽपि तदेवाध्यवसत्।

भारतीयविद्यामन्दिरनिदेशकडा.बिट्ठलदासमूंधड़ासहायकः श्रीशंकरलाल-सोमानी मया सममेवैकोनविंशेऽहनि दिल्लीतः प्रस्थितो मया सममेव च त्रिंशेऽहनि ततः प्रत्यावृत्तः। सोऽपि तस्मिन्नेव वासगृहे स्थितो यत्र चलचित्रनिर्मातारः। तस्य मार्गव्यय ऊढो मूंधड़ामहाभागेनावासभोजनादिव्ययश्चापि। मम मार्गव्यय ऊढो थाईदेशस्थभारतीयेन दूतावासेन वासव्ययश्च भारतस्थथाईदेशीयदूतावासेन।

ग्रन्थलोकार्पण – विद्वत्सपर्याकार्यक्रमानन्तरं सहभोजव्यवस्थाऽऽसीत्। तद्व्ययो मूंधड़ामहाभागेनोढः। एवमेव स ऊढश्चलचित्रनिर्मातॄणां वासार्थमपि।

ग्रन्थलोकार्पणादिकार्यक्रमे चलचित्रनिर्मातारोऽप्युपस्थिता आसन्। विश्वविद्यालयचित्रकारास्तु तत्रासन्नेव। तैरपि चित्राणि तत्र कृतानि। एवमेव थाईदेशीयतत्तद्दूरदर्शनचित्रकारा अपि तत्रासन् यच्चित्राणि व्याख्यासहचरितानि तत्तत्प्रसारणकेन्द्रेभ्यः प्रसारितानि। अतीव समीचीनानि तानि वस्तुतो नेत्ररसायनानि। तत्रत्यैर्मयि प्रेषितानि तानि मच्चित्रकोषशोभां वर्धयन्ति।

लोकार्पणदिवसादपरस्मिन् दिवसे, २८.६.२०१३, बैंकाकस्थभारतीय-दूतावासाङ्गभूतेन भारतीयसांस्कृतिककेन्द्रेण विशेषेण थाय्यध्ययनसम्बद्धं डा. सत्यव्रतशास्त्रिणां संस्कृतसाहित्यावदानमित्यधिकृत्य चर्चागोष्ठ्येका समायोजिताऽऽसीत् यत्र भारतीयो राजदूतो, भारतात् प्राप्ता अष्ट विद्वांसो विदुष्यश्च,

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

थाईदेशीया नव विद्वांसश्च मद्विषये स्वविचारान् प्रकटितवन्तः, यच्छ्रावं श्रावमुदधे-रुत्तरङ्गपयःपूर इव प्रहर्षपूरो नामान्मे मनसि। अहमपि नाम यशःप्रार्थी। तद् यदि यशः प्रथते तत्कथं न मे मोदाय भवेत्। सत्यमेवोक्तमाचार्यदण्डिना—श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम्। सरस्वती भगवती मयोपासितैकतानेन मनसा। तस्या एव प्रसादो यद् विद्वत्परितोषमनुभवामि।

## १११

२६.६.१९३० मम जन्मदिवसः। अस्मिन् दिवसे चतुरशीतितमे वर्षे मम प्रवेशः। थाईपञ्चांगानुसारेण प्रतिद्वादशवर्षं भवत्येकैकमायुश्चक्रम्। प्रत्येकमायुश्चक्रं तद्दृष्ट्या किमपि वैशिष्टयं भजते। तदुत्सवमिव मन्यन्ते थाईदेश्याः। चतुरशीतिवर्षाणि सप्तममायुश्चक्रं भवति। अतो वर्षजयन्त्यपेक्षया महत्त्वमस्य। अयं मम जन्मोत्सवः थाईदेशे भवेदित्यासीन्ममाभिलाषः। सप्तविंशे दिने ग्रन्थलोकार्पणोत्सवः, अष्टाविंशे दिने भारतीयसांस्कृतिककेन्द्रे चर्चागोष्ठी। तत्परिसमाप्तौ भारतप्रत्यावर्तनं मम शक्यमेवास्त। परं जन्मदिवसे यात्रा न मह्यमरोचत। किञ्च, जन्मदिवसोत्सवो यदि थाईदेश्यैर्मम सुहृद्भिरेवायोज्यते तर्हि भूयसे ममानन्दाय कल्पेतेत्येकोनत्रिंशेऽहनि मया बैंकाक एव स्थेयमित्यास्थितः संकल्पः। संकल्पमिमं च बोधिता हिन्दूसमाजप्रधानपुरुषा यैस्तस्मिन् दिवसे विशेषाभिनन्दनकार्यक्रम आयोजितो यस्य नव्यता भव्यता च विलक्षणे एवास्ताम्। ते अनितरसाधारणं तत्रत्यानां मयि स्नेहातिशयमभिव्याङ्क्ताम्। मध्येसभागार-महमुपवेशितः सिंहासनप्रतिरूपायामासन्द्याम्, मन्त्रघोषेण शालवस्त्राभ्यां च सभाजितः। जन्मदिवसे केकाख्यं मिष्टान्नं स्वहस्तगतच्छुरिकयोत्कृत्य परेभ्योऽर्पणीयं भवति परे च तस्मायर्पयन्ति यस्यास्ति जन्मदिवस इति परिपाटी पाश्चात्याप्यन्य-देशीयैरपि स्वीकृता। तां परिपाटीमनुसृत्य घनीभूतपयःपिण्डमेकं बृहति पात्रे स्थापितं केकाकृतिं बिभ्रत् (केकस्याण्डमिश्रितत्वाद् देवालये तत्सेवनानौचित्यात्)। तदुच्छेदमुच्छेदं मया नैकेभ्यो जनेभ्योऽर्पितमास्वादनाय, मयापि च तत्सेवितं समाजप्रधानपुरुषैरर्पितं सत्। परिचयो मम बिठ्ठलदासमूँधड़ामहाभागेन प्रस्तुतः। परश्शतानां जनानामुपस्थितौ सम्पन्नोऽयं महोत्सवः। पञ्चाशद्वर्षाणि बैंकाकमधिवसतो मम न चैतादृशो भव्यः स्नेहातिरेकप्रयोजितश्च जन्मदिवसा-भिनन्दनोत्सवो मया साक्षात्कृत इति हिंदूसमाजाध्यक्षः कालान्तरे मामवोचत्। सग्धिं सपीतिं च तत्रत्यैः प्रवर्त्य चलचित्रनिर्मातृभिः, श्रीसोमानीमहाभागेन, आयुष्मता राजेशेन यमहं पौत्रवत् पश्यामि सह चाओफयानदीविहारार्थमहं प्रस्थितः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

देवालयाभिनन्दनकाले नदीविहारकाले च चलचित्रनिर्मातृभिर्नाना चित्राणि कृतानि येषु नैकानि मच्चलचित्रांगतां यास्यन्ति।

त्रिंशे दिनेऽहं प्रातर्बैंकाकनगरात्प्रस्थायापराह्णे दिल्लीं प्राप्तः। सर्वोऽयं कार्यक्रमो भगवदनुग्रहेण सुसम्पन्नः। यद्यत्संकल्पितमास्त मया तत्तन्न केवलं पूर्णतां गतमपि तु तथा पूर्णतां गतं यथा मया चिन्तितमेव नासीत्। ये विद्वांसो विदुष्यश्चेतो गतास्तैस्ताभिश्च कदाचित् स्वप्नेऽपि न कल्पितं भवेद् यत्ते विदेशं गत्वा तत्रत्यराजकुमारीद्वारा सम्मानिता भवेयुः।

उपरिष्टान्निर्दिष्टे सर्वस्मिन् घटनाचक्र एकोऽन्योऽपि प्रसंग उल्लेखमर्हति। षड्विंशेऽहनि सिताम्बरस्य मासस्य शिल्पाकरविश्वविद्यालयात्प्रतिनिवृत्तो वासगृहे स्वकक्षे यावदहं प्रविशामि तावत्पटले न्यस्तं 'जन्मदिवसः शुभोऽस्तु'[१७३] इति न्यस्ताक्षरं चाकलेटकेकमेकं पश्यामि तत्पार्श्वे च सिक्थवर्तिकां[१७४] दीपशलाकाधानीं[१७५] च। कुत इदं सर्वमिति व्यस्माययन् माम्। वासगृहाधिकारि–भिरिदमुपन्यस्तम्। कुतोऽपि श्रुतं स्यात्तैरद्य मे जन्मदिवस इति। राजकीयोऽ–हमध्यापक इति मयि विशेषादरभाग्भिरत्र तैः केकविन्यासः कृतः। अहो! भ्रमोऽप्येषां कीदृङ् मनोहारी। अहं वासगृहपरिचारिकामाहूय सूचयामि नाद्य मे जन्मदिवसः। स त्वेकोनत्रिंशे दिवसे। तथाप्यद्य केकोऽधिकारिभिः स्थापित इति मद्वचसा ते कृतज्ञतां ज्ञपनीया इति तामहं वदामि।

# ११२

एकोनत्रिंशे दिने नदीविहारात्प्रत्यावृत्य यावत्कक्षं प्रविशामि तावत्पुनः पटले केकं न्यस्तं पश्यामि पूर्ववच्च सिक्थवर्तिकां, दीपशालाकाधानीं, छुरिकां च। श्व एव मया प्रस्थातव्यं किमहमस्य केकस्य करवाणि, बह्वशितोऽस्मि, न मेऽस्त्यशनायेत्यादि यावच्चिन्तयामि तावत् स्फुरति मनसि मे विचारः कुतो न येऽत्र वासगृहे फ्लोरिडाख्ये वासगृहे च बन्धुजनाः सन्ति तानाकार्य समाशमस्य प्रवर्तयामि। अहं सोमानीमहाशयेन दूरभाषद्वारा सम्पर्कं करोम्यनुरुणध्मि च तं सद्यो मामुपैतुम्। को हेतुरित्यपि तं निवेदयामि। स मूंधड़ामहाभागं सूचयति। अत्रान्तरे चलचित्रनिर्मातॄनप्यहं निमन्त्रये। पञ्चदशकलाभिः सर्वेऽपि ते

---

१७३ Happy birthday इत्याङ्ग्ल्याम्।

१७४ मोमबत्ती (Candle)

१७५ Matchbox



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

मत्कक्षमुपायातः सम्भूय सिक्थवर्तिकां मत्तः प्रज्वाल्य केकं च कर्तयित्वा – केककर्तनकाले शुभोऽस्तु जन्मदिवस इति मधुरमधुरं गायन्तो मन्मुखे केकखण्डं प्रावेशयन्नहं च तेषाम्। तदनु सर्वमपि केकखाद्यं निःशेषतां गच्छति। एतस्य मधुरस्य मनोहरस्य प्रसंगस्य माध्वीकमाधुर्यधरा स्मृतिश्चिरं स्थास्यति मेऽन्तरंगे। तथैव च स्थास्यति सा शिल्पाकरविश्वविद्यालयसंस्कृताध्ययनकेन्द्रप्राध्यापकानां कार्यक्रमसाफल्याय दिवानिशं कृतः परिश्रमः। भारतात्समागतैर्डा. मधुसूदनव्यास–धूलिपालरामकृष्ण–प्रभृतिभिर्विद्वद्भिरष्टाविंशेऽहनि प्रातर्मामुपेत्योक्तं यद् यदि तैर्बैङ्काकागमनप्रयोजनसूचकं प्रमाणपत्रं लभ्येत तर्हि तेषां कृते तदुपकारि स्यात्। तद्विषये मया सोम्बात् इत्यनेन चर्चा कृता केन्द्रपक्षतस्तद् दातुं शक्यते सद्य एवेति तेनोक्तम्। सायाह्ने सांस्कृतिककेन्द्रे चर्चागोष्ठ्यासीद्यस्याः चर्चा मयोपरिष्टात् कृता। सा हि अपराह्णे चतुर्वादनाद्रात्रौ सपादनववादनं यावत्प्रवृत्ता। तदनु च प्रवृत्ता खादतपिबता। ततो निर्वृत्तेन सोम्बात् इत्यनेन स्वकार्यालयं गत्वा मध्यरात्रे द्वादशवादनं यावच्छ्राम्यता कम्प्यूटरयन्त्रमाध्यमेन प्रमाणपत्राणि साधितानि परेद्यवि विदुषां भारतं प्रति प्रस्थानात्पूर्वं तेभ्यो दत्तानि च। अपरञ्च। सप्तविंशेऽहनि ग्रन्थलोकार्पणकार्यक्रमानन्तरं प्रवर्तमानायां सग्धौ बृहदाकारं चित्रमेकं प्रादर्श्यत यत्र मम बाल्यकालात्प्रभृति साम्प्रतिककालपर्यन्तं नानावृत्तसूचकानि चित्राणि नैरन्तर्येण प्रादर्श्यन्त। सेयं चित्रावलिः सोम्बात् इत्येतेन 'जर्नी विद ए सैवेण्ट' इत्याख्यान्मम पुत्रकल्पेनामेरिकाभिजनेन रिचर्ड ब्राऊन इत्याख्येन हृषीकेशानन्ददास इति भारतीयं नामापि बिभ्रता सम्प्रति बैंकाकनगरकृताधिवासेन रत्नविशेषज्ञेन बैंकाकनगरात् प्रकाशितात् पुस्तकात् मम 'वेबसाइट' इत्यतश्च संगृहीतान्यासन्। सोऽयं चित्रसंग्रहस्तेन स्वविश्वविद्यालयीयकलाविभागाच्चलचित्रतामापादितोऽभूत्।

## ११३

थाईदेशसम्बद्धकाव्यरचनाप्रसंगेन थाइदेशविलासात्प्रारभ्य श्रीरामकीर्तिमहाकाव्य-पर्यन्तं बहूक्तं मया। परमिदमत्रावधेयं यन्मया थाईदेशविषयिणी काव्यरचनैव न केवलं कृता। अन्यदपि बहु कार्यं मया कृतम्। त्रयोऽनुसंधानग्रन्था अपि प्रणीताः। कालक्रमेण तद्विवरणमिह प्रस्तौमि। तेषु ग्रन्थेषु द्वावाङ्ग्ल्यैकश्च हिन्द्या। प्रथमस्तेष्वस्ति "स्टडीज़ इन संस्कृत एण्ड इण्डियन कल्चर इन थाईलैण्ड", थाईदेशे संस्कृत–भारतीयसंस्कृति–विश्लेषण–परम्परा। सोऽयं १९८२ वर्षे दिल्लीस्थया परिमल पब्लिकेशन्स इति संस्थया प्रकाशितः। अत्र सप्त निबन्धाः


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

सन्ति संकलिताः। प्रथमो भारतथाईदेशयोः परस्परेण संस्कृतिदृष्ट्या साम्यमुद्घाटयति। चिरकालादुभयोरपि देशयोर्भेदेऽप्यभेदोऽनितरसाधारणो विस्मापयते सर्वान्। नाना शताब्दीर्भारतदेशाद् व्यापारिणो भारतीयपण्यपूर्णैर्जलपोतैराग्नेय्यां दिशि स्थितं देशपूगं प्रति प्रतस्थिरे। स्याम इति नाम्नाऽभिज्ञातो थाईदेशोऽपि तदङ्गभूत एवेति तत्समुद्रपत्तने तेऽवतेरुस्तत्रत्यभिन्ननगरेषु विचेरुः स्वकीयं पण्यजातं विक्रीय तद्व्यतिहारेण तदीयं पण्यजातं च तत आदाय स्वदेशं प्रत्याययुः। केचन पुनस्तेषु तत्रैव वसतिं चक्रुः। थाईदेशदक्षिणदिग्विभागे सन्ति केचन जना ये स्वनाम्ना 'कालिंग' इत्यंशं योजयन्ति। स्पष्टमेव कलिंगदेशात्तत्पूर्वपुरुषा समागताः स्युः। पुरा युगे कलिंगस्थगोपालपुराद् दक्षिणापथस्थताम्रलिप्तेश्च भारतीया आग्नेयदेशान् प्रति प्रस्थानं कुर्वन्ति स्मेत्यैतिह्यविदः। प्रथमं धनायाप्रेरिता व्यापारिण आग्नेयदेशान् गताः स्युः। पश्चाद्धर्मप्रचारका अपि तत्र गताः, यत्थाईभाषागतऋषि (उच्चारणं शब्दस्यास्य तत्र रसी इति) तापस (उच्चारणं शब्दस्य तस्य तत्र दाब इति) मुनीत्यदिभिः शब्दैर्ऋषीणां तापसानां च यत्र तत्र देवालयेषु, भित्तिषु, सेमा (सीमा) निर्धारकेषु पाषाणखण्डेषूत्कीर्णाभिर्मूर्तिभिरभिज्ञायते। तत्रत्यर्षीणां तापसानां चाकृतिर्भारतीयर्षितापसाकृत्या संवदति, शिरसि जटा, कण्ठे रुद्राक्षमाला, दीर्घं श्मश्रुकूर्चं[१७६] पद्मासनं, ध्यानमुद्रा च। थाईदेशे ऋषिनाम्ना सन्ति कुट्योऽपि – कु रसी (कुटी ऋषि), थम् रसीत्यादि। थाईदेशे दक्षिणापथे वृद्धजना अद्यापि भारतीयपद्धत्या शाटिकां[१७७] धारयन्ति, अन्तरं केवलमिदमेव यत्सा जानुदघ्नैव[१७८] भवति। अधुनातनेषु नगरस्थेषु वासगृहेष्वपि नियुक्ता भवन्ति तादृशाः कर्मकरा ये प्राचीनथाईपरम्परावभासं देशान्तरेभ्य आगतान् नीलवर्णशाटिकापरिधानेन कारयन्ति। यत्र तत्र स्थापितासु वर्तमानराजवंशपूर्वराजानां[१७९] मूर्तिष्वपि ते शाटिकापरिधानालंकृता नयनयोरयनं यान्ति।

थाईदेशसंगीतं 'दोन्त्री' शब्देनाभिधीयते यत् तस्य 'तन्त्री' इति मूलसंस्कृतरूपं पिशुनयति।

---

१७६ द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् (२.४.२) इत्यनेनैकवद्भावे स नपुंसकम् (२.४.१७) इत्यनेन नपुंसकम्।

१७७ धोती।

१७८ प्रमाणे द्वयसज्दघ्नञ्मात्रच (५.२.३७) इत्यनेन प्रमाणार्थे दघ्नच्प्रत्ययः।

१७९ राजाहःसखिभ्यष्टच् (५.४.९१) इत्यनेन टचि समासान्ते नस्तद्धिते (६.४.१४४) इत्यनेन नकारलोपे च रूपम्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

थाईदेशे कृताधिवासेन मया तत्र प्राचीनहिन्दूमन्दिरान्वेषणानुसन्धानप्रसंगेन थाईदेशीयसंस्कृताभिलेखानुसंधानान्वेषणप्रसंगेन च नाना स्थलानि गमिकर्मीकृतानि। तत्रैकस्मिन् स्थाने यन्मया दृष्टं तदद्यापि साक्षात्पश्यन्तमिवात्मानमनुभवामि। रॉय एत् इति नगरे गन्त्रीविरामस्थाने गन्त्र्यागमनप्रतीक्षारतोऽहमासम्। तत्र विरला एवासन् यात्रिणः। आसीद् गोधूलिवेला। तदानीमेवाकस्मात्पतितौ मे दृष्टौ द्वौ बालकौ मात्रा सहितौ। तौ दृष्ट्वैव परं विस्मयमहमुपागतः। तावास्तां काकपक्षधरौ काकपक्षाश्चासन् पञ्चसंख्याकाः। द्वौ शिरसो दक्षिणतो द्वौ वामत एकश्च मध्यभागे, स च स्थूलतरः। अद्यत्वे विरलदर्शना एव काकपक्षधराः। थाईदेशे सुदूरस्थाने तद्दर्शनं महान्तं मे विस्मयमजीजनत्। हठाच्च मे श्रीरामायणपद्यं स्मृतिपथमुपागतं यत्र मुनिर्विश्वामित्रो विकर्तॄणां[१८०] राक्षसानां विनाशाय महाराजं दशरथं तस्य काकपक्षधरं ज्येष्ठं पुत्रं रामं[१८१] याचते –

स्वपुत्रं राजशार्दूल रामं सत्यपराक्रमम्।
काकपक्षधरं वीरं ज्येष्ठं मे दातुमर्हसि[१८२]।

तथैव च स्मृतिपथमुपागतं तत्प्रकरणेनैव सम्बद्धं वचः –

कौशिकेन च स किल क्षितीश्वरो राममध्वरविघातशान्तये।
काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते[१८३]।।

काकपक्षाणां पञ्चसंख्याऽपि चमत्कार इव मम कृत आसीत्। कालिदासीयपद्य (११.१) व्याख्यायां तामेव सङ्ख्यां निर्दिशति हेमाद्रिः – काकपक्षाणां शिखण्डानां धरः। राजकुमाराणां पञ्च शिखा भवन्तीति बहुवचनम्। भारतीयपरम्परानिर्वहणं कथं यथातथं थाईदेशे भवतीति जितं भारतीय–संस्कृतिप्रभावेण।

थाईदेशे राजचिह्नं गरुडः। थाईदेशनरेशाश्चक्रिवंश्याः। चक्री च भगवान् विष्णुः। तद्वाहनं गरुडः। अतो गरुडस्य राजचिह्नत्वेन स्वीकृत्यौचित्यम्।

---

१८० विकारं कुर्वताम् इत्यर्थः।

१८१ अकथितं च (१.४.५१) इत्यनेन कर्मसञ्ज्ञायां कर्मणि द्वितीया (२.३.२) इत्यनेन द्वितीया।

१८२ रामायणम्, १.१६. ८–९

१८३ रघुवंशम्, ११.१. अस्मिन्नेकादशे सर्ग एव द्विः काकपक्षशब्दो महाकविना प्रयुक्तः एकदा श्रीरामकृते – काकपक्षकधरोऽपि राघवोऽन्यत्र रामलक्ष्मणयोरुभयोरपि कृते – तौ प्रमाणचलकाकपक्षकौ भ्रातराववभृथाप्लुतो मुनिः।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

थाईदेशीयकलाविभागस्य प्रतीकचिह्नं गणेशः। तद्द्वारा सञ्चालितयोः शिल्पाकरविश्वविद्यालयराष्ट्रियरंगशालयोः प्रतीकचिह्नमपि स एव। राष्ट्रियरंग–शालापुरतः प्रतिष्ठितोऽस्ति स्थानकमुद्रया[१८४] गणेशस्य सर्वशुक्लो विग्रहः। तदुपरिभागे च सन्ति लौहशलाकाभिर्निर्मिताः त्रिमूर्ति (ब्रह्म–नारायण–ईश्वर) विग्रहाः। थाईदेशीयविश्वविद्यालयेषु ख्याततमस्य चुलालौङ्कौर्नविश्वविद्यालयस्य कलासंकायभवनस्य दक्षिणतो वामतश्च विद्याधिष्ठातृदेव्या वाग्देव्याः सर्वशुक्ले प्रतिमे स्तः प्रतिष्ठिते। भगवान् विश्वकर्मा यन्त्राधिदेवतेति स्वर्णमयी तन्मूर्तिर्भूमिबलजलबन्धं निकषाऽस्ति स्थापिता कदाचित् तत्सुरक्षार्थमेव। एवमेव यत्र तत्र देवालयेषु वाऽन्यत्र वा गरुडानां, किन्नरीणां, यक्षाणां च मूर्तयोऽक्षिलक्षीभवन्ति।

## ११५

हिन्दूधर्मो थाईदेशे ब्राह्मणधर्म इत्याख्यायते। तदर्थं यः शब्दस्तत्र प्रयुज्यते सोऽस्ति 'सासन फ्राम' इति। सासन इति संस्कृतशासनशब्द एव। थाईदेशे शकारः षकारश्च सकाररूपेण परिवर्त्येते। शासनं धर्म इत्यनर्थान्तरम्। फ्राम इति ब्राह्मणशब्दस्य परिवर्तितं रूपम्। 'सासन फ्राम' ब्राह्मणशासनमिति। थाईदेशे भगवतो ब्रह्मणश्चतुर्मुख्यो[१८५] मूर्तयो यत्र तत्र दृष्टिपथमापतन्ति। बौद्धा अपि श्रद्धाभरभरिता देवाधिदेवाय तस्मै प्रणामाञ्जलिं समर्पयन्ति। कथं तस्य पूजा थाईदेशे बुद्धानुयायिबहुले प्रचलितेति कदाचित्स्याद् भारतीयानां कृते जिज्ञासाविषयः। अत्रेतिहासमाचक्षते। स चेत्थमस्ति – अस्ति बैंकाकनगरे 'ऐरावण होटल' इत्याख्यं वासगृहम्। तस्य निर्माणकार्ये प्रवृत्ते निर्माणं मुहुर्मुहुः प्रतिहन्यते स्म। तेन निर्मातृषु महान् क्षोभः प्रवृत्तः। तदैव केनापि ब्राह्मणेनोक्तं स्थापयतात्र भगवतो वेधसो मूर्तिमिति। स्थापितायां मूर्तौ न प्रादुरासीत्कोऽप्यन्तरायः। वासगृहनिर्माणं च सुखं पूर्णतां गतम्। महती देवता ह्येषा निर्विघ्नकार्यपरिसमाप्त्यर्थं पूजामर्हतीति थाईदेश्यानां मनसि भावोऽभूद् दृढं निखातः। ततःप्रभृति देशे तत्र भगवतोऽस्य पूजार्च्चनादिकं प्रारब्धम्। ऐरावणवासगृहं निकषा स्थापितस्य भगवद्ब्रह्मदेवस्य पूजनमनारतं प्रवर्तते। स्वमनःकामनापूर्तये श्रद्धालवो नृत्यादिकं

---

१८४ Standing posture इत्याङ्ग्ल्याम्।

१८५ नखमुखात् सञ्ज्ञायाम् (४.१.५८) इत्यनेन सञ्ज्ञायामेव ङीष्निषेधः अन्यत्र तु तस्य प्रवृत्तिरस्त्येव – यथा ताम्रमुखी कन्या।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तत्रायोजयन्ति धूपं, दीपम्, अगुरुवर्तिका ज्वलयन्ति[१८६], नैवेद्यरूपेण पुष्पमाल्यं[१८७] दारवं हस्तिनं चार्पयन्ति। तदर्थं तद्विक्रेतारः सन्ति तत्र लघुकाय– बृहत्कायदारव–हस्तिप्रतिकृतीनाम्। नर्तक्यश्चापि सन्ति तत्र सुरूपाश्च सुवेशाश्च।

थाईदेश्यानां नाना हिन्दूदेवताभिः परिचयः। प्रमुखास्तत्र सन्ति ब्रह्मविष्णु–महेश्वराः। अन्या देवताः सन्ति – इन्द्रः, लक्ष्मीः, गणेशः। तद्वाहनेषु सन्ति त्रिशुण्ड ऐरावणः, गरुडो, हंसो, नन्दी च।

योम्मराट्, यिम इतिरूपेण वाऽभिख्यायमानो यमराजोऽपि तत्र पूजाभाजनम्। त्रयाणां धर्माणां तत्र सहावस्थितिरवलोक्यते। सर्वोपरि बौद्धधर्मः, तदधस्ताद् हिन्दूधर्मः, तदधस्ताच्च भूतप्रेतपूजाधर्मः[१८८]। बहिरलिन्दं स्तम्भरूपा देवालयाः सन्ति यत्र थाईदेश्याः प्रेतात्मभ्यो बलिमर्पयन्ति, तत्पार्श्व एव भगवतो ब्रह्मदेवस्य भवति प्रतिमा प्रतिष्ठिता। गृहान्तर्भवति प्रतिष्ठिता भगवतो बुद्धदेवस्य प्रतिमा।

## ११६

थाईभाषामधिकृत्यापि ग्रन्थेऽत्र प्रवर्तितो विमर्शः। सा संस्कृतशब्दबहुलेति प्रकाशम्। अमेरिकास्थयेलविश्वविद्यालये संस्कृतप्राध्यापकेन विलियम जे. गेडनी इत्याख्येन विदुषा स्वकीये ग्रन्थे Sanskrit Loan Words in Spoken Thai लोकप्रयुक्तायां थाईभाषायां संस्कृतात् परिगृहीताः शब्दा इत्याख्ये यदुक्तं तदत्र प्रमाणरूपेणोद्ध–रणमर्हति–लोकप्रयुक्तायां थाईभाषायां तावन्तः संस्कृतमूलकाः शब्दा यावन्त एङ्ग्लोसैक्सनमूलकायाम् आङ्ग्लभाषायाम्[१८९]। एते संस्कृतमूलकाः शब्दाश्चतुर्धा विभक्तुं शक्यन्ते। प्रथमो विभागः – ते शब्दा ये संस्कृतरूपेणैवोच्चारिता भवन्ति, तेषामर्थश्चापि स एव यः संस्कृते। द्वितीयो भागः–ते शब्दाः ये संस्कृत–रूपेणैवोच्चारिता भवन्ति परन्तु तत्रार्थभेदः (संस्कृते भिन्नोऽर्थो थाईभाषायां भिन्नोऽर्थः)। तृतीयो भागः – ते शब्दा यत्रोच्चारणे कश्चिद् भेदः। थाईभाषायां केषाञ्चन व्यञ्जनध्वनीनामत्यन्ताभावः। तान् ध्वनींस्तद्देश्या नोच्चारयितुं क्षमाः। यथाऽत्र अकारादा औदीच्या इत्यौदीच्यानां विषये प्रवादः तथैव तत्रापि। चतुर्थो

---

१८६ ज्वलह्वलह्मलनमामनुपसर्गाद्वा इति गणसूत्रेण पाक्षिकमित्संज्ञाश्रयणेन मितां ह्रस्व (६.४.६२) इति ह्रस्वत्वे रूपम्।

१८७ सर्वो द्वन्द्वो विभाषयैकवद् भवति इति परिभाषया एकवद्भावः।

१८८ Spirit worship इत्याङ्ग्ल्याम्।

१८९ There are as many words of Sanskrit origin in spoken Thai as there are words of Anglo-Saxon origin in spoken English.


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

भेदः—ते शब्दा यत्र समान एवार्थे शब्दद्वयप्रयोगः। तच्छब्दद्वयं समानमेवार्थ-मभिव्यनक्ति। प्रत्येकभागस्थाः शब्दाः सोदाहरणमत्र प्रस्तूयन्ते। प्रथमभागान्तर्गताः — वेला, नाडिका, विवाह, मांसविरत, महाराज—प्रभृतयः। द्वितीयभागान्तर्गताः — प्रार्थना (= इच्छा, आकांक्षा), इच्छा (= ईर्ष्या, मत्सरः), करुणा (= कृपया), सैन्धव (= धकारध्वनिर्थाईभाषायां नास्ति) (= लवणम्) काञ्चन (= स्वर्ण) प्रभृतयः। तृतीयभागान्तर्गताः — प्रमान् (प्रमाणमिति संस्कृते) (अर्थः अनुमानतः), परिमान् (संस्कृते परिमाण इति), (थाईभाषायां स एवार्थः यः संस्कृते), साला (संस्कृते शाला) (= थाय्यामपि संस्कृतार्थ एव), अनेकप्रसोङ् (= संस्कृतेऽनेकप्रसंग), (थाय्यामपि संस्कृतार्थ एव), सवद्दी (संस्कृते स्वस्ति), प्रपा (= पानीयशालिका, थाय्यामपि स एवार्थः), महानखौन् (संस्कृते महानगरमिति), रौथथित् (संस्कृते रथस्थितिरिति) (अर्थः—ट्रैफिक जैम इति), फिफिथ फन् (संस्कृते विविधबन्ध इति) (अर्थः अद्भुतालयः, म्यूज़ियम इति), राक् (संस्कृते रागः) (अर्थः प्रेमेति) प्रभृतयः। चतुर्थभागान्तर्गताः शब्दाः — मितसहाय (उभावपि संस्कृतमूलकौ समानार्थकौ शब्दौ मित्र सहाय इति), हेद्कान् (उभावपि संस्कृतमूलकौ समानार्थकौ शब्दौ हेतु कारण इति), राङ्काय (प्रथमशब्दः राङ् इति थाईमूलकः शरीरार्थकः, अपरः कायशब्दः संस्कृतमूलकः, सोऽपि शरीरार्थकः)। थाईभाषायाम् उभयोरपि सहप्रयोगः, अर्थस्तु स एव, शरीरमेव।

## ११७

थाईदेश एकद्वावुत्सवावपि भारतीयाभ्यामुत्सवाभ्यां संवदतः। भारतेऽस्ति होलिकोत्सवो यत्र जना अन्योन्यं जलेन स्नपयन्ति। विनोदरसिकास्ते परिचितेष्वपरिचितेषु च शृंगकैर्जलं क्षिपन्ति। लिम्पन्ति च मुखादीन्यंगानि शुष्केण रक्तवर्णचूर्णेन। एतादृश उत्सवो थाईदेशे भवति सौङ्क्रान्समाख्यः। यद्यपि शृंगकजलप्रहार उभयत्रापि, थाईदेशेऽपि भारतदेशेऽपि, तथापि जलस्वरूपेऽस्ति भेदः। भारते रक्तचूर्णमिश्रितजलप्रक्षेपो थाईदेशे चामिश्रितजलस्य प्रक्षेपः। तत्र कालभेदोऽपि। होलिकोत्सवश्चैत्रमासि, सौङ्क्रानुत्सवो वैशाखमासि प्रथमेऽह्नि मकरसंक्रान्तौ (अत एव सौङ्क्रान् = संक्रान्तिरिति तस्याभिख्या)। थाईदेशोत्तरदिग्विभागे चाङ्माईनाम्नि नगरे कोऽपि विशिष्टोऽस्य महिमा। दिग्भ्यो विदिग्भ्यश्च जना एतमुत्सवं नेत्राभ्यां पातुं समवयन्ति। मम थाईदेशप्रवासकाल एकदाऽहमपि तत्र गतः। नगरं निकषा नद्येका प्रवहति। तत्तीरे समवयन्ति सहस्रशो जनाः। तत्सेतौ स्थितास्त उत्सवस्यास्य शोभामक्षिलक्षीकुर्वन्ति। नदीतीरे


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

स्थितोऽहं यावदुत्सवशोभां तद्गतेन मनसा निभालयामि तावदेव त्रिचतुराः कन्यकाः 'श्रीसन्त' इत्युक्त्वाऽनवहिते मयि जलस्य पूर्णेनोदञ्चनेन मां स्नपितवत्यस्तत्कृत्वा च सकरतालिकाबन्धं भृशं प्रहसितवत्यः। अहमपि ताभिः सह साट्टहासं प्रहसितः। एतदेवोत्सवस्वरूपम्। इदं स्वरूपं मया २४.४.१९७६ दिने बैंकाकनगरात् डा. कृष्णलालमहाभागं प्रति प्रेषिते पद्यमये पत्र इत्थमाविष्कृतम् –

वैशाखमासप्रथमेऽह्नि थाई–
देशे भवत्युत्सव उत्सवोऽक्ष्णोः।
अह्नो हि तस्मान्नवहायनस्य
प्रारम्भ इत्यत्र जनो ब्रवीति।।

सौङ्क्रान् समाख्योऽद्भुत उत्सवोऽयं
थाय्याख्यदेशोत्तरदिग्विभागे।
चाङ्माय्यभिख्ये नगरे मनोज्ञे
सोत्साहमायोज्यत उत्सवोऽक्ष्णोः।।

अवेक्षितुं तं तरसोपयान्ति
दिग्भ्यो विदिग्भ्यश्च च जना अनेके।
सहस्रशश्चाप्यथ लक्षशश्च
सर्वं तदाभाति विचित्रमेव।।

दिनत्रयं यावदयं प्रवृत्तः
शुभोत्सवो लोकमुदे प्रवृद्धः।
नृत्यन्ति गायन्ति हसन्ति यान्ति
प्रोन्मुक्तभावेन जनाः समेऽत्र।।

जलं तथाऽन्योन्यमिह क्षिपन्ति
दिनत्रयं यावदनारतं ते।
असंस्तुतं वाऽप्यथ संस्तुतं वा
जलेन कामं स्नपयन्ति हृष्टाः।।

स्त्रियः पुमांसश्च समं समेऽपि
क्रीडन्ति मोदात् सलिलेन कामम्।
नारीति तेषां नर इत्ययं वा
विशेषलेशोऽपि न लक्ष्यतेऽत्र।।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

न शीलभङ्गो न च वृत्तभङ्गः
स्वप्नेऽपि तेषां परिकल्पनीयः।
क्रीडेति सर्वे परिहासहेतोः
सामान्यभावेन जलं क्षिपन्ति।।

## ११८

भारतीयोत्सवसमानो योऽपर उत्सवो मया थाईदेशे दृष्टः सोऽस्ति लॉय क्रथोङ् इति। उत्सवोऽयं जलपूजनसम्बद्धः। उत्सवदिने शतशो जना नानावर्णेषु नानाकृतिषु च पत्रपुटकेषु पुष्पाणि सिक्थवर्तिकाः किञ्चिद् फलादि च न्यस्य स्रोतस्सु, पुष्करेषु, कुल्यासु, नदीषु च प्रवाहयन्ति। जले प्रवहन्ति तानि शतशः पुटकानि, नीलवर्णाद् गगनाच्युतास्ताराखण्डा इव कामप्यपूर्वां सुषमां बिभ्रति।

लोकप्रसिद्धपरम्परानुसारेण सुखोदयकाल उत्सवस्यास्य प्रारम्भोऽभूत्। कथं थाईदेशे लॉय क्रथोङ् उत्सवस्य प्रारम्भ इति विषयेऽस्त्येका तत्र देशे प्रसिद्धा कथा। सेत्थमस्ति—पुरा थाईदेशं नाना राजवंशाः शशासुः। तेषु राजवंशेषु रुआङ् इति नाम्नो महानिति बिरुदभाजो नृपते राज्ञ्यस्योत्सवस्योद्भाविकेति जनश्रुतिः। तस्य नृपते राज्ये कश्चिद् ब्राह्मण उवास शास्त्रपरपारदृश्वेति महतीं ख्यातिं गतः। तस्यासीदेकाऽतिशयरूपलावण्यवती माधुर्यदाक्षिण्यगुणाकरा 'नवमास' इत्याख्या कन्यका। सर्वत्र राज्ये नेत्रद्वयासेचनकं तस्या अनिन्द्यं सौन्दर्यं चर्चाविषयोऽभूत्। गाथका[१६०] गीतेषु तज्जगुः। रूपवत्यः कन्यका अपि तस्यै न दुद्रुहुर्न वा बभूवुर्मत्सरग्रस्ता अपि तु तां प्रशशंसुरेव।

एकस्मिन् दिने केचन गायना[१६१] राजसभामुपेत्य गीतानि जगुर्यत्र नवमासचर्चाऽऽस्त। तस्या रूपराशिः, तस्या हंसखेलगतिः, तस्या भृंगावलीव कुन्तलराजिः, तस्याश्चकितहरिणीप्रेक्षणम् – एतत् सर्वं तत्र ते स्वगीतेन तुष्टुवुः। तच्छ्रुत्वा परं विस्मयमारुरोह राजा। ममैव राज्येऽस्त्येतादृशी कन्यका। अहमेव च तां न जानामि। कुतो नेमां स्वप्रासादशोभां विदध्याम्। एतच्चिन्तनप्रेरितेन तेनैतद्विधेषु कार्येषु पुरन्ध्रीणां प्रगल्भते"ति मतिमास्थाय वयसा ज्येष्ठाः काश्चन पुरन्ध्र्यस्तज्जनकसकाशं प्रेषितास्तव पुत्रीं राजोद्वोढुमिच्छतीति सन्देशसहकारेण।

---

१६० गस्थकन् (३.१.१४६) इत्यनेन थकन्प्रत्ययः शिल्पिनि कर्तर्यर्थे। गायका इत्यर्थः।
१६१ पूर्ववदेव शिल्पिनि कर्तर्यर्थे ण्युट् च (३.१.१४७) इत्यनेन ण्युट् प्रत्ययः। युवोरनाकौ (७.१.१) इत्यनेन यु इत्यस्य अनादेशः। गायका इत्यर्थः।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

ब्राह्मणस्य कृते किमतः प्रियतरमभविष्यत्। तस्य पुत्री राजमहिषी यदि भवति तर्हि पूर्णाः स्युस्सर्वेऽपि तस्य मनोरथाः। पूर्वमेव तस्यासीदनुरूपवरप्रदाने संकल्पः। तं यदि दैवमेव सम्पादयति नन्वप्रयासेनैव तस्य कृतार्थातानुभवः स्यात्।

कालेन सा राज्ञोदूढा। उद्वाहकञ्चित्कालानन्तरमेव प्राप्तः कथीन महोत्सव (बौद्धभिक्षुभ्यः यत्र चीवराद्यर्प्यते) दिवसः। स्वदेशपरम्परानुसारेण राजा बौद्धविहारान् गमिकर्मीकरोति स्म। स ऐच्छन्नवमासराज्ञ्यपि तत्र गमने तत्सहायभूता स्यात् परं नेदं सम्भवमासीत्। बौद्धकुले विवाहिताऽपि नवमासराज्ञी ब्राह्मणकन्यकेति व्रतोपवासादिरूपां ब्राह्मणपरम्परामनुपालयति स्म। तदानीं ब्राह्मणपरम्परानुसारेण प्रतिवर्षमेकस्मिन् दिने पापप्रक्षालनहेतोर्जलदेवतानां पूजार्च्चादिकमायोज्यते स्म। परं कथं साऽऽयोज्येतेति नवमासराज्ञी महतीं चिन्तामापन्ना। स्वपरम्परापालनेन बौद्धधर्मे बद्धनिष्ठो राजा कदाचित्तस्यै कुप्येदिति स्वोपज्ञं कञ्चिदुपायं सा चिन्तयामास। स्वयं कृते पत्रपुटके सा दीपं धूपं नैवेद्यं च न्यस्य शिरसा च तत्संस्पर्श्य तज्जले प्रवाहयामास राज्ञो दृष्टिं परिहरन्ती। प्रवहत्तत्पत्रपुटकं राज्ञो दृष्टौ पतितम्। तत्सौन्दर्यमुग्धोऽसावजिज्ञासत केनेदमतिसुन्दरमुत्कलं[१६२] पत्रपुटकं[१६३] सृष्टमिति। यदा स जज्ञौ नवमासेनेति तदा तां स भृशं प्रशशंस। नवमासराज्ञी यदा तन्महत्त्वं तं बोधयामास पापप्रक्षालनाय नदीपूजनायेदमिति। तदा तस्य हर्षः शतगुणितोऽभूत्। ततः स आदिदेश यत्प्रतिसंवत्सरं तस्मिन् दिने पत्रपुटकप्रवाहो जलाशयेषु भवत्विति। ततः प्रभृत्येवायमुत्सवः प्रारब्धः। अद्य षट्शती वर्षाणामस्योत्सवस्य प्रारब्धस्य। भारतीयगंगापूजनस्यैवायं थाईदेशीयो नवावतार इति नात्रापेक्ष्यते बहु वचः।

## ११६

थाईदेशीयरामकथाविषये पूर्वं चर्चा कृतैव तत्संस्कृताभिलेखविषये चापि। थाईदेशब्राह्मणविषयेऽप्यस्ति तत्र ग्रन्थे चर्चाऽतिसंक्षेपेण। कालान्तरे 'थाईदेश के ब्राह्मण' इति शीर्षकेण हिन्दीभाषया स्वतन्त्रो ग्रन्थ एवैको मया निर्मितो यः २००४ खिस्तसंवत्सरे दिल्लीस्थया परिमल पब्लिकेशन्स इत्याख्यया प्रकाशनसंस्थया प्रकाशितः। थाईदेशे सन्ति केचन जना य आत्मानं ब्राह्मण इति ख्यापयन्ति। नाना शताब्दीर्बौद्धैः परिवृतैरपि तैः स्वं रूपं न परित्यक्तम्, न

---

१६२ कलायाम् उत्कृष्टमित्यर्थः। प्रदेशवाची उत्कलशब्दोऽपीममेवार्थं ध्वनयति।
१६३ क्रथौङ् इति थाईभाषायाम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

वा किञ्चित्तत्र परिवर्तनं तैः स्वीकृतम्। श्वेतपरिधानं – श्वेतकञ्चुकं, श्वेताऽऽजानु-परिणाहिनी भारतीयपद्धत्यैव परिधीयमाना शाटिका, श्वेते चोपानहौ। थाईभाषयैव ते व्यवहरन्ति परन्तु श्वेतवर्णास्तेऽन्येभ्यः थाईदेशीयेभ्यः पृथग्भासन्ते। तेषां स्वकीयानि सन्ति देवायतनानि, स्वकीया पूजापद्धतिः, स्वकीयाः कर्मकाण्डग्रन्थाः, स्वकीया उत्सवाः, स्वकीया विधिग्रन्थाः, स्वकीया च राजगुरुपरम्परा। थाईदेशे ब्राह्मणकुलोत्पन्नत्वादेव न कश्चिद् ब्राह्मणो भवति, स एव भवति ब्राह्मणो यो ब्राह्मणधर्मेऽस्ति दीक्षितः। दीक्षां च राजगुरुरेव दातुं शक्तः। राजगुरुमहाराज–गुरुनियुक्तिविषयेऽप्यस्ति काचित्सुनिश्चिता पद्धतिः। सा चेत्थमस्ति–

(१).थाईनरेशो यं कमपि ब्राह्मणमेतत्पदे नियोक्तुमर्हति।

(२).समनक् फ्र राछ वोङ्, राजकार्यालयः, कस्यापि ब्राह्मणस्य नामैतत्पदस्य कृते महाराजविचारार्थमनुशंसितुमर्हति। तस्यानुशंसायाः स्वीकृतिर्महाराजेऽधि।

राजगुरु–महाराजगुरुपदारोहणानन्तरं राजगुरुणा महाराजगुरुणा वा स्वकीयं जन्मनाम त्यक्त्वोपाधिनाम स्वीकरणीयं भवति। यावज्जीवं तदेव तदभिज्ञानं तदाख्या च भवतः। उपाधिदानं पदनियुक्त्यवसरे भवति। तथाहि वर्तमानकालिकस्य राजगुरोर्जन्मनाम छविन्निति। उपाधिनाम पुनर्वामदेवमुनिरिति। अनेन नाम्नैव सम्प्रत्यभिज्ञायते स न तु जन्मनाम्ना। महाराजगुरुरप्यस्त्येको यस्योपाधिनाम 'असडाचान्' संस्कृते अष्टाचार्य, इत्यस्ति। तस्यातिवृद्धत्वाद् विधिकृत्यानि वामदेवमुनिरेव सम्पादयति। तदर्थं तेन बहुत्र गन्तव्यं भवति। बैंकाकनगरे नास्ति स तथा सुलभो यथाऽन्ये ब्राह्मणाः। ब्राह्मणविषयकसामग्री कुत्रापि पुस्तकरूपेण वा निबन्धरूपेण वा न सुलभा। तद्विषयकं ज्ञानं राजगुरोरेव प्राप्तव्यमासीत्। तदर्थं तेन चर्चाऽसीदावश्यिकी। तदर्थं मया तेन सम्पर्कः कृतः। स आह– रात्रावेकादशवादनानन्तरं समुपायान्तु भवन्तः। तदनन्तरं चर्चामावां प्रवर्तयिष्यावः। तस्यावासो ब्राह्मणमन्दिरं निकषाऽस्ति। स च मदालयाद्विंशतिकिलोमीटरदूर आसीत्। रात्रौ दशवादने ततः प्रस्थायैकादशवादनेऽहं तत्र प्राप्तो भवामि स्म। तदनु प्रारभतावयोश्चर्चा या रात्रौ द्विवादनं त्रिवादनं वा यावत् प्राचलत्। चर्चाकाले समुपस्थिता अभूवन् मन्मित्रमणयो विद्वच्छिरोमणयो थाईदेशे प्रधानहिन्दू–पुरोहितपदाधिष्ठिताः पण्डितविद्याधरशुक्लमहाभागा ये मद्वचः थाईभाषयाऽनूद्य राजगुरुं राजगुरोश्च थाईवचो हिन्दीभाषयाऽनूद्य मां प्रत्यपीपदन्। तत्र स्वोपज्ञां टिप्पणीमप्यन्तराऽन्तरा समयोजयन् मम सुखावबोधाय विषयस्पष्टीकरणाय च। नाना होरा यावत् प्रवर्तमानायां चर्चायां यदि कदाचिदशनाया मामबाधिष्ट तर्हि कदलीफलं वाऽन्यानि थाईदेश्यानि फलानि वा कदाचिच्च पयो वाऽहमसेविषि।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पर्यवसितायां च चर्चायां दक्षिणारूपेण राजगुरवे कञ्चिद्राशिं समर्प्य टैक्सीयानेन तदालयात् स्वगृहान् प्रति प्रास्थिषि निद्रावेगं कथञ्चित्संयम्य। एवं नाना सप्ताहान् चर्चेयं प्रावर्तिष्ट। तन्निष्कर्ष एव मया पूर्वनिर्दिष्टे 'थाईदेश के ब्राह्मण' इति ग्रन्थे प्रस्तुतः। यावत्कालमावयोः, मम च राजगुरोश्च, सम्भाषणमाविरभूत् तावत्कालं यद् यदपि तेनोक्तमभूत्तत्तन्मया पत्र आरोप्यत त्वरमाणेन। शब्द आकाशदेशः। स न लिपिबद्धः क्रियते चेत्, आकाश एव विलीयते। कुतस्तस्य प्रत्यापत्तिः? एवं भूयः परिश्रान्तं मया ब्राह्मणविषयकग्रन्थप्रणयने। इदम्प्रथम एवायमेतद्विषयको ग्रन्थः। नूत्नविषयकग्रन्थप्रणयने मे स्वाभाविकी प्रवृत्तिः। अनयैव प्रेरितस्तत्र प्रवृत्तिमान् भवामि।

## १२०

प्रसक्तानुप्रसक्तोऽयं विषय इति ब्राह्मणमन्दिरविषयेऽप्यत्र किञ्चिद् विवक्षामि। थाईभाषायामस्य 'मोन्थोन् फ्राम' मन्दिर ब्राह्मण इति संज्ञा। तत्र विशेषणेभ्यः पूर्वं विशेष्यपूर्वप्रयोगो भवति। प्रथमं विशेष्यं तदनु विशेषणम्। स्थानदूतादयः शब्दा अत्रोदाहरणम्। थाईभाषायां दूतावासकृते स्थानदूतशब्दः। भारतीयपद्धत्य-नुसारेण स्थानशब्दस्य परनिपाताद् दूतशब्दस्य पूर्वनिपातोऽपेक्षितः। तेन शब्दो भवति दूतस्थानमिति। परं थाईभाषायां शब्दोऽस्ति 'स्थानदूत' इति। अस्तु। प्रस्तुतमेवानुक्रामामि। ब्राह्मणमन्दिरस्य मध्येनगरमवस्थितिः। तत्र नाना शालाः सन्ति, सन्ति च तत्र देवताविग्रहाः प्रतिष्ठिताः। ब्राह्मणमन्दिरं प्रविष्टमात्रस्यैव जनस्य कृत्रिमः शैल एको दृष्टिपथमवतरति यच्छिखरे प्रतिष्ठितास्ति भगवतो गजाजिनधरस्य नीललोहितस्य मूर्तिः। स शैलः कैलासप्रतिरूपकः।

ब्राह्मणमन्दिरपरिसर एवास्त्येको नवस्थापितो ग्रन्थालयः। तद्भित्तिषु सन्ति बृहदाकाराणि पूर्वराजगुरूणां महाराजगुरूणां च दारवसीमान्तकानि काचखण्डैरा-वृतानि चित्राणि।

थाईब्राह्मणानां कर्मकाण्डग्रन्था, विधिग्रन्था इति यांस्तेऽभिदधति, न केनाऽपि द्रष्टुं शक्याः। ते सर्वे पाण्डुलिपिरूपा एव। संस्कृतेन रचितास्ते परं तत्रत्यं संस्कृतं तथा भ्रष्टं यथा संस्कृताभासतामेव ते तस्य प्रतिपादयन्ति। तमिललिप्या निबद्धास्ते। पंक्तिद्वयान्तराले तेषां थाईलिपिरूपान्तरमप्यस्ति, साम्प्रतिकानां ब्राह्मणानां तमिललिप्यनभिज्ञत्वेन केवलं थाईलिप्यभिज्ञत्वेन च पाठसौकर्यं स्यात्।

थाईराजगुरुगृहोद्याने या वनस्पतयः सन्ति तास्ता एव यासां तत्तद्विधिषूपयोगो भवति।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

ब्राह्मणमन्दिरान्नातिदूरेऽस्त्येका दोला शालद्रुमाकारवदभ्रंलिहा थाईभाषायां 'साओ छिङ् छा' इत्याख्या। एकोनविंश्याः शताब्द्या उत्तरार्धं यावद् भगवतः शिवस्य भगवत्याः पार्वत्याश्च मूर्त्यौ 'समनक् फ्र राछवाङ्' इत्याख्याद् राजकीयकार्यालयादानीय दोलायामस्यां महता संरम्भेण स्थाप्येते स्म। प्रथमं ब्राह्मणो दोलां दोलयति स्म, तदनु महाराजः। कञ्चित्कालं तां दोलयित्वा दोलातस्ते अपनीय पूर्ववदेव महता संरम्भेण ते राजकार्यालयं नीयेते स्म। एषा जनश्रुतिर्यन्मूर्त्योः कार्यालयादानयनकाले ततः प्रतिनयनकाले च महाराजः ते स्वकीयेऽङ्के धारयति स्म।

कतिपयराजकार्येषु ब्राह्मणानामस्त्यतीव महत्त्वपूर्णा भूमिका। राज्याभिषेक-तिथेस्त एव निर्णयं कुर्वन्ति।

प्रत्येकं ब्राह्मणः शासनात्कञ्चन राशिं वृत्तिरूपेण गृह्णाति परं स तथाऽल्पीयान् यथा तस्य लोकयात्रा न सिध्यति। अतोऽद्यतना ब्राह्मणा वृत्त्यन्तरमप्युपाश्रयन्ति।

ब्राह्मणानां सङ्ख्या क्रमशो ह्रसिमानमुपैति। सम्प्रत्यङ्गुलिगण्या एव सन्ति ते। तेषामपत्यजातं ब्राह्मणवृत्तिमुपाश्रयितुं सर्वथा मन्दोत्साहम्। अर्थकरी विद्यैव तस्मै रोचते, साम्प्रतिकयुगस्यार्थप्रधानत्वात्। सैषा स्थितिर्वर्षीयसां ब्राह्मणानां मनसि महान्तं क्षोभं जनयति। कालेन ब्राह्मणकुलं विनंक्ष्यतीति महती चिन्ता राहुश्चन्द्रमिव तन्मनो ग्रसति। अत एव द्वौ ब्राह्मणकौ राजगुरुणा श्रीकाञ्चीकाम-कोटिपीठाधीशानां श्रीभगवत्पादशंकराचार्याणामनुग्रहेण काञ्चीपुरं प्रेषितौ तत्र वेदाध्ययनं प्रवर्तयतः।

यथा बैंकाकनगरे ब्राह्मणमन्दिरमस्ति तथैव थाईदेशदक्षिणदिग्विभागे नगरश्रीधर्मराजनगरेऽपि। प्राचीनमन्दिरं कदाचिद् ध्वस्तं स्यादिति तत्स्थाने नूत्नं मन्दिरं निर्मितम्। देवविग्रहस्तु तत्र सम्प्रति नास्त्येव। प्राचीनमन्दिरस्थाः सर्वा मूर्तयः सम्प्रत्यद्भुतालयं प्रापितास्तच्छोभां वर्धयन्ति। एवमेव बैंकाकमन्दिरस्यापि नैकाः।

## १२१

प्रकृतग्रन्थे– Studies in Sanskrit and Indian Culture in Thailand इत्याख्ये लोपबुरीविषयकोऽप्यस्त्येको निबन्धः। थाईदेशमध्यभागे निविष्टमस्ति तन्नगरम्। तत्र सन्ति भूयांसस्तादृशा अवशेषा ये तस्य भारतीयसंस्कृत्यनुप्राणितां प्रमाणयन्ति। लोपबुरीति लवपुरीत्यस्यैव परिवर्तितं रूपमिति पुराविदः। रामगाथयाऽस्य सम्बन्ध


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

इति सिध्यति। रामगाथासम्बन्धस्यान्यदपि प्रमाणमत्र दृष्टिपथमापतति। मध्येपुर्यस्ति हरितवर्णैका महती शिला। तत्सम्बद्धास्त्येका कथा थाईदेशे प्रसिद्धा – अवसिते रामरावणयुद्धे हते च रावणे श्रीरामेण लंकाविजये सर्वानपि सहायान् पुरस्कर्तुं कृतो निश्चयः। सुग्रीवाय किष्किन्धाराज्यं दत्तं, विभीषणाय लंकाराज्यं, जाम्बवते पातालराज्यमित्यादि। हनुमान् आसीत्प्रतीक्षारतः। सर्वेष्वपि पुरस्कृतेषु यथागतं गतेषु स श्रीराममुपासीदन्नन्वयुङ्क्त च कथमहं विस्मृतो भवता – अहं येन सर्वाधिकं साहाय्यं भवतः समपादि। श्रुत्वैतच्छ्रीरामः स्वकीयं प्रमादमबुद्ध्वावोचच्च यद्यन्मय्यासीद् तत्तन्मया दत्तमेव। सम्प्रत्येवं करोमि यदहं बाणमेकं मुञ्चामि। यत्र स (बाणः) पतेत्तत्रत्या भूमिस्तव भविष्यति त्वं च तत्रत्यो राजा भविष्यसि। उक्त्वैतच्छ्रीरामो बाणं मुमोच। स बाणो लोपबुर्यां पतितः। तत्रत्या भूमिस्तदा विषमाऽऽसीत्। हनुमता पुच्छेन सा प्रथमं समीकृता तदनु भगवान् विश्वकर्मा प्रार्थितो यद् भवांस्तत्र पुरीमेकां निवेशयत्विति। पुर्यां तेन निवेशितायां स तस्या राजा बभूव। सिंहासनारोहणकाले तेन 'अनुजन्' इति नवं नाम धृतम्। यस्मिन् स्थाने श्रीरामस्य बाणः पतितस्तत्र विशालैका शिलाऽऽसीत्। सा श्रीरामबाणतेजसा दग्धा सती हरितवर्णा जाता (श्रीरामस्य वर्णो थाईपरम्परानुसारेण हरितः। तस्यैवायं प्रभावो यच्छिलाऽपि हरितवर्णा जाता)। थाईदेशीयानां तथा बद्धमूलेयमास्था यद्या हरितवर्णा शिला नगरमध्ये वर्तते सा सैव या श्रीरामबाणतेजसा हरितवर्णा जाताऽऽसीत्। देशस्य विभिन्नभागेभ्यो जनास्तां द्रष्टुमायान्ति। भगवत्तेजोऽस्यां समाविष्टमितिलघुलघुशिलाखण्डमुपच्छिद्य भगवत्प्रसादोऽयमिति स्वेन सह नयन्ति। कालक्रमेण सा शिला तनुतां गच्छन्ती कदाचिद्विलुप्येतैविति धिया शासनेन तां परितोऽवरोधकशृङ्खला[१६४] निर्मिता रक्षापुरुषश्च तद्रक्षायै नियुक्तः।

अपरमप्येकं कथानकं तेन नगरेण सम्बद्धम्। शक्तिप्रहारेण लक्ष्मणे मूर्च्छिते सति हनुमान् 'सर्वय' पर्वतं (थाईदेशे पर्वतस्येदमेव नाम न तु हिमालय इति) विशल्यकरणीमोषधिमादातुं प्रेषितः। गोधूलिवेलेति तामोषधिमभिज्ञातुं स नाशकत्। अतः पर्वतखण्डमेवोत्पाट्य तं स दक्षिणकरे धृत्वा ततः प्रतस्थे। विहायसोत्पतन्यदा स लोपबुरीमाससाद तदा वह्निज्वालावलीढा सासीत्। तज्ज्वालाप्रकाशेनौषधिमभिज्ञाय पर्वतखण्डनयनमनपेक्षितमिति तं तत्रैव स प्रचिक्षेप। लोपबुरीसमीप एवास्ति कश्चन लघुपर्वतो यं थाईदेश्या स्वभाषया 'वानरेण क्षिप्तः पर्वत' इत्यभिदधति। एवं नानाख्यानान्युपाख्यानानि च रामगाथासम्बद्धानि पुरीं तां लक्ष्यीकुर्वन्ति। पुस्तकाङ्गभूते निबन्धे तानि सर्वाणि न्यक्षेण वर्णितानि। तानि तत एव द्रष्टव्यानीत्यलं वाचां विस्तरेण।

---

१६४ Barricade इत्याङ्ग्ल्याम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

मया Discovery of Sanskrit Treasures इति नाम्ना सप्तखण्डात्मको ग्रन्थो रचितः। तत्रस्थषष्ठखण्ड आग्नेयैशियादेशविषये मया सविस्तरं विमर्शः प्रवर्तितः। थाईदेशोऽप्याग्नेयैशियाभूखण्डाङ्गभूत इति तद्विषयेऽपि तत्र मया बहूक्तम्। 'थाईदेशे गुरुपूजा' इति विषयको मम निबन्धस्तत्र विशेषोल्लेखमर्हति। गुरोः कृते थाईभाषायां द्वौ शब्दौ प्रयुज्येते। द्वावपि तौ संस्कृतमूलकावेव। एकः 'ख्रू' इति यो हि गुरुशब्द एव। उच्चारणे केवलं भेदः। थाईभाषायां गकारः खकाररूपेणोच्चार्यते। गकारस्य उकार उपधालोपपद्धत्या लुप्यते। द्वितीयः शब्दोऽस्ति आचान् इति यो हि संस्कृतशब्दस्य आचार्य इत्यस्यैव परिवर्तितं रूपम्। थाईभाषायां अकारान्ताः संस्कृतशब्दा अनकारान्ता भवन्ति। तथैव तत्र तेषामुच्चारणम्। यकारलोपे रकारोऽवशिष्यते। यदि स पदान्ते भवति तदा नियमेन स नकाररूपेणोच्चार्यते। यथा ख्मेर इति शब्दो थाईदेशे 'खमेन' इति रूपेणोच्चारितो भवति। अस्तु। यथाऽस्मद्देशे गुरुपूजोत्सव आयोज्यते तथैव तत्रापि। एकस्मिंस्तादृश उत्सवेऽहमप्यासमुपस्थितः। उत्सवः स १९७८ वर्षे जुलैमासस्य त्रयोदशे दिवसे शिल्पाकरविश्वविद्यालय आसीदायोजितः। तदानीमहं मूलतः चुलालौङ्कौर्न-विश्वविद्यालयेऽध्यापनार्थं नियुक्तोऽपि शिल्पाकरविश्वविद्यालयेऽप्यध्यापिपं तत्रत्यैरध्यापकैर्भारतीयसंस्कृताभिलेखाध्यापनाय प्रचोदितः। अस्य चर्चा मया पूर्वं कृतैव।

उत्सवस्य प्रारम्भो बौद्धभिक्षूणां पालिमन्त्रोच्चारणेनाभूत्। उच्चारणे पर्यवसिते ते भिक्षां स्वीकृत्य प्रस्थितवन्तः। प्रातर्नववादनवेलाऽसीत्तदानीम्। सर्वेप्युद्ग्रीवाः प्रतीक्षमाणा आसन्। प्रतीक्षा चासीत्परमराजकुमार्या महाचक्रीत्युपाधिविभूषितायाः सिरिन्थौर्न महाभागायाः। कतिपयक्षणैरेव तस्यामुपेतायां पूजाविधिः प्रारब्धः। एकत आसन्नध्यापका अपरतश्चच्छात्राः। प्रथमं गुरुस्तवः प्रस्तुतश्छात्रैः संस्कृतेन। तेषां सर्वथा शुद्धमुच्चारणं भारतीयान् संस्कृतज्ञानपि विस्मापयेत्। अतीव भावप्रवणेन चेतसा प्रस्तुतं गीतं छात्रैरानिमीलिताक्षैर्बद्धाञ्जलिभिः। यस्मिन्पार्श्वे आसन्नध्यापका तत्र प्रथमपंक्तावासन्ननुज्येष्ठ[१६५]मुपविष्टा ज्ञानवृद्धा, वयोवृद्धा, धर्मवृद्धाश्च त्रयोऽध्यापकाः। प्रत्येकं छात्रः/छात्रा च स्वस्थानादुत्थायाचार्यानुपासीदत्। प्रथमं ज्येष्ठतमायाचार्याय धूप-सिक्थवर्तिका-फलादिपूर्णमेकं करण्डकं स/सा आर्पिपत् यत्स दक्षिणकरेणास्पृक्षद् यस्याभिप्राय आसीत्स्वीकृतं मयेदमिति। तदा स (आचार्यः) तस्य/तस्या ललाटे त्रिकोणाकारं तिलकत्रयमकरोत्। तदा स/सा द्वितीयमाचार्य-

---

१६५ अनुर्यत्समया (२.१.५५) इत्यनेनाव्ययीभावसमासः।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

मुपासदत्[१६६] स तस्य/तस्याः करे सूत्रमेकमभान्त्सीद्यद्रक्षासूत्रस्यैव प्रतीकं भवेत्। तदनुच्छात्रः/छात्रा तृतीयमाचार्यमुपासदत्स च तस्मै/तस्यायण्डमेकमदात्। अण्डेनास्मिन् पूजाविधौ किं तात्पर्यमिति नाहं वेद। अस्मिन् विषये पृष्टा विश्वविद्यालयसहयोगिनोऽपि नैभृत्यमेवावालम्बिषुः। पर्यवसिते पूजाविधावण्डमा–स्वादयंश्छात्राः, पूजाप्रसाद एष इति। यतो थाईदेश्या प्रायो मांसाशिनोऽतस्तत्रायमेव प्रसादः स्यान्नु।

## १२३

१६७७ वर्ष आक्तूबरमास (आ + अक्तूबरमास) सप्तमादिदवसात् १६७६ वर्षान्तं यावन्मया थाईदेशेऽभ्यागताचार्यरूपेण कार्यं कृतम्। तदानीन्तनः थाईदेशे स्थितो भारतीयो राजदूतस्ततोऽप्यधिकतरं कालं मम तत्रावस्थितिमचीकमत तदर्थं च मां भृशं प्राचूचुदपि परं थाईदेशावस्थितिकाले यदैकदाऽहं भरतभुवमुपेतस्तदा पितृचरणैरुक्तं भूयांसं कालं विदेशे स्थितोऽसि। सम्प्रति कालोऽयं ते प्रत्यावर्तनस्येति। तच्छ्रुत्वा मया तर्कितं वर्षीयांसस्ते तन्निकट एवाहं भवेयमिति वाञ्छन्ति। अतः स्वदेशपरावृत्त्यायेवाहं मनोऽभान्त्सि। अतो राजदूतो मम थाईदेशेऽवस्थितिं कामयेत न वेति मत्कृतेऽकिञ्चित्करमेवाभूत्। स्वदेशपरावर्तनाभिलाष एकदा चर्चाप्रसंगे विभागाध्यक्षायाचार्यविसुधबुस्यकुलायापि मया निवेदितः, पितृचरणानां मम स्वदेशपरावृत्तिं प्रत्यभिलाष इति च तत्र हेतुरिति स उक्तः। तेन च पुत्रेण पित्राज्ञावशंवदेन भवितव्यमिति व्याहरता सोऽनुमोदितः। यदा राजदूतेन मां स्वदेशप्रत्यागमनरूपां व्यवसायात्मिकां बुद्धिं शिथिलयितुमधिक-कालावधिकां च थाईदेशेऽवस्थितिं कल्पयितुं स्वप्रयासे साफल्यं नाप्तं तदा विश्वविद्यालयीया मम सहयोगिन एतदर्थमुपयोक्तव्या इति चिन्तितं, कदाचित् तत्प्रेरणया मे बुद्धिपरिवर्तो जायेत। दूतावासे तदा कांउसलर पदे स्थितः श्राफ इति नामधेयोऽधिकारी तेन विश्वविद्यालयं प्रति प्रेषितः। तेनाचार्यविसुधबुस्यकुलो विभागाध्यक्ष इति तेन सम्पर्कः साधित उक्तं च प्रेरणीयः सत्यव्रतशास्त्र्यत्र भूयः कालावस्थितय इति। सा नामोभयोरपि देशयोः—भारतदेशस्य थाईदेशस्य च — श्रेयसे कल्पेतेति। आचार्यविसुधबुस्यकुलेन तदोक्तम्—एतदहमपि वाञ्छामि। परन्तु स्वदेशप्रतिगमनाय स्वपितृचरणाभिलाषरूपो यो हेतुरुपन्यस्तो डा. सत्यव्रतशास्त्रि–

---

१६६ षदलृ विशरणे इति धातोर्लुङि लृदित्वादङि प्रथमपुरुषैकवचने रूपम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

महाभागैस्तद्विषये न किञ्चिद्वक्तुं शक्नोमि। वयमेशियाभूखण्डीयाः। यत्सत्यव्रत–शास्त्रिणां दर्शनं तदस्माकमपि। पितुराज्ञापरिपालनात्परं नास्माकं कृतेऽपि वरतरम्। भारतीयानामत्र विषये यद् दर्शनं तदस्माकमपि। इयं नाम संस्कृतिर्या एशिया–संस्कृतिरित्युच्यते।

दृढनिश्चयानुसारेणाहं भरतभुवं प्रत्यावृत्तः। दिल्लीविश्वविद्यालये च कार्यं मया पुनः प्रारब्धम्। अहं विभागाध्यक्षपदे स्थापितोऽस्थायिरूपेणादेशान्तरं यावन्न निर्गच्छति तावन्तं कालं कलासंकायाध्यक्ष (डीन) पदेऽपि। संकायाध्यक्षपदवद्विश्व-विद्यालयकार्यकारिपरिषत्सदस्योऽप्यहं कृतः। वर्षद्वयं यावदादेशान्तरं नोद्घुष्टमिति तावन्तं कालं यावद्यो हि संकायाध्यक्षपदकृते कालो निर्धारितो भवति अहं पदे तस्मिन्स्थित इत्यन्यदेतत्। किमर्थमहं संकायाध्यक्षपदकृते निर्धारितं कालं यावत्प्रथममेव न नियुक्त इत्यद्याप्यहं न वेद्मि। कुतोऽस्थायिरूपेणैव वर्षद्वयावधिक–कालव्यतियापनाय दत्तोऽवसर आदेशान्तरोद्घोषणपर्यन्ता नियुक्तिः कृतेति चापि।

कलासंकायाध्यक्षकार्यं मया सुष्ठु सम्पादितम्। नाना विभागास्तत्–संकायान्तर्गताः। प्रतिविभागं सन्ति नाना समस्याः। तासां समाधानं संकायाध्यक्षेणैव कर्तव्यं भवति। महान् हि तस्मिन्कार्यभारः। तन्निर्वहणं निष्पक्षतां, सूक्ष्मेक्षिकां, कार्यनिष्पादननैपुणीं चापेक्षते। एतासां सर्वासामाविर्भावो मयि प्रभोः कृपयैव जातः। अन्यथाऽध्ययने चाध्यापने चैकतानेन मनसा व्यापृतोऽहं क्व, क्व च लोकव्यवहारनिपुणता तदुत्थं च यशः। संकायाधिवेशने नाना होरामितः कालो व्ययितो भवतीत्यासीन्ममानुभवः। अपराह्णे द्विवादनात्प्रारभ्य सायाह्ने षड्वादनपर्यन्तं सप्तवादनपर्यन्तं वा तत् प्राचलत्। अध्यापकाः परस्परेण तथा व्यूदिरे[१६७] यथा कालापव्ययो भूयानबोभवीत्। लघु– लघुविषयेष्वपि सुदीर्घा चर्चा प्रावृतत्[१६८] भूयांसं कालम्। मत्संकायाध्यक्षत्वकाले संकायाधिवेशनं कदाचिदध्यर्धहोरां प्राचलत्कदाचिच्च होराद्वयम्। तदेतद् व्यस्मापयत् सदस्यान्। अधिवेशनानन्तरं तेषु नैके मामुपासीदन्नवर्धापयंश्चैतस्य चमत्कारस्य कृते। नायमासीच्चमत्कारः, अपितु कार्यसूचिगतविषयेषु सम्यग्विमर्शपूर्वकं तदुपन्यासकौशलं सम्भावितापत्तिपूर्वतन्निरसनकौशलं च।

---

१६७ भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः (१.३.४७) इत्यनेन विमत्यर्थ आत्मनेपदे लिटि रूपम्। विरुद्धं व्याजहुरित्यर्थः।

१६८ द्युद्भ्यो लुङि (१.३.९१) इत्यनेन परस्मैपदे पुषादिद्युताद्यलृदितः परस्मैपदेषु (३.१.५५) इत्यनेन लुङि च्लेरङि रूपम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

## १२४

दिल्लीविश्वविद्यालये विचित्रेयं पद्धतिर्यत्कलासंकायाध्यक्षश्छात्रप्रवेशसमितेरपि[१६६] पदेनाध्यक्षो भवति। कुलपतिर्भवति तत्र सदस्यः। कलासंकायाध्यक्षेण तत्र प्रवेशसमितेरध्यक्षपदं कुलपतेः समितावुपस्थित्यामपि वोढव्यं भवति।

एकदा प्रवेशसमित्यधिवेशने समस्यैका समुत्थिता। एकया छात्रया – गीतेति तस्या नामासीत्, तदद्यापि स्मरामि – संस्कृतविषये स्नातकोत्तरोपाध्यध्ययनायावेदनं कृतम्। स्नातकपरीक्षां यावद्विज्ञानमेव तयाऽधीतमासीत्, भारतीयविद्याभवनस्य प्रवेशिकामध्यमादिपरीक्षास्तु तयोत्तीर्णा आसन्। अतः संस्कृतेनासीत्तस्याः सम्पर्कः। परं विश्वविद्यालयतः – मन्ये सा मुम्बापुरीविश्वविद्यालय आसीत् – तया बी.एस्–सी. परीक्षैवोत्तीर्णाऽऽसीत्। प्रवेशसमितिसदस्यानां विभिन्नविषयविभागाध्यक्षाणां तत्र मतमासीद्यद्यतस्तया स्नातकोत्तरोपाधिपूर्वतनपरीक्षा संस्कृतविषये नोत्तीर्णाऽतः सा संस्कृतविषये स्नातकोत्तरोपाधिकक्षायां प्रवेशमनर्हेति। तदैव स्फुरितं मे मनसि जिज्ञासितव्यं तावद् अस्ति कश्चन तादृशो नियमो नियमावल्यां यद्यस्मिन् विषय उच्चाध्ययनमभीप्सितं ततः पूर्वतन्यां कक्षायां तद्विषयाध्ययनस्यानिवार्यताऽस्तीति। उपकुलसचिवस्तदानीमासीत् समितावुपस्थितः। मया स उक्तो नियमावलिं भवान् एतद्विषये सम्यक् पर्यालोचयत्विति। तेन पर्यालोच्योक्तं नास्ति कश्चन तादृशो नियमः। परं परम्परा त्वेतादृश्येव, अद्यावधि च सा परिपालिताऽभूदेव। मयोक्तम्–न वयं परम्परामाद्रियामहे। यदि लिखितरूपेणास्ति कश्चिन्नियमः स नामास्माभिरादर्तव्यः स्यात्। नास्ति स इति तेनोक्तम्। तर्हि कथं प्रवेशोऽस्या बाध्येत। संस्कृतस्य ज्ञानमस्याः सम्यगस्ति येन सा स्नातकोत्तरोपाधिगतान् ग्रन्थान् अध्येतुं पारयेदिति विभागः परीक्षतां नाम। तन्निर्णयो विभागेऽधि। कैश्चिदिच्छद्भिः कैश्चिच्च्यानिच्छद्भिः मम वचोऽनुमोदितम्। विभागेन प्रवेशात्पूर्वं तत्संस्कृतज्ञानं परीक्षितम्। परीक्ष्य च प्रवेशानुमतिः प्रदत्ता। यदा स्नातकोत्तरोपाधिपरिणामो घोषितस्तदा सा छात्रा द्वितीयं स्थानमधिगतवती!

संस्कृतविषये स्नातकोत्तरकक्षाप्रवेशार्थं चर्चेति विभागेनैव तत्प्रवेशार्हतानर्हतानिर्णयस्तद्विषयावबोधमवेक्ष्य कर्तव्य इति निर्णयो न केवलं संस्कृतविषय एवास्त्वपि तु विषयान्तरेष्वपीति मया स्वमतं स्थापितम्।

---

१६६ स्टूडैन्ट्स एडमिशन कमेटी इत्याङ्ग्ल्याम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

यदा गीतेत्याख्यायाश्छात्रायाः परिणाम उद्घोषितस्तदा तस्या जनको मामुपसद्य प्रणामपर्यायपुरस्सरं मयि धन्यवादततिमार्पिपत्। स्नेहपरिवाहिभ्यां चक्षुर्भ्यां तद्वीक्षणस्याद्यापि स्मरामि।

## १२५

प्रवेशसम्बद्धस्यान्यस्यापि विषयस्याहं[२००] स्मरामि। कतिपयैः शर्मण्यदेशीयैश्छात्रैर्विश्वविद्यालये प्रवेशार्थमावेदनं कृतम्। आवेदनपत्रेऽमुककालपर्यन्तमध्ययनं प्रवर्तितमित्युट्टंकितं कियन्तोऽङ्काः प्राप्ता परीक्षाऽमुकश्रेण्योत्तीर्णेत्यादि च नोट्टंकितम्। तदा समितौ प्रश्नोऽयं समुत्थितः प्राप्तांकश्रेण्यादिज्ञानं विना कथं प्रवेशोऽनुमन्येत। तदा मयैवोक्तमासीद्यत्तत्र देशे कक्षायामधीतमित्याधारेणैवोत्तीर्णताप्रमाणपत्रं दीयते। परीक्षापद्धतिस्तत्र नास्त्येव। तेनाङ्कानां श्रेण्या वा कथैव नास्ति। अहं शर्मण्यदेशे स्थितिमचकलमिति तद्देशपद्धत्या परिचितोऽभूवम्। तदाधारेणैव प्राप्ताङ्कश्रेण्यादिविषया मया स्पष्टीकृताः। यदि कस्यचिदत्र सन्देहः स्यात्तर्हि तं निराकर्तुं दिल्लीस्थाच्छर्मण्यदेशदूतावासात् सूचना लिखितरूपेण प्राप्तव्या। यन्मया समितावुक्तमासीत्तदेव शर्मण्यदेशदूतावासेन पत्रमारोप्य प्रेषितम्।

मया स्वकीयसंकायाध्यक्षताकाल एको नवीनः प्रकल्पः प्रारब्धः। सत्रान्ते सर्वेषामपि संकायान्तर्गतविभागप्राध्यापकानां समवायो मयाऽऽयोजितो यत्र ते सर्वे परस्परेण समवीयुः[२०१]। स्वे स्वे विभागेऽभिरतास्ते विभागान्तरीयान् प्राध्यापकान् कदाचिदाकृत्याऽपि न परिचिनियुः। एतत्समवायमिषेण ते मिथः संगच्छेरन्कस्कं विषयमध्यापयतीति जानीरन्, चर्चां प्रवर्तयेरञ्ज्ञानाभिवृद्धिं च सम्पादयेरन्। प्रकल्पोऽयं सर्वैरपि प्राध्यापकैः सुतरामभिनन्दितः। चायचषकं हस्तेन धारयन्तस्ते विभागान्तरीयैः प्राध्यापकैः सह सम्भाषमाणा अवालोक्यन्त। ये तेषु पूर्वपरिचिता अप्यभूवंस्तेषां कृतेऽपि परिचयदाढ्र्यायायमवसरोऽभूत्।

एवं वर्षद्वयं यावद्विभागाध्यक्षपदं कलासंकायाध्यक्षपदं च मयोढम् १९८० वर्षात् १९८२ वर्षपर्यन्तम्। दिल्लीविश्वविद्यालये संकायाध्यक्षकालो वर्षद्वयावधिक एव भवति। १९८२ वर्षे जुलैमासस्य पञ्चदशे दिवसे स समाप्तिमितः। तन्मासद्वयानन्तरम् एव शर्मण्यदेशीयट्यूबिंगननगरस्थभारतीयविद्यासंस्थाना-[२०२]

---

२०० अधीगर्थदयेशां कर्मणि (२.३.५२) इत्यनेनाधीगर्थे (= स्मरणार्थे) विषयस्येत्यत्र षष्ठी।

२०१ सम् + अव + इयुः। इयुरिति इण् गतावित्यस्य लिङि बहुवचने रूपम्।

२०२ Seminar für Indologie इति शर्मण्यभाषायाम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

ध्यक्षात् हेनरिश फॉन श्तीतनक्रोनमहाभागात्पत्रं मया प्राप्तं यत्र तेनोक्तमासीद् यदहं स्वस्मिन् विश्वविद्यालये वर्षद्वयार्थमतिथिप्राध्यापकरूपेण भवन्नियुक्ति–मभिलषामीति। एतदर्थं भवत्स्वीकृतिरपेक्ष्यत इति। विरला एवैतादृशा अवसरा इति मया प्रेषितं स्वीकृतिपत्रम्। स्वकीयो विश्वविद्यालयोऽप्यवकाशार्थं प्रार्थितः। प्रार्थना च मम तेनाङ्गीकृता।

## १२६

अक्तूबरमासप्रारम्भेऽहं शर्मण्यदेशं प्रति प्रस्थितः। व्योमयानेन प्रथमं फ्रांकफुर्तव्योम–पत्तनं प्राप्तव्यं भवति ततश्च रेलयानेन ट्यूबिंगननगरम्। एयर इण्डिया विमानेनाहं यात्रामकरवम्। फ्रांकफुर्तप्राप्तौ विलम्बो जातः। एकादशवादनस्थाने सार्धद्वादशवादने रात्रौ विमानं तत्र प्राप्तम्। विमानपत्तन एवाधस्तने स्थलेऽस्ति गन्त्रीविरामस्थानं[२०३] यत्र गन्त्र्या मुख्यं गन्त्रीविरामस्थानं शर्मण्यभाषया 'बान हॉफ़' इति कीर्त्यमानं प्रति गन्तव्यं भवति। तत एव नगरान्तरगामिनीभ्यो गन्त्रीभ्यो यात्रा प्रवर्तयितव्या भवति।

योरूपभूखण्डे गन्त्रीविरामस्थानेषु भारवाहकव्यवस्था[२०४] नास्ति। यात्रिभिः स्वकीयं सामान्यं[२०५] स्वयमेव वोढव्यं भवति। अतोऽल्पमेव तत्तत्रत्याः स्वेन नयन्ति। मयि तु सुदीर्घः कालस्तत्र यापयितव्य आसीदिति किञ्चिदधिकतयैव तदासीत्। एकाऽऽसीद् बृहती मञ्जूषा, अपर आसीत्स्कन्धेन वोढव्यः स्यूतको, ऽन्यश्चासी– दाङ्ग्ल्यां 'ब्रीफकेस' इति समाख्या लघ्वाकारा मञ्जूषिका। एतत्त्रयं यथाकथञ्चिद् वोढ्वाऽहं विमानपत्तनाधस्तनभागस्थं गन्त्रीविरामस्थानं प्राप्तः। तत्स्थानं सर्वथा जनशून्यमासीत्। न कोऽपि तत्र दृष्टिपथमयात्। कुतो मया यात्रापत्रकं प्राप्तव्यं कथं चेत्यहमासं किंकर्तव्यविमूढः। यात्रापत्रककार्यालयः न कुत्राप्यदृश्यत। अस्यां स्थितौ किं मया कर्तव्यमिति महतीं चिन्तामहमापन्नः। किं करवाणि, कथं वाऽऽत्मानं प्रवर्तयानीति यावदहं चिन्तयामि तावद् मद्दृष्टौ पतितौ कावपि दम्पती। आकृत्या तौ भारतीयौ प्रतीयेते स्म। अहं तावुपसन्नः। अवोचं च–दिल्लीतोऽहम्। अत्र ट्यूबिंगननगरं प्रति मया गन्तव्यम्। मुख्यगन्त्रीविरामस्थानयात्रार्थं यात्रापत्रकं कुतः प्राप्यं स्यादिति न जाने। दम्पत्योः

---

२०३ रेलवे स्टेशन इति भाषायाम्।

२०४ कुली।

२०५ सामान्य इति भाषायाम्। सामानशब्दः सामान्यशब्दस्यैवापभ्रंशो भवेत्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पुरुषेणोक्तं यात्रापत्रककार्यालयोऽत्रास्ति परं मध्यरात्रे द्वादशवादने स भवति पिहितः। अत्र यन्त्रमेकमस्ति स्थापितं तत्रापेक्षिता मुद्राः प्रवेश्य तत्प्राप्तव्यं भवति। मयि तदा शर्मण्यमुद्रा[२०६]नासन्, आसन् केवलं डालरमुद्रापत्रकाण्येव। तद्विनिमयेन शर्मण्यमुद्राः प्राप्तव्या आसन्। तद्व्यवस्था मुख्यगन्त्रीविरामस्थान एवासीत्। अहो! विषमां स्थितिमहं प्रपन्न इति यावदहं चिन्तयामि तावत्पुरुषेणाक्तं नात्र चिन्ता भवतां भवतु। अहमत्रभवतां कृते यात्रापत्रकं यन्त्रतः प्राप्नोमि। तेन काश्चन मुद्रा यन्त्रे प्रवेशिताः। यन्त्रे नानावर्णानि कुड्मा[२०७]न्यासन् तत्तन्मुद्राकृते। स तां तां मुद्रां तत्तद्वर्णकुड्मे[२०८] प्रवेशयति स्म य त्तदर्थं निर्धारितमासीत्। अपेक्षितमुद्राप्रवेशेन निर्गतं यात्रापत्रकं मह्यं स समार्पिपत्। अत्रान्तरे गन्त्री विरामस्थानं प्रविष्टा। अत्रभवत्सु बहूनि वस्तूनि सन्ति। अहमस्म्यत्र भवतां सहाय इति मन्त्रयता[२०९] तेन क्षणार्धेनैव सर्वमपि वस्तुजातं मदीयं गन्त्रीकक्षे प्रवेशितम्। कतिपयैः क्षणैर्वयं मुख्यं गन्त्रीविरामस्थानं प्राप्ताः।

तत्र स जनो मां धनागारं निरदिक्षदवोचच्च तत्र गत्वा भवन्तो मुद्राविनिमयं कारयन्तु तन्निकटस्थादेव कार्यालयाच्च ट्यूबिंगनयात्रार्थं यात्रापत्रकं क्रीणन्तु यावदहं च मद्धर्मपत्नी च भवत्सामान्यरक्षां कुर्वः। अहं सर्वमप्युपरिनिर्दिष्टं कार्यं सम्पाद्य प्रतिनिवृत्तः। तदा पुरुषेणोक्तम्–कस्मात् 'प्लेटफार्म' इत्याख्यात्स्थलात् ट्यूबिंगनं प्रतिष्ठमाना गन्त्री भवद्भिरधिरुह्या? अहमवोचमिदम्प्रथमतया स्थानमिदं प्राप्तोऽस्मि। नाहमेतद्विषये किमपि वेद। अस्तु तर्हि, अहमेवैतद्विषये ज्ञातुं प्रयते। गन्त्रीविरामस्थाने यत्र तत्र पीतवर्णं पत्रं स्तम्भेष्वस्ति संश्लेषितं यत्र तत्तस्थानानि प्रति प्रतिष्ठमानानां गन्त्रीणां प्रस्थानकालनिर्देशः प्लेटफार्मनिर्देशश्च भवतः। पत्रं पठित्वा प्रत्यागतः स उक्तवान् – त्रिंशे 'प्लेटफार्म' इत्यत्र ट्यूबिंगनं प्रति प्रस्थानम्। तच्चातिदूरे। त्रयः पदार्थाः सन्त्यत्रभवत्सु। आवामेतद्विषयेऽपि भवत्साहाय्यमाचरिष्यावः। तौ त्रिंशं प्लेटफार्मं मां प्रापितवन्तौ। एतत्सर्वविध–कार्यनिर्वहणेन होराद्वयमितः कालो गतोऽभूत्। सार्धद्विवादनवेला तदानीमासीत्। गन्त्रीप्रस्थानकालस्त्रिवादनम्। तदा पुरुषेणोक्तं गतो भूयान् कालः। कच्चिद् बुभुक्षा भवतो बाधेत। अयमहमत्रभवत्कृते किञ्चित्खाद्यं च पेयं चानयामि। यदा स गतस्तदा तद्धर्मपत्नी मामाह–अपि जानन्ति भवन्तः कोऽयमिति।

---

२०६ डायश मार्क्स इत्याख्याः।
२०७ कुड्म = बटन, button
२०८ बटन इति हिन्द्यां चाङ्ग्ल्यां च।
२०९ उक्तवता इत्यर्थः। इति मन्त्रयमाण एवान्तर्हित इति शाकुन्तल (चतुर्थाङ्क) गतप्रयोगवत् प्रयोगः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

नेत्यहमित्यवोचम्। अयमस्ति मिहिरसेन इति। मया नावबुद्धमिति मदाकृतितोऽनुमाय किञ्चिद्विलक्षहृदयया तयोक्तम्–किं मिहिरसेनमपि न जानन्ति भवन्तः? तदाऽकस्मादेव मे स्मृतिमुपागतं वृत्तं यद् वृत्तपत्रेषु मुख्यवृत्ततया प्रकाशितमभूत् – मिहिरसेननाम्ना केनापि भारतीयेन ब्रिटिश चैनल इत्याख्यो जलधिर्दोर्भ्यां प्रतीर्ण इति। अहो! अयमेव स जनो य एतावन्तं कालं मय्यासीन्निरन्तरं मत्साहाय्यतत्परः। अध्ययनाध्यापन एवात्मानं विनियुञ्जानोऽहं तथा मृत्पिण्डबुद्धिर्यथा तन्नाम्नि संकीर्तितेऽपि तद्धर्मपत्न्या न सद्यस्तस्यास्मार्षम्। यत्सत्यं ह्रीमूढोऽहं तदास्वाङ्गानि प्राविशमिव।

कतिचिदि्भरेव क्षणैर्मिहिरसेनः फलानां पूर्णां करण्डिकामेकां पयश्चादाय तत्र समुपस्थितः। गन्त्र्यपि तदानीं विरामस्थानं प्राप्ता। तत्र मामुपवेश्य स मामवोचत् – सुखं यात्रा प्रवर्ततां भवतामिति। तत्प्रस्थानात्पूर्वमार्द्रनेत्रेण मयोक्तं बहूपकृतमत्रभवता मम। एकमपरमप्युपकारं करोतु भवान्। व्योमयानागमन–विलम्बाद्यया गन्त्र्या मया ट्यूबिंगनं प्रति गन्तव्यमासीन्न तया गन्तुमशकम्। विलम्बादन्यया गन्त्र्या मया यात्रा कर्तव्या भवति। ट्यूबिंगनस्थानीया मम सुहृदो मां प्रत्युद्गन्तुं पूर्वगन्त्र्यनुसारेण गन्त्रीविरामस्थान उपस्थास्यन्ते। ते सूचनीया यदहमन्यया गन्त्र्याऽऽगच्छामीति। तस्या ट्यूबिंगनप्राप्तिकालं ते सूचनीया येन तस्मिन्काले ते मां प्रत्युद्गच्छेयुः। एतदपि करिष्यामीत्युक्त्वा मां सस्नेहं परिष्वज्यामन्त्र्य च गतः स महामनस्वी महातपस्वी।

अतीतो भूयान् कालः। न तेन पुनः कदापि सम्पर्कोऽभूत्। स जीवलोकेऽस्त्यपि न वेति नाहं जाने। बहुधाऽहं तस्य स्मरामि। तच्चरितं च श्रावयाम्यन्यानपि। एतद्विधानां जनानां विषय एव चरितार्थतां याति प्राचामियमुक्तिः – महाजनाः सन्ति सदा महान्तः।

## १२७

प्राप्तः सप्तवादनेऽहं ट्यूबिंगननगरं प्राप्तः। गन्त्रीविरामस्थाने प्रो. श्तीतन्क्रोन–सहयोगी श्रीपायरो धर्मपत्न्या सह मां प्रत्युद्गन्तुमासीदुपस्थितः। मया पृष्टे किमनया गन्त्र्या ममागमनसूचना भवता प्राप्तेति सोऽवोचत्–फ्रैंकफुर्तनगरा–त्कश्चिद् दूरवाणीद्वारा मां भवतामेतद्गन्त्र्याऽऽगमनमसुसूचत्। तच्छ्रुत्वा सहसैव मत्स्मृतौ पद्यमिदमागतम् –


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

मनसि वचसि काये पुण्यपीयूषपूर्णा–
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः।
परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः।।[२१०]

यन्मयाऽन्ते प्रार्थितं तदपि मिहिरसेनेन साधितम्। क्व समुद्रतरणं क्व च मादृशस्य सर्वथाऽसंस्तुतस्य जनस्य सर्वविधं साहाय्यम्। अहो औदार्यम्, अहो दाक्षिण्यम्, अहो गुणानामतिशयः। सत्यमेव तद्विषये वक्तुं शक्यते – "गुणा गुणानुबन्धित्वात् तस्य सप्रसवा इव"।[२११]

श्रीपायरेण विश्वविद्यालयेनातिथीनां कृते निर्मिते वेश्मसंकुले[२१२] मदर्थं निर्धारिते तृतीयभूमिके किञ्चिद् वेश्माहं प्रापितस्तत्र संनिवेशितश्च। महानसस्तत्रासीत् न तु पात्राणि, तानि स्वगृहादानीय पायरेण तत्रासन् स्थापितानि, एवमेव चासन् द्वे कम्बले, प्रावारकः, कुथश्च। किञ्चिद् भोज्यं पेयं चाप्यासीत्तत्र स्थापितम्। रात्रिजागरेति[२१३] किञ्चिद् भुक्त्वा च पीत्वा च कञ्चित्कालमहं शयितः।

रात्रिभोजनं प्रो. शतीतनक्रोनगृह आसीत्। पर्वतोपत्यकायां स्थितस्य तद्गृहस्यच्छोभाऽऽसीद् विलक्षणैव।

वस्तुतः ट्यूबिंगननगरमतीव रमणीयम्। तस्य रामणीयकं मया कतिपयपद्यैरुपश्लोकितम्। तानि पद्यान्यद्यापि मयि सन्ति। तान्यत्रोद्धरामि–

योरूपभूमण्डलमध्यवर्ती
पारं समृद्धेः परमभ्युपेतः।
नानानदीप्रस्रवणैः सुरम्यः
शर्मण्यदेशः सुतरां विभाति।।
विराजमानं गिरिमेखलासु
सौन्दर्यमत्यद्भुतमादधानम्।
नेकारनद्या निकटे निविष्टं
ट्यूबिंगनाख्यं पुरमस्ति तत्र।।

---

२१० नीतिशतकम्, ७६
२११ रघुवंशम्, १.२२
२१२ Apartment houses इत्याङ्ग्ल्याम्।
२१३ इच्छा (३.३.१) इतिसूत्रान्तर्गत जागर्तेरकारो वा इतिं वार्तिकेनाकारप्रत्यये रूपम्। पक्षे शकारप्रत्यये जागर्येति रूपम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विराजितं पादपराजिभिर्यद्
विभूषितं श्यामलभूमिभागैः।
अभ्रंलिहाग्रैर्भवनैरनेकै–
रलङ्कृतं नेत्रसुखं ददाति।।
आकीर्णपुष्पस्तबका वसन्ते
दीर्घा अपूर्वां सुषमां दधानाः।
पूर्णैः फलानां तरुभिः प्रपूर्णा
विभान्ति यत्रत्यविहारवीथ्यः।।

कारण्डवैः पाण्डुभिरानमद्भिः
सुखेन यद्वारिणि सन्तरद्भिः।
मध्येपुरं पूर्णजला वहन्ती
यत्रास्ति नेकारनदी सुरम्या।।

## १२८

अपरेद्युरहं भारतीयविद्याध्ययनकेन्द्रं गतः। तत्र दृष्टो मया वेदव्याकरणादिशास्त्रपरपारदृश्वा निधिर्ज्ञानस्य शेवधिर्गुणानां योरूपसंस्कृतविद्वन्मौलिमुकुटायमानो विपश्चिदपश्चिमो मम पूर्वपरिचितो मय्यतितरां स्निग्धः प्रो. पॉलथीमेमहाभागः। स्वागतमत्रभवद्भ्य इति स स्नेहगद्गदया वाचाऽवोचत्। तदनन्तरं सम्भाषणप्रसंगे कश्चिद्विलक्षण एव प्रस्तावस्तेनोपस्थापितः। कक्षामुभावप्यावां सममेवाध्यापयेवेति। भारते नैतत्संभवि। एककालावच्छेदेन प्राध्यापकद्वयं कक्षामध्यापयेदित्यकल्पनीयमत्र। प्रस्तावो विद्वत्पुङ्गवस्येति मयोरीकृतः। लघुकौमुदी मयाऽध्यापनीयाऽऽसीत्। प्रथमं सूत्रादिव्याख्यानमहं प्रास्तौषं तदनन्तरं प्रो. पॉलथीमेमहाभागस्तद्विषये यद् वक्तव्यमभूत्तदवोचत्। कदाचिन्मतभेदोऽप्यावयोः प्रादुरभूत्। अस्ति वार्तिकं 'इवेन समासो विभक्त्यलोपश्च'। एतद्व्याख्यां प्रस्तुवता मयोक्तं यद् भट्टोजिदीक्षितेनैतद्विषये प्रौढमनोरमायामुक्तं यदयं पुनः क्वाचित्क एव। तदुद्दिश्य पालथीमेमहोदयेनोक्तं नैवमस्तीति। यत्र यत्र इवप्रयोगस्तत्र तत्र समासोऽङ्गीक्रियत एव। वेदे यत्र यत्र इवप्रयोगस्तत्र तत्रावग्रहं प्रदर्शयति पदपाठकारः। स समाससूचकः। मयोक्तम्–रघुवंश–प्रथमपद्यप्रथमपदं वागर्थाविवेति। तन्नित्यसमासोदाहरणरूपेण प्रस्तूयते। इवेन तत्र समास इत्यभ्युपयन्ति सर्वेऽपि टीकाकृतो मल्लिनाथादयः। परन्तु तदेकश्लोकान्तरेण तादृश एव उद्बाहुरिवेति प्रयोगे न कोऽपि

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

समासमभ्युपैति। अतः सत्यमेवोक्तं भट्टोजिदीक्षितेन अयं पुनः क्वाचित्क एवेति। मद्वच आक्षिप्य पॉलथीमेमहोदयेनोक्तं वेदे तु तन्नास्ति। मयोक्तं भवेत्तथा नाम परं सिद्धान्तकौमुद्यां मुख्यतया लौकिकशब्दानामेव व्याख्यानं यद्यपि तत्र स्वरवैदिकप्रक्रियासमावेशोऽप्यस्ति। अस्तु, पुनरेतद्विषये चर्चां प्रवर्तयिष्याव इत्युक्त्वा तूष्णीकामवालम्बिष्ट पॉलथीमेमहाभागः। इयं सर्वाऽपि चर्चा छात्राणां पुरत एव प्रवृत्ता। किञ्चिद्दिनानन्तरं यदा पुनरध्यापनीयाऽऽसील्लघुकौमुद्यावाम्यां तदा पॉलथीमेमहाभागेनोक्तं यदतीतेषु दिनेषु मया वैदिकं वाङ्मयं सम्यगालोचितं दृष्टं च तत्र यन्नाना स्थलेषु नावग्रहप्रयोगो यस्याभिप्रायो यन्न तत्र समासाभ्युपगम इति। अतः सत्योद्या गीर्भट्टोजिदीक्षितस्य – अयं पुनः क्वाचित्क एवेति। मयोक्तम् न भट्टोजिदीक्षिताद्याः प्रमाणभूता वैयाकरणानामप्रमाणं वच उद्गिरन्ति। तच्छ्रुत्वा पॉलथीमेमहाभागेनोक्तम् – सत्यमाह भवान्। तादृशां विदुषां सर्वमपि वाङ्मयं हस्तामलकवदेव। नमस्यास्तेऽस्माकं सर्वेषामेव। तथैव च भवन्तोऽपि ये तद्ग्रन्थरत्नगूढरहस्योद्भेदनेऽनुदिनमात्मानं व्यापारयन्ति।

## १२६

अन्योऽप्येकः प्रस्तावः पॉलथीमेमहाभागेनोपस्थापितः। प्रतिशुक्रवासरं मया तद्गृहमुपेत्य सस्वरं कुमारसम्भवपद्यपाठः करणीय इति। एतेन विभिन्नवृत्तोपनिबद्धानां पद्यानां पारम्परिकरीत्योच्चारणाभ्यासस्तस्य भवेदिति। नानासप्ताहानेवं संस्कृतपद्योच्चारणाभ्यास आवयोः प्रावर्तिष्ट।

ट्यूबिंगनस्थभारतीयविद्यासंस्थाने मत्सहयोगिनश्छात्राश्च संस्कृतेन वक्तुं शक्नुयुरिति समुदितो मे मनसि विचारः। पाश्चात्याः संस्कृतं सम्यग् जानन्ति, तद्रहस्यं तत्प्रत्यक्षम्। तद्वाङ्मयगुणदोषपरिच्छेदे तेषां परमं प्रावीण्यम्। परं संस्कृतेन वक्तुं वा किञ्चिन्निबन्द्धुं वा तेऽक्षमास्तदभ्यासाभावात्। तदभ्यासस्तेषां भवत्वित्यत्र प्रावर्तिष्ट मम कठोरो निरन्तरश्च प्रयासः। एवं मया चिन्तितं प्रतिबुधवासरं सर्वेऽपि भारतीयविद्यासंस्थानसदस्या एकत्र समवयन्तु। तेषु कोऽप्येको यं कमपि विषयमाश्रित्य संस्कृतेन स्वां वाचं प्रवर्तयत्विति। नूत्नोऽत्र कश्चन पन्था मया समाश्रितः। विषयनिर्धारणं पूर्वं न क्रियेत। तत्र यथाकामी भवतु। यदि समुचितं संस्कृतपदं न स्फुरति तर्हि आङ्ग्लभाषापदं शर्मण्यभाषापदं वा विभक्तियोगेन प्रयोक्तव्यम्। न तत्र काऽपि हानिः। प्रथमं विरम्य विरम्य समुचितपदान्वेषणधिया शनैश्शनैर्यदि कश्चिद्वक्तुमुपक्रमते तत्तस्य संस्कृतभाषणाभ्यासक्रमे प्रथमं सोपानं भवति। साधु वच्मि न वेति शंकाग्राहोऽनभ्यस्तसंस्कृतभाषणं जनं दशति। दशतु


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

नाम। शुद्धं वाऽशुद्धं वोच्चारणीयमेव। कालेनाशुद्धिशोधनमपि भवति। प्रयोगोऽयं ममातीव सफलो जातः। पायर—शतीतनक्रोनादयोऽनेके संस्कृतेन भाषणे कामपि प्रौढिमवापुः। पायरस्तु धाराप्रवाहरूपेण संस्कृतेन भाषितुं प्रारब्धः।

संस्कृतसम्भाषणाभ्यासकार्यक्रमोऽयं सायं कक्षाध्यापने पर्यवसिते प्रावर्तत येन न तत्र स्याद् व्याघातः।

विषयचयनविषये किञ्चिद् रुचिकरमत्र प्रस्तौमि। एकस्मिन् बुधवासरे शतीतनक्रोनः पादेन खञ्ज[२१४]इव क्रामन्नुपस्थितः। कुतस्तवेदृशी दशेति पृष्टः सोऽवोचत् — स्विटज़रलैण्डदेशं गतोऽहम्। तत्र 'स्की'क्रीडारतस्य मे पादयोरपघातः[२१५] सञ्जातः। केयं 'स्की'क्रीडेति तावत्पर्यन्तं नाहमजानाम्। स इमां व्याख्यातुं प्रारब्धः। मयोक्तं नाङ्गल्या संस्कृतेनैवैतद् व्याख्यायताम्। उत्स्मयमानः यथाकथञ्चित्संस्कृतेन स व्याख्यातुं प्रारब्धः। 'स्की' इत्यस्ति पर्वतीया क्रीडा। हिमाच्छादितस्य पर्वतस्य शिखरात् 'स्की'क्रीडारसिको जनो नौकाकारे फलके[२१६] दारुनिर्मिते स्थितो भवति। शिखरात्तत्फलकमधस्ताच्च्यवते। कदाचित्तच्च्युतिवेगस्तथा तीव्रो भवति यत्फलकं विपरिवर्तते। तदा तत्स्थो जनो बलाद्धिमे क्षिप्तो भवति। तद्वशात्तस्यापघातोऽपि भवति, अस्थिभङ्गो वा स्नाय्वाघातो वा। एतत्सम्भवेऽपि जनाः क्रीडामिमामुपाश्रयन्ति 'ईदृग् विनोदः कुत' इति बुद्धिमास्थिताः। शतीतनक्रोनेनाऽप्यपघातः सोढः। अकिञ्चित्कर एवायमिति स भूयो भूयोऽवोचत्। कालेन कष्टमिदमपयास्यत्येव, उल्लाघता भवेदेव। परन्तु य आनन्दो मयाऽधिगतः स निश्चितमेव वाचामगोचरः। हिमक्रीडासुखमलौकिकमेव।

## १३०

भारतीयविद्यासंस्थाने ट्यूबिंगनस्थे न मया लघुकौमुद्येवाध्यापनीयाऽऽसीद्रघुवंशकाव्यमपि। तन्मे परायै निर्वृतयेऽभूत्। नानाकाव्यकर्त्राऽपि मया केवलं द्विरेव काव्याध्यापनावसरो लब्धः। एकदा दिल्लीविश्वविद्यालयेऽपरतश्च ट्यूबिंगनविश्वविद्यालये। व्याकरणमधीते (न तु व्याकरणं वेद) इति दृष्ट्या वैयाकरणोऽहमिति बुद्धिर्मद्विषये तथा सुदृढाऽऽसीद्यावदायुर्व्याकरणाध्यापन एवाहं

२१४ येनाङ्गविकारः (२.३.२०) इत्यनेन तृतीया।
२१५ चोट इति हिन्द्याम्।
२१६ तख़्ता इति भाषायाम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

नियोजितः। कष्टं व्याकरणम् इति न तत्र भूयांसः क्रमन्ते तद्गूढरहस्यसञ्चयं वा संविद्रते[२१७], आधुनिक महाविद्यालयेषु विश्वविद्यालयेषु वा विशेषतः। ये केऽप्यल्पीयांसः सन्ति – तेऽङ्गुलिगण्या एव – ते तदध्यापने नियोज्यन्तेऽधिकृतैः। अहमपि तेष्वल्पीयःस्वेकतमः।

रघुवंशस्य प्रथमसर्गो मयाऽध्यापनीय आसीत्। तत्पद्यस्थं प्रत्येकं पदं व्याकरणदृष्ट्यौचित्यदृष्ट्या चाहं व्याख्यम्। तथाहि–

तस्य दाक्षिण्यरूढेन नाम्ना मगधवंशजा।
पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा।।

इति पद्ये पत्नीप्रयोगौचित्यमहमसाधयम्। पत्नी–भार्या–जायेत्यादयो नाना शब्दा अत्र प्रयोक्तुं शक्या आसन्। अनुष्टुब्वृत्तमत्र। गुरुद्वयमपेक्ष्यते। तच्च सर्वेष्वपि त्रिषु शब्देष्वस्ति। तथाऽपि भार्याशब्दं जायाशब्दं च परिहाय पत्नीशब्दप्रयोग एवाश्रितः कविना, स चात्रोचित एव। पत्नी सा भवति या यज्ञे पत्या संयुक्ता भवति। पत्युर्नो यज्ञसंयोगे (४.१.३३) इति सूत्रेण पतिशब्दस्य नकारादेश आदिष्टो भगवता पाणिनिना। अलोऽन्त्यस्य (१.१.५२) इति नियमेन य आदेशः षष्ठ्या निर्दिष्टः स तस्यान्तिमस्यालो भवति। सूत्रे पत्युरिति पतिशब्दः षष्ठ्या निर्दिष्टः। नकारादेशस्तस्यान्तिमस्यालः – यो ह्यत्र 'इकारः' – तस्य स्थाने भवति। तेन पतिशब्दः पत्न्रूपो भवति। तदा नकारान्तत्वादस्य ऋन्नेभ्यो ङीप् (४.१.५) इत्यनेन स्त्रीत्वविवक्षायां ङीप् प्रत्ययो भवति। नकारादेशः कदा भवतीति प्रश्ने सूत्रकारेणोक्तमेव यज्ञसंयोगे इति। यतोऽध्वरो (= यज्ञः)ऽत्रोपमानत्वेन परिगृहीतः कविनाऽतो यज्ञसंयोगार्थबोधकः पत्नीशब्द एवात्रोचिततम इति विशदं कक्षायां मया व्याख्यातम्। यस्मिन्दिन इदं व्याख्यानं मया प्रस्तुतं तद्रात्रावेव मे निद्राभङ्गो जातः। प्रावर्तत च मे चिन्तनधारा। पद्येऽत्र कविना 'दक्षिण्यरूढेन' इति पदं प्रयुक्तम्। रूढपदमत्र शंकां जनयति – रूढेन नाम्ना सुदक्षिणा। किं सुदक्षिणेति सुदक्षिणाया वास्तविकं नाम नासीत्? दाक्षिण्यवशात्तद्रूढिं गतम्? दृश्यन्ते तादृशानि नामानि यानि जन्मनामतो भिद्यन्ते। तैरेव जनोऽभिज्ञातो भवति। यथा द्रौपदीति। तस्या जन्मनाम तु कृष्णेत्यासीत्परं द्रुपदपुत्रीत्वाद् द्रौपदीति तन्नाम प्रसिद्धिं गतम्। यदि कश्चिद् अद्यत्वे कथयेत्कृष्णेति पाण्डवानां पत्न्यासीदिति न कोऽप्यवबुध्येत। कुन्तीविषयेऽप्येवमेव। तस्या जन्मनाम पृथेत्यासीत्, परं

---

२१७ विदिप्रच्छिस्वरतीनामुपसङ्ख्यानम् इति वार्तिकेन सम्पूर्वकस्यादादिकस्य विदेरात्मनेपदे वेत्तेर्विभाषा (७.१.७) इति सूत्रेण झादेशस्यातो रुडागमे रूपम्। सम्यग् जानन्तीत्यर्थः।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कुन्तिभोजस्य दुहितेति कृत्वा सा कुन्तीति नाम्ना ख्याता। अस्तु सुदक्षिणेति जन्मनाम वा दाक्षिण्यगुणातिरेकाद् रूढं नाम वेत्येकः प्रश्नः। अपरः प्रश्नोऽत्रास्ति यत्कविना 'नाम्ना' इति शब्दः प्रयुक्त 'इति' शब्दश्चापि। उभयोरेकतरत् पर्याप्तमभविष्यत् – पत्नी नाम्ना सुदक्षिणाऽऽसीत् अथवा पत्नी सुदक्षिणेत्यासीत्। कथमेकमेवार्थं द्योतयितुं पदद्वयप्रयोगः। अधिकपदत्वं नाम महाकवौ न सम्भाव्यते। तदत्र को नाम तस्याभिसन्धिः स्यात्। नाना विद्वांसोऽत्र विषये मया पृष्टाः। नैकेनापि सम्यक् समाधानं प्रस्तुतम्। सम्प्रत्यप्ययं प्रश्न एव। किं समाधानमस्येति नाद्यावध्यप्यहं वेद।

कथं सूक्ष्मदृष्ट्या मया रघुवंशकाव्यमध्यापितमित्यस्यापरमप्युदाहरण-मत्रोपन्यस्तुमिच्छामि। पूर्वोद्धृतपद्यानन्तरमेवास्ति पद्यं–

तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः।
विलम्बितफलैः कालं स निनाय मनोरथैः।।[२१८]

अत्र सुदक्षिणा दिलीपस्यात्मानुरूपा, आत्मसदृशीत्युक्ता। आत्मानुरूपत्वं तस्या द्वाभ्यां प्रकाराभ्यां भवितुमर्हति, कुलेन च शीलेन च। यदि दिलीप उत्तरकोसलेश्वरस्तर्हि सुदक्षिणाऽपि मगधवंशजा। मगधवंशस्य स्वस्मिन् काले महती प्रतिष्ठाऽऽसीत्। एतन्नाम कुलेन साम्यम्। शीलेन तावत् – यदि दिलीपो गुणानामाकरः–

ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव।।[२१९]

तर्हि सुदक्षिणाऽपि सुदक्षिणा। तद्वशादेव तया सुदक्षिणेति नामार्जितम्। अत उचितमेव यत्तस्यां स (दिलीपः) आत्मजन्मसमुत्सुकः स्यात्। अत्र कविना पुत्रार्थक आत्मजशब्द एव प्रकारान्तरेण व्याख्यातः। आत्मा वै जायते पुत्र इति श्रुतिः। आत्मैव तद्रूपेण जायते। यद्यात्मनो जन्म तर्हि तेनात्मनोऽनुरूपायामेव तदौचित्यमिति कवेराशयः।

एवं कवीनां वचांसि व्याख्यामर्हन्ति। सूक्ष्मेक्षिकया तानि परीक्षणीयानि भवन्ति। न चाद्यत्वे कश्चित्तदर्थं यतते। अहिरेव ह्यहेः पादान् विजानाति न संशयः। एवं कविरेव कवेरन्तर्गूढभावमभिज्ञातुं क्षमः। यदि कविः सहृदयभूमि-कायामात्मानं स्थापयति तर्हि विलक्षणमेव किञ्चित्स्फुरति। सम्यगेवोक्तमानन्दवर्धनेन

---

२१८ रघुवंशम्, १.३३
२१९ तदेव १.२२


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

सरस्वत्यास्तत्त्वं कविसहृदयाख्यं विजयते। कविश्च सहृदयश्चेति सरस्वत्यास्तत्त्वं नाम।

काव्याध्यापनकाले प्राध्यापकेन काव्यपाठः कथं करणीय इत्यत्र विशेषतोऽवधेयम्। श्रोतॄणां श्रोत्रशष्कुलीष्वमृतनिष्यन्द इव तत्पाठो भवतु। सैषा काव्यप्ररोचना। तदनन्तरं विश्लेषणे प्रवर्तितव्यम्। यदा कविः काव्यं करोति तदानायासमेव प्रकरणानुकूला पदावलिस्तन्मुखान्निःसरति। औचित्यानौचित्य–विचारचर्चा तदा नैव प्रसरतीति मन्ये। अत एव कविर्विस्मितः सन् कथयति – किमिदं व्याहृतं मयेति। यदा कविर्गोदावरीवारीणां नादं वर्णयति तदा तदनुकूलैव वाक् ततो निस्सरति – गद्गदनदद्गोदावरीवारयः[२२०]। उपलसंघर्षणविशीर्ण–रेवावर्णनकामः कविर्वैदर्भीरीतिसन्दर्भं विहाय यत्र वैशिष्ट्यं तस्याभिष्टुतं सहृदयैर्गौडीरीतिमाश्रयति कर्कशां क्लिष्टां च पदावलिमवलम्बते – रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्येति[२२१]।

एवमेव मया कृतं यदा दिल्लीविश्वविद्यालये केवलं मासद्वयमेव नैषधाध्यापनावसरो लब्धस्तदध्यापकस्य चन्द्रभानुगुप्तस्यान्यत्र नियुक्तिवशात्।

## १३१

ट्यूबिंगननगरे पायरेण सह जातो मम प्रगाढः सम्बन्धः। स मत्कृते छात्रोऽप्यासीत् सुहृदपि। तत्सत्राहं सपत्नीकः शर्मण्यदेशीयनानास्थानानि गमिकर्मीकृतवान्। न केवलं शर्मण्यदेश एवापि तु तज्जन्मस्थानं स्विटज़रलैण्डस्थम् आइन्सीड्लन् नामकं ग्राममप्यहं गतस्तद्वाहनेन। तन्माता तदा तमधिवसति स्म। पर्वतोपत्यकायां स्थितः स ग्रामोऽतिमनोहरोऽस्ति। भगवत्या प्रकृत्या तत्र सुषमा मुक्तहस्तं विकीर्णा। गोधूलिवेलाऽऽसीद्यदा वयं तत्र प्राप्ताः। यथा भारते गवां कण्ठेषु घण्टिका बध्यन्ते तथैव तत्रापि। गोष्ठं प्रत्यावर्तमानानां तासां गलेषु बद्धानां घण्टिकानां निनादः कमप्यानन्दातिरेकमजनयदस्मच्चेतसि। स्विटज़रलैण्डीया गावो विश्वप्रसिद्धाः। कुण्डोध्न्यस्ता दोहीयस्यश्च[२२२]। अतीव स्वादु मधुरं च तासां पयस्तदुद्भूतं नवनीतं च। उभयमप्यावाभ्यां, मया च धर्मपत्न्या चातृप्ति सेवितम्।

---

२२० उत्तररामचरितम्, २.३०

२२१ मेघदूतम्, पूर्वमेघः, १६

२२२ तुरिष्ठेमेयःसु (६.४.१५४) इत्यनेनेयसुन्। अतिशयेन दोग्ध्र्य इत्यर्थः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अपरेद्युः प्राह्णे विपणिभ्रमणार्थमावां प्रस्थितौ। तत्र कस्मिंचिदापणे पक्षिणां पशूनां च 'प्लास्टर ऑफ़ पैरिस' इत्याख्यमृत्तिकाविशेषेण निर्मिता मूर्तयः पण्यरूपेण प्रदर्शिता आसन्। कुतूहलवशात्तस्मिन्नापण आवां प्रविष्टौ। तत्रोलूकस्य रूप्या[२२३] मूर्तिर्विशेषतो मन्मन आकृक्षत्। तां क्रेतुं बलवती ममेच्छा जागरिता। मद्धर्मपत्नी नेदमभ्युपैत्, उलूकमूर्तिस्थापना गृहे अमङ्गलमिति प्रतिपन्ना। नेयं मूर्तिः कथञ्चदपि क्रेतव्या। यस्मिन् गृहे घूको[२२४] घूत्करोति तत्र विनाशः सुनिश्चितः। उलूको निर्जनताप्रियः। तस्याकृतिरपि निर्जनतारूपां शून्यतामावहेत्। आपणिको यावत्कालमावां सम्भाषमाणावास्व अश्रौषीदावयोर्वचः। तदा साहसमारुह्यास्मच्छङ्काशूकं निष्कर्षन्निव सोऽवोचत् – अत्रोलूको माङ्गलिकः पक्षीति मन्यते। यत्रास्य मूर्तिः स्थापिता भवति तत्र वर्धेते समृद्धिरैश्वर्यं च। मयाऽप्युक्तम् – उलूको लक्ष्म्या वाहनम्। कुतस्तदागमनेन लक्ष्मीर्भवेदपगता। अस्तु, यथा भवद्भ्यो रोचत इत्युक्त्वा यथाकथञ्चिदात्मन उद्वेगं संयच्छन्ती मत्पत्नी तत्क्रयमन्वमन्यत।

## १३२

प्रसक्तानुप्रसक्ततया एतद्विषये यज्जातं परस्तात् तदप्यत्रोपन्यस्तुमिच्छामि, मानवमनसः कथंविधा प्रवृत्तिरिति प्रदर्शयितुम्। अस्ति बैंकाकनगरे मद्धर्मपत्न्याः काचन सखी। तत्पतिः सा स्वयं च रत्नादिव्यापारं कुरुतः। एकदा व्यापारे तयोर्निरन्तरार्थहानिः प्रावृतत्। सा मत्पत्नीमुक्तवती, भवति, ब्रूहि कमप्युपायं येन प्रवर्तमाना हानिरियमुपरमेत्। मत्पत्न्या सैवोलूकमूर्ती रक्तांशुकेनावेष्ट्य तस्यै दत्ता किमपि यन्त्रमिदमिति पूजागृहे स्थापनीयमिदमिति चोक्त्वा। तस्या अभिसन्धिरासीदुलूकमूर्तेर्यथा कथञ्चिन्मोक्षः। परन्तु किञ्चिद्विचित्रमिवाघटत। यदाप्रभृति मूर्तिरियं तत्पूजागृहे स्थापिताऽभूत्तदा प्रभृति आर्थिकी हानिरपैतुं प्रारब्धा। कालेनापूर्वा समृद्धिस्तद्गृहे पदमधत्त। तद् दृष्ट्वा व्यर्थमेव मया शङ्कितमिति मत्पत्नी रक्तांशुकावेष्टितं 'तद्यन्त्रं' मह्यं प्रत्यर्पयेत्यवोचत्। न दास्यामीति च साऽभाणीत्। एवं मनः परीवर्तो[२२५] भवति जनस्य।

---

२२३ रूपादाहतप्रशंसयोर्यप् (५.२.१२०) इत्यनेन प्रशंसायां यप्। प्रशस्तं रूपमस्या इति रूप्याशब्दस्यार्थः।

२२४ घूक उलूकः।

२२५ उपसर्गस्य घञ्यमनुष्ये बहुलम् (६.३.१२२ ) इत्यनेन परि इत्युपसर्गेकारस्य दीर्घः।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अस्माकम् आइन्सीड्लन् ग्रामेऽवस्थितिकाल एव भारतीयनृत्योत्सवस्यायो-जनमभूत्। कथकलीनृत्यप्रस्तुतिस्तत्राऽऽसीत्। तत्राप्यादानुपस्थिती। इस्कौनसंस्थयाऽपि किमप्यायोजनं कृतमासीत्। तत्र भारतीयं मिष्टान्नादिकं सुलभमासीत्। तदप्यावाभ्यां क्रीतमास्वादितं च। एतत्सर्वं भारत एवावां स्व इति प्रतीतिमजनयत्।

## १३३

दिनद्वयमवस्थितिरासीद् आवयोः आइन्सीड्लन्ग्रामे। आवयोः प्रस्थानवेला समागता। पायरस्य मातोपायनरूपेण प्रभोः क्रिस्तोः शूलसहिता या मूर्तिस्तया माध्यमिकशालायां स्वकीयमूर्तिकलाकौशलवशात् पुरस्काररूपेण प्राप्ताऽऽसीत् तामावाभ्यां समर्पितवती। इयं मूर्तिर्ममात्यन्तं प्रिया। इयमस्ति प्रथमो मे पुरस्कारः। इयन्तं कालमियं मयि स्थिता। इतः परं भवतोः स्थास्यति। एतद्भाषमाणायास्तस्याः कण्ठो बाष्पवृत्ति-कलुषोऽभूत्। सा हि मूर्तिकलाकुशला। नाना मूर्तयस्तया निर्मिताः। तासु काश्चन स्वतनयाय पायराय समर्पयन्ती साऽवादीत् – पुत्रक! गृहाणैताः स्थापय चैताः स्वगृहे। उपसीदति मेऽन्तवेला। कदा नु मम महाप्रस्थानं भवेदिति को जानाति। जीवनकाल एवैताः स्वेभ्यो[२२६] ददामि येन सुरक्षिता इमास्तिष्ठन्तु। मयि दिवंगतायां का नामैतासां दशा भवेत्। अश्रुपूर्णेक्षणाभ्यां तामामन्त्र्य वयं प्रस्थिताः। गृहद्वारि स्थिता सा तावत्कालम् अस्मान् निध्यायन्त्यवालोक्यत यावत्कालं वयं न तद्दृष्टेर्दूरं गताः। दिनद्वयं तस्याः कृत उत्सव इवासीत्। इतः परं तयैकाकिन्यैव जीवनं यापयितव्यं भवेत्। का नामेयं पाश्चात्या जीवनपद्धतिर्यत्रापत्यजातं पितरौ जराजीर्णौ विहायान्यत्र वसतिं कल्पयति। परिणते वयसि नाना रुजाभिराक्रान्ताभ्यां ताभ्यामपत्यसान्निध्यमपेक्षितं भवति। तदेव च तयोर्न सुलभं भवति। पौत्रमुखदर्शनस्य तु का कथा, पुत्रमुखदर्शनमपि ताभ्यां न लभ्यते। यदि लभ्यतेऽपि तर्हि कदाचिदेव। अतिथिवदपत्यजातमायाति, अतिथिवच्च परायाति। किं जातं तस्य स्नेहतन्तोर्योऽन्तर्मर्माणि सीव्येत्? न केवलं पाश्चात्यजगत्येवेदमवलोक्यते, सम्प्रति भारतेऽपि तत्प्रभावोऽरूंषि तुदति। किं नामात्र क्रियेत? कालस्य गतिरीदृशी!

---

२२६ स्वेभ्यः = बन्धुभ्यः।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

# १३४

पायरेण स्वकीयावासार्थं चर्चाख्यं खिस्तुधर्ममन्दिरं क्रीतम्। चर्चानामापि क्रयविक्रयौ भवत इति नेतः पूर्वं मया श्रुतमासीत्। तत्र विशाले 'हाले' स्वकीयः पुस्तकसङ्ग्र-हस्तेन स्थापितः। विषयानुसारिपुस्तकस्थापनेन स स हालो विभिन्नखण्डेषु विभक्तः। नानासहस्रपुस्तकानि पायरे सन्ति। पुस्तकपायरो[२२७]ऽसौ। हाले[२२८] नाना कलाकृतयोऽपि तेन स्थापिता यास्तेन यतः कुतोऽपि गृहीताः। शयनकक्षस्तस्य महानसं चोपरिभागे स्तः।

एकदाऽहं तच्चर्चगृहमुपेतस्तत्पुस्तकसंग्रहमवालोकयिषि। तत्र पुस्तकमेकं मद्दृष्टिमापतितम्। तस्य रोमनाक्षरविन्यास आसीत् Malerei इति। मया चिन्तितमाङ्ग्ल Malaria एव तत्र शर्मण्यदेशाक्षरविन्यासेन लिखित इति। आङ्ग्लशब्दानामनेकेषां शर्मण्यभाषायां तद्भिन्नोऽक्षरविन्यासो भवति, यथा आङ्ग्ल School इति शब्दः शर्मण्यभाषायां Schule इति रूपेण लिख्यते। पुस्तकसंग्रहा-वलोकनानन्तरं मया पायर उक्तः – अतीव समृद्धो भवत्पुस्तकसंग्रहः, तथा समृद्धो तदत्र मलेरियाविषयेऽपि पुस्तकमस्ति। तच्छ्रुत्वा विस्मयं नाटयन् स उक्तवान्–मलेरियाविषये? नास्ति मयि तादृशं किमपि पुस्तकम्। अस्तीत्यह-मुक्तवान्। मया तद् दृष्टम्। आगच्छतु भवान् मया सह। दर्शयामि तावदिदमत्रभवतः। यदा तत्पुस्तकं पायरेण दृष्टं तदा स साट्टहासमहसत् – राशीभूतः प्रतिदिशमेव त्र्यम्बकस्याट्टहासः। अवोचच्च 'मालेराइ' इत्युच्चार्यमाणः शर्मण्यशब्दोऽयं चित्रार्थकः[२२९]। तच्छ्रुत्वा अहो! ममाज्ञानविजृम्भितमित्यहमप्युच्चैः प्रहसितः।

# १३५

सम्प्रति प्रसंगान्तरमाश्रित्य किञ्चिद् विवक्षामि। मम शर्मण्यदेशं प्रति प्रस्थानात् पूर्वं शर्मण्यदेशं प्रत्यहं प्रतिष्ठ इति यतः कुतोऽपि प्रवृत्तिमुपलभ्य मत्सहयोगिनी मिराण्डा हाऊस इत्याख्ये दिल्लीविश्वविद्यालयसम्बद्धे महाविद्यालये संस्कृतप्राध्यापिका कौसल्यागुप्ता मामुपसन्ना। भवन्तः शर्मण्यदेशं प्रतिष्ठासव इति मया ज्ञातम्। अहं तत्र कृतवसतिः। तत्र भोजनादि भवद्भिः स्वयं साधनीयं

---

२२७ पुस्तकप्रियः पायर इति पुस्तकपायरः। शाकपार्थिवादिवन् मध्यमपदलोपी समासः।

२२८ हल विलेखने इत्यतो घञि हालशब्दं व्युत्पाद्य स्वकीये सूर्यप्रभा किं वा वैभवपिशाच इति ग्रन्थे प्रयुक्तोऽयं शब्दो ग्रन्थकर्त्रा।

२२९ Painting इत्याङ्ग्ल्याम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

स्यात्। पाश्चात्यदेशेषु पाचका न सुलभाः। रन्धनादिकं भवत्कृते कष्टकरं भवेत्। अतो मत्परामर्शो यद् भवन्तः कुत्रापि आपणसंकुले[२३०] गत्वा टीनपात्रेषु न्यस्तं पूर्वसाधितं शाकादि क्रीणीयुः तत्सहकारेण रोटिकामपि (ब्रेड)। टीनपात्रावेष्टनकं कर्तनयन्त्रेण कर्तयित्वा तत्स्थं पदार्थं च स्थाल्यां प्रत्यावर्त्य तच्च नवनीतेन (घृतं तत्र नास्तीतिकृत्वा) संस्कृत्य सेवन्तां भवन्तः। कतिपयक्षणैरेव मुक्ताः स्युर्भुवन्तः। मया यावत्कालं ट्यूबिंगन उषितं तावत्कालं नोपदेशस्तस्याः पालितः।

ट्यूबिंगननगरेऽन्ययोरूपीयनगरवन्मध्येनगरमतिविशाले चत्वरे प्रतिबुधवासरं प्रतिशुक्रवासरं च हट्टः स्थापितो भवत्या प्रत्यूषादापराह्णं यत्र कृषका नानाविधान् शाकान् फलानि, पयो, दधि केवलं वा फलादिमिश्रितं वा ऽऽमिक्षा[२३१]श्च विविधाः मृद्व्यश्च कठिनाश्च, सद्यः साधिता[२३२]श्च बहुकालपूर्वं साधिताश्च व्यञ्जन–मिश्राश्चाव्यञ्जनमिश्राश्च विक्रयार्थं प्रस्तुवन्ति। जनास्तद्धट्टमहमहमि–कयाऽऽपतन्ति। पंक्तिशस्ते तत्र स्यूतक[२३३] हस्ता गतागतं[२३४] कुवार्णा दृष्टिपथं प्रयान्ति। शाकादयस्तत्र तस्मिन्नेव महति प्रत्यूषे ततः पूर्वदिने वा क्षेत्रेभ्यः सञ्चिता भवन्ति नत्वापणसञ्चयवन्नानादिनपूर्वं सञ्चिता इति तत्क्रयणे जनानां भवति विशेषाग्रहः। भारतीयविद्यासंस्थानार्थं पन्थाश्चत्वरत एवासीत्। अहं हट्टाच्छाकान् (तत्र सर्वविधाः शाकाः – सर्षपशाकः, पालकशाकः, मूलकं, गृञ्जनं[२३५], वृन्ताकः[२३६], कर्कटी[२३७], अलाबुः[२३८], तुम्बी[२३९], कूष्माण्डम्[२४०], पुष्पगोजिह्वा[२४१], कपिशाकः, (पत्रगोजिह्वा)[२४२], ग्रन्थिगोजिह्वा[२४३], कलायाः[२४४], आलुकम्,[२४५] पलाण्डुः[२४६]

२३० Departmental store इत्याङ्ग्ल्याम्
२३१ पनीर इति हिन्द्याम्।
२३२ तत्कालं साधिता न तु पर्युषिताः।
२३३ थैला इति हिन्द्याम्।
२३४ गतं चागतं चेति द्वन्द्वः। सर्वो द्वन्द्वो विभाषयैकवद् भवतीति परिभाषया एकवद्भावः। ततः स नपुंसकम् (२.४.१७) इत्यनेन नपुंसकलिङ्गता।
२३५ गाजर।
२३६ बैंगन।
२३७ ककड़ी
२३८ घिया
२३९ लौकी
२४० कुँहड़ा
२४१ गोभी
२४२ पत्ता गोभी
२४३ गांठ गोभी
२४४ मटर
२४५ आलू
२४६ प्याज़


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

रागालु:[२४७]–सुलभा भवन्ति) क्रीत्वा संस्थाने मदर्थं निर्धारिते 'कबर्ड' इत्यत्र न्यास्थम्। सायंकाले च गृहं प्रत्यागच्छन् ततस्तानादाय गृहमागमम्। प्राप्तश्च गृहं, चायं साधयित्वा पीत्वा च तत्, भोजनसाधने व्यापृतोऽभूवम्। स एव मे दिनोदोऽभूत्। शाकं सम्यक् प्रक्षाल्य कर्तित्वा चापचम्। तत्सहकारेणैवौदनमपि चुल्ल्यामन्यस्यामपचम्। कदाचित् करपट्टिका[२४८] अप्यसाधयम्। गोधूमचूर्णं नास्ति तत्र दुर्लभम्। अहं स्वपाकी। न तेन मे भोजनसाधने क्लेशः। होरार्धेनैव सर्वं साधितमभवत्। यदि सद्यश्चिताश्शाका उपलभ्यन्ते तर्हि कुतो नानादिनपूर्वं पक्वा टीनादिपात्रस्थापिता बहुकालपर्यन्तमुपयोगयोग्यान् विधातुं रसायनमिश्रास्ते सेव्येरन्। अतः कौसल्यागुप्तया निर्दिष्टः पन्था नैकदाऽपि मया समाश्रितः।

पाश्चात्यदेशेषु सर्वं गृहकार्यं स्वयमेव करणीयं भवति पात्रसम्मार्जनाद् गृहसम्मार्जनं यावत्। न तत्रैतत्कार्यार्थं कश्चित्कर्मकरो लभ्यते। मम ट्यूबिंगनागमनसप्ताहानन्तरमहं विश्वविद्यालयवेश्मनामधीक्षकमुपेतः। तमहमन्वयुक्षि किं सम्भवति तादृशी व्यवस्था यया गृहकार्यार्थं मया कश्चिद् भृत्य उपलभ्येत। स मामामूलचूलं निरीक्ष्योक्तवान् – सम्भवति। एतदर्थं भवद्भिर्वृत्तपत्रेषु विज्ञापनं दातव्यं भविष्यति। तदा प्रार्थिनो भवत उपसत्स्यन्ति। तदन्तर्वीक्षानन्तरं यं कमपि कामपि वा योग्यं वा योग्यां वा पश्येयुर्भवन्तस्तन्नियुक्तिं कुर्वन्तु। परमेतेनार्धं वेतनस्य भवतां गतं भवेत्। यद्येवं, नास्ति मे भृत्येनार्थः, अर्धवेतनार्थं किमर्थं मया स्वदेशं स्वगृहं च परित्यज्यात्र विदेशे स्थातव्यं भवेत्? स्वयमेव सर्वं करिष्यामि यथाऽत्रत्याः सर्वे कुर्वन्तीति मनोऽहमभान्त्सि। प्रथममभ्यासो नासीत्। कालेन सर्वमपि सामान्यं संवृत्तम्। न मया गृहकार्य आयासः कश्चनान्वभूयत। कांश्चित्क्षणान् व्यासङ्गान्तरमिति सन्तोष एव प्रादुरासीत्।

## १३६

ट्यूबिंगननगरे मम च धर्मपत्न्याश्च सम्पर्कः पाकिस्तानदेशीयाभ्यां द्वाभ्यां कन्यकाभ्यां जातः। ते तत्र विशेषाध्ययनार्थमागते आस्ताम्। एकस्या नामासीत् कौसर जाबीन इति द्वितीयायाश्च ताहिरा हुस्सैन इति। देशान्तरे हिन्दुस्तान–पाकिस्तानभेदो न प्रस्फुरति। समानो वेषः, समाना भाषा, समाना जीवनशैली – सर्वं समानमेव। तेनोभयदेशवास्तव्ययोर्देशान्तरं प्राप्तयोरात्मीयभावः कश्चन स्वत एवोन्मिषति। मद्धर्मपत्नी मम ट्यूबिंगनप्रवासकालेऽन्तराऽन्तरा भारतमागच्छति स्मात्रत्यं महाविद्यालयीयकार्यं तया निर्वोढव्यमासीदिति। यदा भारताद् ट्यूबिंगनमागच्छति

२४७ टमाटर

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

स्म तदा पुत्रीवत्ते पश्यन्ती कदाचित् सलवार–कमीज इति वस्त्रयुगलं वा भारतीयं किञ्चित्खाद्यं वा तयोः कृत आनयति स्म वात्सल्यप्रेरिता। एकदा तयोः कन्यकयोरेकया भोजनार्थमावां निमन्त्रितौ। तया करपट्टिकाः[२४८] साधनीया आसन् परं तस्यां वेल्लनं[२४६] नासीन्न चापि तापकः[२५०]। सा काचकूप्या[२५१] वेल्लनकार्यं करोति स्म स्थण्डिलेन च दारुफलक[२५२]कार्यम्। स्थालकेन परावर्तितेन तापक (लोहफलक) कार्यम्। तद् दृष्ट्वा सुतरामुद्विग्ना मद्धर्मपत्नी प्रतिज्ञामारूढा यदागामिनि प्रसंगे यदाऽहं भारतादागमिष्यामि तदा स्वेन सह प्रत्येकं कन्यकायाः कृत एतद्वस्तुजातमानेष्यमीति।

तयोः कन्यकयोः स्नेहः कालेनातिभूमिमारूढः। एकदा मद्धर्मपत्न्या दन्तकष्टं प्रादुर्भूतम्। सा दन्तचिकित्सकमेकमुपगता। तेनैककालावच्छेदेन द्वौ दन्तौ निष्कासितौ। तेन धर्मपत्न्या महत्कष्टमनुभूतम्। प्रभूतो रक्तस्रावोऽपि जातः। यदा कौसर जाबीन एतदजानात्तदा चिकित्सकमुपेत्य शर्मण्यभाषया – सा नाना वर्षाणि शर्मण्यदेशे कृतवसतिरिति शर्मण्यभाषया सम्यग् वक्तुं क्षमा – परुषाक्षरैस्तं निर्भर्त्सयामास। किमिति रक्षोवत् प्रवृत्तं त्वया चिकित्सकेनापि सतेति गाढं सा तमधिचिक्षेप। यद्यहमधिकृतांस्तत्कृत्यपाशं[२५३] सूचयेयं तर्हि का गतिस्ते भवेदिति च प्राह। व्रीडावनम्रशिरसा तेन तद्वचः श्रुतम्। निजाकृत्यकरणात्क्षमां[२५४] च स तां ययाचे। कौसर इत्यनया मद्धर्मपत्न्याः कष्टं स्वकीयं कष्टमित्यनुभवत्या प्रक्रान्तमिति तस्यास्तस्यां स्नेहातिशयमभिव्यनक्ति।

एकं रुचिरं ट्यूबिंगनकालिकं प्रसंगमत्र समुपस्थापयितुमिच्छामि। भारतीयविद्यासंस्थाने हिन्दीभाषाऽपि मयाऽध्यापिता। मत्कक्षायामेका छात्रा हिन्दीभाषामधीते स्म। एकस्मिन् दिने मया सा पृष्टा हिन्दीभाषाशिक्षणे कस्तस्याः प्रयोजको हेतुरिति। शिरोऽवनमय्य ह्रीमूढया तयोक्तं केनापि पाकिस्तानीयेन

---

२४८ रोटी

२४६ बेलन

२५० तवा

२५१ बोतल

२५२ चकला

२५४ याप्ये पाशप् (५.३.४७) इत्यनेन याप्येऽर्थे पाशप्प्रत्ययः। याप्यः = निन्द्यः। कृत्यपाशं निन्द्यं कृत्यमित्यर्थः।

२५५ अकथितं च (१.४.५१) इत्यनेन द्विकर्मकता। दुह्याच ....... कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

यूना जातस्तस्याः प्रणयसम्बन्धः। स परिणयसम्बन्धेनापि परिणमेत्। तदनन्तरं तया पाकिस्तानदेशो गमिकर्मीकर्तव्यः स्यात्तत्र च वस्तव्यं स्यात्। तदर्थं तद्देशभाषाज्ञानमित एवार्जयेयमिति मे तत्र प्रवृत्तिः। अबोधोपहता सरलहृदया सा नावेद् यत्पाकिस्तानभाषा उर्दूरिति न तु हिन्दी। यद्यप्युभयोरपि भाषयोः संरचना समानैव तथाऽपि शब्दावल्यां भेदः। उर्दूः पारसीकशब्दबहुलाऽऽ-रब्यशब्दबहुला च। हिन्दीभाषा संस्कृतशब्दबहुला। अयमेवोभयोर्भेदः। यो हिन्दीभाषां जानाति स पाकिस्तानीयैः संव्यवहर्तुं शक्नोति। य उर्दूं जानाति स भारतीयैः। कदाचित् शब्दावल्यां काठिन्यं भवेत्।

## १३७

मम ट्यूबिंगनावस्थितिकाले तत्रैकमन्तरराष्ट्रियं सम्मेलनं जातम्। यत्र पाकिस्तानशिक्षामन्त्रिणोऽपि भागं ग्रहीतुमागता आसन्। अहं ट्यूबिंगन एवासमित्यहमपि तत्र सम्मिलितः। एकस्मिन् दिने केनचिच्छर्मण्यदेशीयेन महाजनेन सर्वेऽपि सम्मेलनप्रतिनिधयः स्वगृहे भोजनार्थं निमन्त्रिताः। तत्राभवन्मे पाकिस्तानशिक्षामन्त्रिभिः समागमः। ते लाहौरपुरत आसन्। मम तदस्ति जन्मनगरम्। परिचयानन्तरमुभावप्यावां पञ्चनदभाषया वक्तुं प्रारब्धौ। पार्श्वस्थः शर्मण्यदेशीयो महाजनः—येन सर्वेऽपि वयं निमन्त्रिता आस्म – आवां कयाप्यपरिचितया भाषया सम्भाषमाणौ दृष्ट्वाऽप्राक्षीत् – कया भाषया भवन्तौ सम्भाषेते इति। मम प्रतिवचनात्प्रागेव पाकिस्थानशिक्षामन्त्रिभिरुक्तम्[२५५] इमे भारतीया, अहं पुनः पाकिस्तानीयः, परमुभावप्यावां समानामेव भाषां भाषावह इति। एतन्नाम साम्यं परस्परविरोधिनोरपि देशयोः।

संस्कृतसम्भाषणं मया शिक्षिता भारतीयविद्यासंस्थानसम्बद्धाः सर्वेऽपि शर्मण्यदेशीया इति पूर्वमुक्तमेव। न केवलमिदमेव संस्कृतगद्यपद्यबन्धेऽपि प्रवृत्तिस्तेषां समुन्मिषिता। मम कार्यकालसमाप्तिकाले यदा मया भारतं प्रत्यागन्तव्यमासीत्तदा सौप्रस्थानिकोत्सवः समायोजितोऽभूत्पायरस्य गृहे। तदा स्वकीया उद्गारा संस्थाननिदेशकेन श्तीतनक्रोनेन संस्कृतपद्यैः प्रकटिताः। तानि पद्यान्यासन् –

भारतराजधान्यां यो व्याकरणविदां वरः।
पारगः सर्वविद्यानां कवीनां मुकुटे स्थितः।।

---

२५५ He is from India, I am from Pakistan but we speak the same language.


CC-0. In Public Domain. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

शशास सत्यमावृत्य शास्त्री शास्त्रविशारदः।
शिष्याञ्शिक्षाशुश्रूषार्थाञ्शर्मण्यदेशमागतः।।
वर्षान्ते तु सपत्नीकस्त्यूबिंगन्नगराच्छुभात्।
स्वदेशं गन्तुकामोऽद्य पुनः प्रयातुमुद्यतः।।
स्मृतिः सुरमणीया स्यात्स्वकर्मसु सुहृत्सु च।
दूरे वसन्नदूरेऽस्तु हृदि मैत्रीं प्रवर्तयन्।।

सौप्रस्थानिकावसरे भाषमाणेन मया तत्रत्या दक्षिणां याचिताः संस्कृतेन सम्भाषन्तां भवन्त इति। संस्कृतेन च पत्रादि प्रेषयन्तु, गद्यपद्यबन्धांश्च रचयन्त्विति। तत्तैः सहर्षमूरीकृतम्। तस्यैव परिणामोऽयं यत्कालान्तरे श्तीतनक्रोनमहाभागेन पायरेण च पत्राणि मयि संस्कृतेन प्रेषितानि।

श्तीतनक्रोनमहाभागेन प्रेषिते पत्र आङ्ग्लभाषोपनिबद्धे स्वरचितं पद्यमेकमासीद्विसृष्टम्। तदित्थमस्ति–

जीवन्ति मे हृदये ये
तव मित्र! प्रीत्या चित्तरागाः।
ते त्वां सुप्रह्लादयितुं
शीघ्रं त्वन्मनोऽधिगच्छेयुः।।

यदाऽहं पुरीक्षेत्रे कुलपतिरासं तदा पायरः स्वधर्मपत्न्या मार्गेरीटाख्यया (मार्गेरितया इति संस्कृतेन) सह कनिचिद् दिनानि मयि स्थितः। ततः स्वदेशं (शर्मण्यदेशं) प्राप्य यत्पत्रं तेन मयि प्रेषितं तदधस्तादुद्धरामि–

महाकवयः सत्यव्रतपण्डिताः ! सस्नेहमभिवादनानि

अतिदीर्घकालं तत्रभवद्भ्यः पत्रं न प्रैषयम्। तत्रभवन्तो मम दुश्चरितं मर्षयन्त्विति मम प्रार्थना। तत्रभवतां पत्रमतोषयदेवावाम्।

पुर्या अपगम्यावां सुखसुप्तौ शान्तिनिकेतनमागच्छाव। तत्र प्रोफेसर बनर्जी महाभागा रेल्यानस्थानमागम्यावां विश्वविद्यालयस्यातिथिभवनं नीत्वा विश्वविद्यालये रवीन्द्रनाथठाकुरमहाभागानां निवेशनान्यदर्शयन्। आवां शान्तिनिकेतने तिष्ठन्ता– वतुष्याव। शान्तिनिकेतनेऽहोरात्रं स्थित्वा काल्कटमहानगरं प्रातिष्ठावहि। रेल्यानविलम्बेन काल्कटमहानगरं मध्यनिशायामेव प्राप्द्यावहि। तत्र प्रोफेसर– मूखर्जीमहाभागानामगारे व्यश्राम्याव। शनिवासरे प्रोफेसरमूखर्जीमहाभागा नौ भारतीयकौतुकागारे प्राचीना मूर्तीश्चित्राणि चादर्शयन्। तन्नगरेऽपि तिष्ठन्तौ तुतुषिव। रविवार आवाभ्यां ट्यूबिङ्गननगरं प्रति गन्तव्यमासीत्। यात्रा सुखं निष्पन्ना। ट्यूबिङ्गननगरे प्रोफेसर स्तीतनक्रन्महाभागानपश्यम्। द्विदिनानन्तरं

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

प्रोफेसर स्तीतन्क्रन्महाभागा अमेरिकादेशं प्रति प्रास्थिषत। तत्रभवतां सपत्नीकानां कुशलवृत्तमस्त्विति सर्वेषामाशा। ओफ़्तरदिङ्गनग्रामं प्रत्यागत्य सप्ताहं रोगपीडित आसम्। इदानीं मया बहूनि कृत्यानि कर्तव्यानि। मार्गेरितामहाभागयाऽद्यप्रभृति सप्ताहं पञ्चषष्ट्याश्छात्राणां छात्रीणां च परीक्षा कर्तव्या। पूर्वमेव त्रिंशदधिकं शतं पत्राणि सा पर्यैक्षत।

आवां तत्रभवतां तत्रभवत्पत्न्याश्च स्मरावो बहुधा। बेल्जियम–विश्वविद्यालयगतान् तत्रभवतो द्रक्ष्याव इत्याशास्वहे। तत्रभवतां सपत्नीकानां सर्वं कुशलमेवास्त्वित्यर्थयावहे।

तत्रभवतां पुत्रौ,
आलोविस्मार्गेरिते।

मम पद्मभूषणोपाधिप्राप्तिकाले मच्छिष्येण टामस ओबर्लीस इत्यनेन यः सम्प्रति फ्राइबुर्गविश्वविद्यालये संस्कृतप्राध्यापकः संस्कृतपद्यबद्धं पत्रं प्रेषितम्। तदधस्तादुद्धरामि–

ज्ञानपीठप्रदीपेन दीपितं भुवनं त्वया।
गुरो! साम्प्रतमास्से त्वं पद्मभूषणभूषितः।।१।।
पद्मेन भूषितोऽसि त्वं पद्मं वा भूषितं त्वया।
इति मे नास्ति सन्देहः पद्मं त्वं समभूषयः।।२।।
स्मृतिपथे दिवसा मम यान्ति ते
सुखकरा गमितास्तव येऽन्तिके।
त्वमसि शास्त्रचणो निपुणेक्षणः
सकलशिष्यगणप्रियतां गतः।।३।।
विविधशास्त्रचयं समबोधयो–
ऽनतिबुधं निजशिष्यचयं मुदा।
अपि दुरूहतमं विशदं गुरो!
श्रमगतो विषयं त्वमचीकरः।।४।।
स्मितमुखालपनेन सदा जनान्
परिचयं न गतानपि मोहयन्।
प्रकटयन् निजसात्त्विकवृत्तितां
त्वमभवो भुवि सत्त्वभृतां वरः।।५।।
स्मरामस्ते गुणान्नित्यं तव शिष्या वयं समे।
चर्चयामो मुदा तांश्च परस्परमुपागताः।।६।।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तव शिष्या इति वयं धन्यतां कलयामहे।
भाग्यादेव हि लभ्यन्ते त्वादृशा गुरवो भुवि।।७।।
भारते भारतोऽसि त्वं वयं शर्मण्यवासिनः।
तव शर्म सदा देवं प्रभुं सम्प्रार्थयामहे।।८।।
सदा स्वस्थस्सदा तुष्टस्सदा पुष्टश्च कोविद!।
सुखेन सकुटुम्बस्त्वं शतं जीव समा गुरो!।।९।।
इतोऽपि भूयसो लब्ध्वा सम्मानाँल्लोकहर्षदान्।
यशो वितन्वँल्लोकेषु जीवितं व्यतियापय।।१०।।

पायरस्य संस्कृतभाषणे तथा प्रवाहो यथा भारतीया अपि विस्मयं गच्छेयुः। ट्यूबिंगनात् प्रत्यागमनानन्तरं यदा कदापि कस्मिंश्चिद्योरुपीयदेशेऽमेरिकादिदेशे वा मया गन्तव्यमभूत् फ्रैंकफुर्तव्योमपत्तने च व्योमयानपरिवर्तनकारणात् कञ्चित्कालं प्रतीक्षितव्यमभूत्तदा दूरभाषेण कृते सम्पर्के आवयोः सम्भाषणं संस्कृतेनैव प्रावर्तत।

## १३८

शर्मण्यदेशीयाः पुस्तकपण्डिताः[२५६]। यतः कुतोऽपि पुस्तकसंग्रहे तेषां प्रवृत्तिः। एकदा विश्वविद्यालयपुस्तकालयाध्यक्षम्— असौ भारतीयविद्याविशेषज्ञोऽपि— बाउमानइत्याख्यमहमुपेतः। चर्चाप्रसंगे तेनोक्तम् — महान् हि पुस्तकसंग्रहोऽस्मासु। भवतामपि सर्वाणि पुस्तकान्यस्मासु स्युरेव। कुतूहलवशान्मयोक्तं पश्यामस्तावत्। तेन कम्प्यूटरयन्त्रं चालितम्। मम तदवधि प्रकाशितेषु पुस्तकेषु सर्वाण्यासन्नृते पुस्तकद्वयात्। कुतो नेति पृष्टः स पर्यप्राक्षीत् — कदैतत्प्रकाशितम्? मयोक्तं मासपञ्चकात्पूर्वमिति। तेनोक्तम् — अत एव नेदमस्मास्वस्ति। न्यूनातिन्यूनं षण्मासा अपेक्ष्यन्तेऽस्माभिरत्र पुस्तकप्राप्तये। प्रथमं पुस्तकप्रेषणाय सन्देशः[२५७] प्रेषणीयो भवति प्रकाशकाय। तदनु मूल्यं प्रेषणीयं भवति धनागारमाध्यमेन शर्मण्यमुद्राणां डालरमुद्रापरिवर्तनेन। तदनु पुस्तकं प्राप्तव्यं भवति जलपोतद्वारा, व्योमयानप्राप्ते— र्बहुव्ययसाध्यत्वात्।

ट्यूबिंगननगरे मम प्रवासोऽतीव सुखद आसीत्। तत्रत्या नैकाः स्मृतयो मन्मनसि चिरं स्थास्यन्ति। ट्यूबिंगनविश्वविद्यालये मम नियुक्तिर्वर्षद्वयार्थमासीत्।

---

२५६ पुस्तकप्रिया इत्यर्थः। शाकपार्थिवादिवत् समासः। शाकप्रियः पार्थिवः शाकपार्थिवः।

२५७ Order इत्याङ्ग्ल्याम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

वर्षमेव व्यतीतं स्याद् यदोत्कलराज्यपालकार्यालयात्सूचना मया प्राप्ता यदहमचिरप्रारब्धे श्रीजगन्नाथसंस्कृतविश्वविद्यालये कुलपतिरूपेण नियुक्त इति। तदर्थं मम सहमतिरपेक्ष्यत इति। कुलपतिपदमिति तत्स्वीकर्तुमहमासमुत्सुकः। एतद्विषये मया शतीतनक्रोनमहोदयेन कृता चर्चा। तस्यासीत्तत्र सुतरामरुचिः। भवन्त एकवर्षमधिकमत्र स्थातुमर्हन्ति। क्व ट्यूबिंगननगरप्रवासः, क्व च पुरीप्रवासः! शतीतनक्रोनस्योत्कलैः सहासीन्नेदीयान् सम्बन्धः। तत्रत्यां स्थितिं स सम्यगवेत् कियद् दारिद्र्यं तत्र कीदृशी च जनानां प्रवृत्तिः। उद्विग्नचेतसा तेनोक्तमासीत् – सत्स्वन्येष्वपि विश्वविद्यालयेषु पुरीविश्वविद्यालय एव[२५८] (भवान् गन्तुमिच्छतीति वाक्यशेषः स्यान्नु)। अहं कदाचिदपि पुरीक्षेत्रं न गत आसम्। न केवलं पुरीक्षेत्रमेव कलिंगानपि नाहं जगाम[२५९] कदाचित्। कुलपतिपदमिति तदध्यास्तुं मे मन इति शतीतनक्रोनमहमभाणिषम्। अत्यन्तमरुचिं बिभ्रता – तदाकृत्या स्पष्टमिदं प्रत्यैयत – तेनोक्तम् – यथा रोचते भवद्भ्यस्तथैव कुर्वन्तु भवन्तः।

ट्यूबिंगननगरात् प्रथमं मया दिल्लीविश्वविद्यालये कार्यं प्रक्रन्तव्यमासीत्। ततोऽवकाशादिप्रक्रियापालनानन्तरं पुरीक्षेत्रं प्रति प्रस्थातव्यमासीत्। अतर्कितोपनता–मिमां पुरीक्षेत्रनियुक्तिमहं श्रीजगन्नाथप्रभुप्रसादरूपां मत्वा पितृचरणैरनुमतः स्वीकृतिसूचकं पत्रं प्रैरिरम्। अत्रान्तरे किञ्चिदन्यदप्य तर्कितमघटिष्ट तदप्यत्र विवर्णयिषामि।

## १३६

आसन्मे प्रियसुहृदो डा. बोम्मकण्टिरामलिंगशास्त्रिनामधेया ओस्मानियाविश्वविद्यालये आन्ध्रप्रदेशीये हैदराबादनगरे विक्रान्तभारतमित्यादिनानारूपकप्रणेतारः। नानाकार्य–वशात्तैर्दिल्लीमागन्तव्यं भवति स्म, कदाचिद्विश्वविद्यालयानुदानायोगकार्यवशात्, कदाचित् केन्द्रियशिक्षामन्त्रालय (तदानीमिदमेव नामासीन्मानव– संसाधनविकास–मन्त्रालय इति नाम तु कालान्तरेऽस्मै प्रदत्तं राजीवगान्धिना तदानीन्तन–प्रधानमन्त्रिणा) कार्यवशात्, कदाचिच्च कार्यान्तरवशात्। यदैव त आगच्छन्ति स्म तदा मया संगन्तुं मद्गृहानवश्यं सनाथीकुर्वन्ति स्म। यदा कस्या अपि समितेः – यदधिवेशनार्थं त आहूता अभूवन् – कालः पूर्वाह्णे निर्धारितो भवति

---

२५८ श्रीजगन्नाथसंस्कृतविश्वविद्यालयः।

२५९ विभाषा साकाङ्क्षे (३.२.११४) इति सूत्रस्थेन अत्यन्तापह्नवे लिड् वक्तव्य इति वार्तिकेन लिट्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

स्म तदा यथाकालमुपस्थातुं तत्पूर्वदिन एवागच्छन्ति स्म। तदाऽपराह्णे वा गोधूलिवेलायां वा तेषु कालो भवति स्मेति ते मामुपसीदन्ति स्म। आवां तदा स्वैरालापसुखमन्वभुङ्क्वहि। अस्मिन्नेव क्रमे त एकस्मिन् दिने मामुपसन्नाः। किंहेतुकं दिल्ल्यां भवदागमनमिति पृष्टास्तेऽवोचन् — परेद्यवि प्राह्णे विश्वविद्यालया-नुदानायोगे समितेरेकस्या आयोजनमस्ति, तदेव मे दिल्ल्यागमने प्रयोजको हेतुः। किंविषयिणी सा समितिरिति पृष्टास्ते प्रण्यगादिषुर्यत्प्रतिवत्सरं विश्वविद्यालया-नुदानायोगेन प्रत्येकं विषये कस्यापि विदुषो राष्ट्रियव्याख्यातृपदे नियुक्तिः क्रियते एकवर्षावधिकं कालं यावत्। तेन विदुषा चत्वारो विश्वविद्यालया गमिकर्मीकर्तव्या भवन्ति व्याख्यानानि च प्रस्तोव्यानि भवन्ति। तेषु चतुर्षु विश्वविद्यालयेषु न्यूनातिन्यूनमेकेन तादृशेन भवितव्यं यो मानितविश्वविद्यालयः स्यात्। विदुषां निर्धारणविषये का पद्धतिरिति पुनः पृष्टास्तेऽवादिषुर्यद्विश्वविद्यालयानुदानायोगः प्रत्येकं विश्वविद्यालयकुलपतिं वा कुलसचिवं वा पत्रं प्रेषयति, अनुरुणद्धि च तत्तद्विषये यस्य यस्याध्यापनं तद्विश्वविद्यालये प्रचलति यो यः प्राध्यापकस्तन्मत उत्कृष्टतमस्तस्य तस्य नाम सूच्यतामिति। तत्सूचनाधारेणायोगः प्रत्येकं विषये प्राप्तानामुत्कृष्टविदुषां नामानि सूचिबद्धानि करोति। तत्सूचिबद्धनामसु कस्य चयनं भवत्विति निर्धारणार्थमायोगेन समितिरेका घटिता। अहं तत्सदस्यत्वे स्थापितः। अयमेव प्रसंगो मम दिल्ल्यागमनस्येति। श्रुत्वैतत् परिहासमुखेन मयोक्तम् — यद्यहमज्ञास्यं भवन्तस्तत्समितेः सदस्या यया विद्वच्चयनं क्रियते तर्ह्यहमपि मदीयं नाम स्वकीयविश्वविद्यालयकुलपतिद्वारा प्राहाययिष्यम्। परिहासविज-ल्पितमित्युभावप्यावामुच्चैः प्रहसितौ।

अपरेद्युरपराह्णे दूरध्वनिघण्टिका निनदिता। अहमस्मि बी. आर. शास्त्री। व्योमपत्तनतो ब्रवीमि। 'भवन्तो राष्ट्रियव्याख्यातृपदे नियुक्ताः'। शब्दावलिरियं मे श्रोत्रशष्कुल्यावस्प्राक्षीत्। कुत इदं जातं मम नामैव तत्र नासीत् — अहमुक्तवान्। तत्परस्ताद् वक्ष्यामि। सम्प्रति मद्विमानं प्रस्थानोन्मुखम्। मया सम्प्रति तत्र प्रवेष्टव्यम् — इति तेऽवोचन्।

## १४०

कतिचिद्दिनानन्तरं ते पुनर्दिल्लीमुपेताः पूर्ववदेव मां द्रष्टुम्। तदा तैर्यदुक्तं तदित्थमासीत् — यदा समितिकार्यं प्रारब्धं तदा विश्वविद्यालयानुदानाध्यक्षा या समित्यध्यक्षपदमप्यध्यास्त मया पृष्टा — महाभागे! किं येषां विदुषां नामानि सूच्यां सन्ति तत एव चयनमस्माभिः कर्तव्यमुत स्वपक्षतोऽपि, सूचिबद्धविद्वन्ना-


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

मतोऽतिरिक्तस्यापि, कस्यचिद् अप्रतिमवैदुषीजुषो विदुषो नाम वयं प्रस्तोतुं शक्नुमः। बाढं तद् भवन्तः प्रस्तोतुं शक्ताः। उत्कृष्टतमानां विदुषां नियुक्तिरत्र पदे भवेदित्यस्माकमभिलाषः। भवन्तः समितिसदस्याः। तादृशानां विदुषां चयने साहाय्यार्थमत्रामन्त्रिताः। यदि भवद्दृष्ट्या कश्चिद्विद्वद्धौरेयः सूचिबद्धनामधेयेभ्यो विद्वद्भ्य उत्कृष्टतरस्तर्हि तन्नाम प्रस्तुवन्तु भवन्तः। तदाऽकालहीनं[२६०] मया भवन्नाम प्रस्तुतम्। नैतादृशः कोऽप्यस्ति साम्प्रतं भारतदेश इति चोक्तम्। मद्वचःपरिसमाप्तेरनन्तरमेव दिल्लीविश्वविद्यालयीया अर्थशास्त्रविशेषज्ञाः प्रो. ख्वाजा अहमदनकवीमहाभागा वक्तुमारब्धवन्तः— विद्वत्तल्लजा इमे। किञ्चित्कालपूर्वमहं बैंकाकनगर आसम्। तत्र यत्र यत्राहं गतस्तत्र तत्र तत्कीर्तिर्मयाऽश्रूयत। तद्वचोऽव्यवहितानन्तरमेव भोपालनगरात्समागतः कश्चन तत्रत्यभाषाशास्त्र–विभागप्राध्यापको वक्तुमारब्धवान् — विलक्षणं सत्यव्रतशास्त्रिणां पाण्डित्यम्। तेषां श्रीरामायणभाषाविमर्शात्मको ग्रन्थो मया निरन्तरपठनीयग्रन्थमध्ये स्थापितः। एतत्सर्वं श्रुत्वाऽनुदानायोगाध्यक्षया श्रीमत्या माधुरीशाहमहाभागयोक्तम् — यद्येवं, तर्हि का विचारणा। नियुक्तिमर्हेषु जनेषु स्थापनीयमेतन्नाम। एवं भवन्तो राष्ट्रियव्याख्यातृपदे चिताः। श्रुत्वैतन्मयोक्तं — सुहृद्वर्या, यद् भवद्भिर्मदर्थे कृतं तन्महत्त्वं धन्यवादप्रदानेन न लघयितुमिच्छामि। भवत्सौहृदय्यं यावज्जीवं स्मरिष्यामि। क्व सन्ति साम्प्रतमस्मिञ्जगति तादृशा ये सौहार्दभावेन प्रेरिता असम्भवमपि सम्भवकोटिं नयेयुः। अद्य यदाऽहं तान् स्मरामि तदाऽस्रैस्तावन्मुहुरुप–चितैर्दृष्टिरालुप्यते मे।

ये चत्वारो विश्वविद्यालया मया गमिकर्मीकर्तव्या आसंस्तेषु भुवनेश्वरस्थ उत्कलविश्वविद्यालयोऽप्यासीत्स चासीच्चतुर्थः। भुवनेश्वरादेव पुरीं गत्वा तत्र कार्यभारमहं गृह्णीयामिति मे बुद्धिरुदिता। तथैव च मया कृतम्। दिल्लीतो भुवनेश्वरं यावद् व्योमयानेनाहं गतः। व्योमपत्तने मां प्रत्युद्गन्तुमुपस्थिता आसंस्तदानीन्तना वित्ताधिकारिणः कार्यवाहककुलसचिवाश्च श्रीतारादत्तपण्डा–महाभागाः केन्द्रियसदाशिवसंस्कृतविद्यापीठप्राचार्या डा. हरिहरझामहाभागाश्च। ते वाणीविहारं — उत्कलविश्वविद्यालयपरिसरस्यैतदेव नाम — मां प्रापय्य[२६१] मामामन्त्र्य च गताः। अहं दिनद्वयं तत्र स्थित्वा व्याख्यानादिकं च प्रवर्त्य विश्वविद्यालयप्राध्यापकैः सादरं सस्नेहं च विसृष्टो नीलाचलनिवासस्य नित्यस्य परमात्मनः श्रीजगन्नाथदेवस्य पुरीं पुरीं प्रति प्रास्थिषि।

---

२६० मालविकाग्निमित्रपञ्चमाङ्कगत 'तदिदानीमकालहीनं विगतरोषचेतसा भवता... आगन्तव्यमि'तिवत्प्रयोगः।

२६१ ल्यपि लघुपूर्वात् (६.४.५६) इत्यनेन णेरयादेशः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

## १४१

अद्य त्रयस्त्रिंशद्वर्षाणि श्रीजगन्नाथसंस्कृतविश्वविद्यालयस्य स्थापितस्य। १९८१ वर्षे जुलाईमासस्य सप्तमे दिवसेऽस्य स्थापना जाता। तदानीम् उत्कलराज्यस्य मुख्यमन्त्रिण आसन् सुप्रथितयशसः स्वनामधन्याः श्रीजानकीवल्लभपट्टनायक–महाभागाः। सुरभारत्यां बद्धश्रद्धास्ते तत्प्रचाराय प्रसाराय चासन् बद्धपरिकराः। न केवलं संस्कृतेऽनुराग एवासीत्तेषामपितु तत्राऽनितरसाधारणोऽधिकारोऽपि। संस्कृतेन धाराप्रवाहरूपेण वक्तुं ते क्षमाः। सम्पूर्णेऽपि देशे चतुर्विंशतिराज्येषु त एवासंस्तादृशा मुख्यमन्त्रिणो ये संस्कृतभाषणेऽभूवन् क्षमाः। तेषां मनसि स्वकीये राज्ये संस्कृतविश्वविद्यालयस्थापनासंकल्पः समुदितः। तं संकल्पं मूर्ततां नेतुन् उत्कलविधानसभातस्तैर्विश्वविद्यालयस्थापनाविधेयकं स्वीकारितम्। प्रथमकुल–पतयश्च तत्र नियुक्ता उत्कलविश्वविद्यालयप्राक्तनसंस्कृतविभागाध्यक्षास्ततश्च सेवानिवृत्ता बौद्धविद्याविशारदा वर्षीयांसो डा. प्रह्लादप्रधानमहाभागाः। अस्वास्थ्यवशाद् भुवनेश्वरादेव ते श्रीजगन्नाथसंस्कृतविश्वविद्यालयकार्यं यथाकञ्चिन्निरवक्षत। कुलपतिपदनियुक्तिषण्मासाभ्यन्तर एव ते दिवं गताः। तदानीं श्रीत्रिलोचनमिश्रनामानो ये कुलसचिवा आसंस्तेऽस्थायिरूपेण प्रथमं षण्मासकालावधिं तत्परिसमाप्तौ च पुनर्मासत्रयात्मकावधिकालं कार्यवाहक–कुलपतिरूपेण नियुक्ताः। आङ्ग्लविषये स्नातकोत्तरोपाधिधारिणस्ते कुलसचिवपद–नियुक्तिपूर्वम् उत्कलशासने गृहविभागे उपसचिवा आसन्। ततः सेवानिवृत्तास्त उत्कलशासनेन श्रीजगन्नाथसंस्कृतविश्वविद्यालयकुलसचिवपदे नियुक्ताः। प्रधानमहोदयानां निधनानन्तरमस्थायिरूपेण कुलपतिपदे नियुक्तास्ते स्थायिरूपेण तत्पदे नियुक्तिमचकमन्त। परं शासनेन न तथा कृतम्। कुलपतिपदे मम नियुक्तिः कृता। एतेन तेषां मनोभंगः स्वाभाविक एव। अहं कुलपतिर्जात इति न मेऽत्रापराधः। सोऽयं निर्णयः शासनस्य न तु मम। अस्थायिरूपेण कुलपतिपदाध्यारोहणानन्तरं विश्वविद्यालयसम्बद्धं बहु कार्यं तैः कृतम्। विश्वविद्यालयीयं संविधानम् एक्ट्स तथा स्टेचुएट्स इत्यादि सर्वं तैर्निर्मितम्। केषुचिद्विभागेषु नियुक्तयोऽपि तैः कृताः। ये नियुक्तास्ते शारदा एव। तत्तच्छास्त्रविशारदाः केचिद्वर्षीयांसोऽपि ये तत्तद्विद्यालयतः सेवानिवृत्ता आसंस्तेऽतिथिप्राध्यापकरूपेण नियुक्ताः। तेष्वासन् साहित्यशास्त्रपारंगताः पुण्डरीकाक्षमिश्रमहाभागा, धर्मशास्त्रे कृतभूरिपरिश्रमाः कुलमणिमिश्रमहाभागाः, वैयाकरणधुरन्धरा वनमालिमिश्रमहाभागा, वेदान्तपारावारीणा वैद्यनाथमिश्रमहाभागाः।

विश्वविद्यालयस्य स्वकीया भूमिरपि तदा नासीत्। परिसरस्य तु का कथा। स्नातकोत्तरविभागो मध्येनगरं भाटकेनावक्रीते कस्मिंश्चिज्जीर्णशीर्णे

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

नानाकक्षके गृहे प्रचलति स्म। कुमाराणां कुमारिकाणां चच्छात्राणां कृते भाटकेनावक्रीते गृहद्वये वासव्यवस्थाऽऽसीत्। कुलपतेः कृते साऽपि नासीत्। त्रिलोचनमिश्रमहाभागा मध्येनगरं कुत्रापि वेश्मन्यासन् कृतवसतयः। तद्वेश्म तेषां निजमासीद् भाटकेनावक्रीतं वेति न सम्यक् स्मरामि। मत्कृते वासगृहं नासीदिति कञ्चित्कालं मयावासो राज्यपालावासातिथिगृहे कल्पितः। समुद्रं निकषा स्थितं तदतिरमणीयम्। समुद्रवीचितरंगक्रीडादर्शनं ततो वस्तुतो नेत्ररसायनमेव। भोजनरन्धनं मत्कक्ष एव प्रावर्तत। कस्मिंश्चित्स्थण्डिले गैसचुल्लीं स्थापयित्वा भोजनं साध्यते स्म। यद्यपि मुख्यो राज्यपालावासो भुवनेश्वर एव, सा तु राजधानी, किंचन स्वल्पस्वरूपं वासगृहं तत्कृते पुर्यामपि कल्पितम्। पुर्यागमनकाले राज्यपालमहाभागास्तत्र वसतिं कल्पयेरन्नवकाशदिनानि यापयितुमिति। तत्स्थेऽतिथिगृहे वासो ममाऽस्थायिरूपेणेति मयाऽन्यत्र क्वचित् वासः कल्पनीयोऽभूत्। तदन्वेषणप्रवृत्तेन मया 'घोड़ा बाज़ार' इत्याख्ये स्थाने द्विभूमिकं नवनिर्मितं किञ्चिद् गृहं दृष्टं तत्रैव च मयाऽवासः कल्पनीय इति संकल्पितम्। परन्तु वासयोग्यं तत्र किमपि नासीत् न शय्याः, नासन्द्यो, न पटलानि। शून्यमेवासीत्तद्वासगृहम्। केवलं छदिरेवासीत्कक्षेषु तथा चासन् भित्तय एव। आवश्यकं वस्तुजातं तद्गृहं वासयोग्यं विधातुं क्रेतव्यमासीत्, तच्च न पुर्यामासीत् सुलभं न च भुवनेश्वरे। तदर्थं कटकनगरे गन्तव्यमासीत्। आसीत्तदानीं वर्षाकालः। वर्षति देवे कटकनगरस्थैः पिच्छिलैः पथिभिः सञ्चरमाणः[२६२] तन्नगरस्थविपणित आवश्यकं वस्तुजातं क्रीत्वा तद्गृहेऽतिष्ठिपम्। महानसे पात्राण्यपि नासंस्तान्यपि क्रीतानि, गैसचुल्लिकायाश्च सिलिण्डरस्य चापि व्यवस्था कृता। एवं तद्गृहं वासयोग्यं कृतम्। एतत्प्रक्रियायां महत्कष्टं मयाऽनुभूतम्, यस्य स्मृतिरद्यापि मे हृदयं मथ्नाति। न गृहसंविधायां मे कश्चन सहायोऽभूत्। केवलं वित्ताधिकारी तारादत्तपण्डा एव मया समं कटकनगरं प्रति गतागते[२६३] अकरोत्।

## १४२

त्रिलोचनमिश्रमहाभागाः कार्यवाहककुलपतिरूपेण नव मासान् कार्यं कृतवन्तः स्थायिरूपेण चात्मानं कुलपतिपदे द्रष्टुमभीप्सव इति मन्नियुक्तिं ते नाभिनन्देयुर्मत्प्रतीपं वाऽऽचरेयुरित्याशंकमानेन मया तदानुकूल्यं साधयितुं चिन्तितम्।

---

२६२ समस्तृतीयायुक्तात् (१.३.५४) इत्यनेनात्मनेपदम्।

२६३ ईदूदेद् द्विवचनम् प्रगृह्यम् (१.१.११) इत्यनेन प्रगृह्यसञ्ज्ञायां प्लुतप्रगृह्या अचि नित्यम् (६.१.१२५) इत्यनेन प्रकृतिभावे सन्ध्यभावः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

कुलपतिपदकार्यभारग्रहणार्थं भुवनेश्वरात् पुरीं प्रतिष्ठमानेन मया जगन्नाथमन्दिर–दर्शनात् पूर्वं ते द्रष्टव्या इति मनसि कृतम्। वित्ताधिकारी कार्यवाहककुलसचिवश्च तारादत्तपण्डा भुवनेश्वरात्पुरीतो यात्राकाले मया सममेवाऽऽसीत्। तस्मिन्नपि मया नाभिप्रायोऽयमाविष्कृतः। पुरी–पुरी प्रवेशकाले स मयोक्तः पूर्वं श्रीत्रिलोचनमिश्रगृहं गन्तुमिच्छामि। तत्र भवान् मां नयत्विति। तैः सह कञ्चित् कालमालापं प्रवर्त्य वासस्थलीं प्रति गत्वा तत्र च सामान्यं[२६४] स्थापयित्वा देवदर्शनार्थं गमिष्यामीति। मम वचनानुसारेण स मां तद्गृहं प्रापयत्। अकस्मात्तद्गृहानुपेतं मां दृष्ट्वा ते सस्नेहं सूनृतया वाचा मामभ्यनन्दन्। तदेत्थमावयोर्भाषणमाविरासीत् –

अहम् – अहमस्मि सत्यव्रतशास्त्री।

मिश्राः – जानामि। अत्रभवन्तः कुलपतिपदे नियुक्ताः। अभिनन्दनानि भूयांसि।

अहम् – भवन्तो वर्षीयांसः। अहमत्रभवत्सु प्रणामान् निवेदयामि। अहं नात्रत्यः। बाह्यप्रदेशादहमागतः। नात्रत्यं किमपि वेद। पदे पदेऽत्रभवतां साहाय्यं मयाऽपेक्ष्यते।

मिश्राः – साहाय्यं सदैवोपलब्धं भविष्यति।

अहम् – औपचारिकरूपेणापि साहाय्यमुपलब्धं भवेदिति मेऽभिलाषः। समकुलपतिपदं विश्वविद्यालयेऽस्ति न वेति नाहं वेद। तत्कल्पयितुं शक्यते न वेत्यपि न। तदर्थमहमधिकृतान् प्रेरयिष्यामि। यदि तत्र साफल्यं नाप्नोमि तर्हि परामर्शदातृरूपेण विश्वविद्यालयेन भवत्सम्बन्धस्थापने प्रयत्नं विधास्यामि।

मिश्राः – नाहं किमपि पदं वाञ्छामि। न मेऽस्ति तत्र रुचिः। बहुषु पदेषु मया कार्यं कृतम्। प्रथममासमहमाङ्ग्लभाषाप्राध्यापकः। तदनु शिक्षाविभाग उपकुलसचिवो जातः। तदनु श्रीजगन्नाथसंस्कृतविश्वविद्यालये कुलसचिवरूपेण नियुक्तः। नाना पदानि मयाऽधिष्ठितानि। नास्ति मे मनसि सम्प्रति पदलोलुपता। अवाप्तं मयाऽवाप्तव्यम्। आप्तकामोऽस्मि। सम्प्रत्यायुःशेषं सुखेनात्मरतिर्भूत्वा यापयितुमिच्छामि। अत्रभवतामत्र कालः सुखेन यायादिति कामये।

अहम् – यद्येष एव भवतां निर्णयस्तर्हि किमहं ब्रूयाम्। अत्रभवन्तो वर्षीयांसः। ज्ञानवृद्धा वयोवृद्धाश्च। वस्तुतस्तु पदमिदं भवद्भिरेवाधिष्ठातव्यमासीत्। परमधिकृतैरहं नियुक्तः। अत्र न मे स्वेच्छाचारः। यथा नियुक्तोऽस्मि तथा करोमि। न मामन्यथा पश्येयुर्भवन्तः – परदेश्यः कश्चन भवत्तः पदमाच्छिद्यात्मानं तत्र प्रतिष्ठापयितुमुद्युक्त इति।

मिश्राः – सर्वमप्यहं सम्यग्वेद।

---

२६४ 'सामान' इति हिन्दीभाषायाम्। संस्कृतशब्दात् सामान्यादेव तदुद्भवो भवेन्नामेति मनसिकृत्य तच्छब्दस्यात्र प्रयोगः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अहम् – यद्यपि नातः परं विश्वविद्यालयेन सम्बन्धो भवतामभीप्सितस्तथापि यावन्तं कालमहमत्र स्थातास्मि तावन्तं कालं भवतां मार्गनिर्देशनं वाञ्छामि। कनीयोभ्रातृवन्मां पश्यन्तु भवन्तः।

मिश्राः – तथैव भविष्यति। इतः परं भुवनेश्वरे मया वासः कल्पयिष्यते। तत्र गमनागमनकाले यदा कदाऽपि भवन्तो मां द्रष्टुमर्हन्ति। सदैव भवद्भ्यः स्वागतं ममावसथे। मत्साहाय्यं सर्वेष्वपि विषयेष्वहमत्रभवतः प्रतिशृणोमि।

सोऽयं प्रतिश्रवो मिश्रमहाभागैर्मम सम्पूर्णपुर्यवस्थितिकालं प्रतिपालितः। नैकदा सत्परामर्शेणाहमुपकृतः। तेषामहमनेकशः स्मरामि तत्सौजन्यभराभिभूतः।

श्रीत्रिलोचनमिश्रसंगमानन्तरं वित्ताधिकारिभिः कार्यवाहककुलसचिवैश्च श्रीतारादत्तपण्डामहाभागैः पुरीस्थराज्यपालभवनान्तर्गतमेकमतिथिगृहमहं प्रापितः। तत्र ममावासव्यवस्था कारिताऽभूत्तैः। तत्र कांश्चित् क्षणान् विश्रम्य किञ्चिद् भुक्त्वा च पीत्वा च भगवद्दर्शनार्थं श्रीजगन्नाथमन्दिरं प्रति प्रस्थितः। तद्दर्शनेनाप्यायितान्तःकरणो लोकान्तरादागतमिवात्मानं मन्यमानश्चिरसञ्चिताभिलाषपरिपूर्त्या कृतकृत्यम्मन्यो नूत्नपदसाफल्यार्थं भगवदाशिषोऽभिलाषुकः प्रणतिततीस्तच्चरणयोः समर्प्य राज्यपालगृहातिथिगृहं प्रत्यावृत्तः।

## १४३

विश्वविद्यालयस्य स्वकीयः परिसरो भवत्वित्यासीन्मम पुरतः प्रथमः कल्पः। तदर्थं भूमिरधिग्रहीतव्याऽऽसीत्। आसंस्तत्र कृषकाणां क्षेत्राणि। तानि समुचितमूल्येन विश्वविद्यालयं विक्रेतुं ते प्रेरणीया आसन्। केचित्तदर्थमासन् प्रस्तुताः, केचिच्च न। ये नासंस्त आसन् प्रेरणीयाः। तदासीदत्यावश्यकम्। तेषां क्षेत्राणि विक्रयार्थं सहमतानां कृषकाणां क्षेत्रेषु मध्यपतितान्यासन्। यावत्स्वक्षेत्रविक्रयं न ते स्वीकुर्वन्ति तावत्परिसरो न भवति। तदर्थं मयाऽऽस्थितो महाञ्श्रमः। नैकधा ब्लॉक डिवलपमेण्ट ऑफिसर कार्यालयमहं गतस्तत्साहाय्यमेतदर्थं प्रार्थयितुम्। अन्ते मया साफल्यं लब्धम्। शत 'एकड़' परिमिता भूमिर्विश्वविद्यालयेनाधिगृहीता तन्नाम्ना पञ्जीकृता च।

सम्प्रत्यासीद् भवननिर्माणप्रश्नः। शिक्षणभवनं, प्रशासनभवनं, पुस्तकालयभवनं, छात्रावासाः, कुलपतिसदम, अतिथिगृहं, प्रेक्षागृहम्, कैन्टीनाख्यमाहारगृहं – सर्वमपि निर्मातव्यमासीत्। तदर्थमहं शासकीयेन वास्तुकारेण[२६५]भियन्त्रा[२६६] च मुहुर्मुहुः

---

२६५ Architect इत्याङ्ग्ल्याम्।

२६६ Engineer इत्याङ्ग्ल्याम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

सम्पर्कमकरवं चर्चां च प्रावर्तयम्। वास्तुकारेण तत्तद्भवनरेखाचित्राणि समभूवन्नङ्कितानि। तदानीमेव किञ्चिदप्रत्याशितमघटत।

शर्मण्यदेशीयः अलोइस पायरो यस्य चर्चा मयोपरिष्टात्कृता धर्मपत्न्या मार्गरीटा (यां स तन्नाम्नः संस्कृतरूपापादनेन मार्गेरिता इतिरूपेण सम्बोधयति) इत्याख्यया सह भारतयात्राप्रसंगे मन्निमन्त्रणात्पुरीक्षेत्रमुपेतः। स मयि सप्ताहमुषितः। एकस्मिन् दिने तमहं भवनरेखाचित्राण्यदर्शयम्। तद्धर्मपत्न्यपि तस्मिन् काले तेन सहाऽऽसीत्। एकैकं रेखाचित्रं यदाऽहं प्रादर्शयं तदा पुस्तकालयभवनरेखा-चित्रक्रमः प्राप्तः। पुस्तकालयभवनरेखाचित्रविषये मार्गरीटाऽभवत्कौतूहलिनी। तस्याः कौतूहलमासीत् तद्विषये स्वाभाविकम्। सा हि शर्मण्यदेशीयस्टुटगार्टनगरस्थ-शासकीयपुस्तकालयस्याध्यक्षाऽऽसीत्। सा पुस्तकालयरेखाचित्रं मत्तो गृहीत्वा निपुणं तन्निरीक्ष्य प्रतिपंक्ति कियतीनामल्मारिकाणां दक्षिणतो वामतश्च स्थानम्, उभयत्र स्थापितानामन्तरा पाठकानां गतागतयो[२६७]श्च कृते स्थानमित्यादिसर्वमनु-सन्धायाधिकतोऽधिकं पञ्चाशत्सहस्रपुस्तकान्येवात्र स्थापयितुं शक्येरन्नित्यवोचत्। यदि स्थानविषये किञ्चित्कार्पण्यमाश्रीयतेऽपि तर्हि पञ्चसप्ततिसहस्रपुस्तकानां कृत एवात्र स्थानं भवेत्। तद्वचो मां सुतरामुदवेजयत्। कालेन वर्धिष्यत एव विश्वविद्यालयः पुस्तकसंग्रहश्चापि तस्य। अनेन वास्तुकारेण किमिदं कृतम्। दिनत्रयानन्तरं विश्वविद्यालयभवननिर्माणविषय एव मुख्यमन्त्रिभिर्जानकी-वल्लभपट्नायकैरेका समितिरासीदायोजिता यत्र प्रमुखसचिवः, अभियन्तृप्रमुखः, वास्तुकारप्रमुखश्चामन्त्रिता आसन्। तत्र मया यन्मार्गेरितयोक्तमासीत्तत्प्रस्तुतम्। तच्छ्रुत्वा भीषणरोषमाहारयन् मुख्यमन्त्रिणः। वास्तुकारं चोन्मुखीभूयापृच्छन् – अयि भो! किं सत्यमेतत्? नतेन मूर्ध्ना व्रीडावलक्षेण तेनोक्तं – सत्यमेवेति। तदा तत्कृतं चित्रपूगं बलात् तत्पुरतो क्षिप्त्वा परुषाक्षरैस्तमधिक्षिपन्तोऽवोचन् मुख्यमन्त्रिणः – गृहाणैतत्परिष्कुरु चैतदिति। विश्वविद्यालयपुस्तकालयोऽयं न माध्यमिकशाला-पुस्तकालयः। अत्र न्यूनातिन्यूनं पञ्चलक्षपुस्तकानां कृते स्थानेन भवितव्यम्। मां च ते प्राहुः – मत्पक्षतो भूरिशो धन्यवादैः सभाजयन्तु भवन्तः शर्मण्यदेशीयान-स्मदतिथीन् तत्सत्परामर्शाय। पाश्चात्यदेशेषु न किमपि निःशुल्कं भवति, परामर्शोऽपि न। तदर्थं तत्र नानाशतमिता डालरमुद्रा व्ययितव्या भवन्ति। अस्माभिस्तु सौजन्येन परामर्शो निश्शुल्कमेवाधिगतः, न तत्र पणोऽपि व्ययितः।

## १४४

न केवलं भवननिर्माणप्रक्रियाप्रारम्भार्थमेव मया प्रवर्तित आत्माऽपि तु शिक्षाविधावपि। विद्वत्प्राग्रहरैर्विश्वविद्यालयीयानां प्राध्यापकानां छात्राणां च सम्पर्को भवत्विति

---

२६७ गमनागमनयोरित्यर्थः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

धिया मया चिन्तितं यत्प्रतिवर्षं भारतस्य प्रत्येकं दिशातः एको मूर्धन्यो विद्वान् विश्वविद्यालयेनामन्त्रयितव्यः। एको दक्षिणदिग्विभागतः, एक उत्तरदिग्विभागतः, एकः पूर्वदिग्विभागतः, एकश्च पश्चिमदिग्विभागतः। स पञ्चदश दिनानि विश्वविद्यालयमध्युष्यात्रत्यान् प्राध्यापकान् छात्रांश्च सम्बोधयतु, शोधप्रविधिं निर्दिशतु, शंकाश्चात्रत्यानां समादधातु। तस्य गमनागमनव्ययो भोजनावासव्ययश्च विश्वविद्यालयेन वोढव्यौ भवेताम्। प्रतिदिनं मानदेयरूपेण शतं मुद्रास्तस्मै देया भवेयुः। मयाऽयं प्रस्तावोऽधिषत्पुरतः[२६८] स्थापितस्तया च सर्वसम्मत्या स्वीकृतः। तत्परिणामरूपेण मम कुलपतिकाले द्वौ विद्वांसौ पुरीक्षेत्रमागतौ – एक ओस्मानियाविश्वविद्यालयसंस्कृतविभागाध्यक्षो बोम्मकण्टिरामलिङ्गशास्त्री, अपरश्च सम्पूर्णानन्दसंस्कृतविश्वविद्यालये पुराणेतिहासविभागाध्यक्षः पारसनाथद्विवेदी[२६९]।

विश्वविद्यालयान्मदपगमानन्तरं नायं निर्णयो मदुत्तरवर्तिना केनापि कुलपतिना पालितः। मन्ये तस्यैतद्विषये बोध एव न भवेत्। निर्णयोऽयं सञ्चिकायां स्थितः। यावन्नायं निरस्तो भवति तावदस्य वैधताऽस्त्येव। अधिषदो निर्णय इति परिपालनेऽस्य न कोऽपि प्रतिबन्धः।

यथा मया दिल्लीविश्वविद्यालयसंस्कृतविभागेऽनुसन्धानपत्रिका प्रारब्धाऽऽसीत् 'इण्डोलौजिकल स्टडीज़' इति नाम्नी, एवं श्रीजगन्नाथसंस्कृतविश्वविद्यालयेऽपि 'श्रीजगन्नाथज्योतिरिति' नाम्नी। साऽद्यापि प्रकाशमेतीति परो मे परितोषः।

## १४५

मम पुरीक्षेत्रे कार्यकाले उत्कलशासनेन "राज्ये संस्कृतशिक्षणोपस्करणा"[२७०]र्थमेका समितिरासीत्सङ्घटिता। अहं विश्वविद्यालयकुलपतिरिति तदध्यक्षपदे स्थापितः। अन्यौ समितिसदस्यावास्तामुत्कलशासनोच्चशिक्षाधिकारी, उत्कलशासने संस्कृतशिक्षाधीक्षकः सदाशिवप्रहराजश्च। समितिकार्यप्रसंगेन नाना स्थानान्युत्कलेषु मया गमिकर्मीकृतानि, नाना विद्यालयाः परिदृष्टा, नाना विद्वद्भिश्च संगतम्। तत्रत्य एकः प्रसंगो मन्मनो गाढमस्पृशत्।

विद्यालयमेकं परिद्रष्टुं वयं गताः। स वन्यप्रदेश आसीत्। आसीत्प्रावृट्कालः। देवो वर्षति स्म मन्दमन्दम्। वयं वाहनेन विद्यालयं प्राप्ताः। तदानीमेव मया दृष्टं यदेक उत्तमवृद्धः पृष्ठेन[२७१] कुब्जोऽपि यष्टिसाहाय्येन यथा कथञ्चित् क्रामन्

---

२६८ Syndicate इति यदुच्यत आङ्ग्ल्याम्।

२६९ उभावपि सम्प्रति जीवलोके न स्तः।

२७० Reorganization of Sanskrit Education इत्याङ्ग्ल्याम्।

२७१ येनाङ्गविकारः (२.३.२०) इति सूत्रेण तृतीया।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विद्यालयमुपेतः। विद्यालयपूर्वप्राचार्योऽयमिति मां कश्चिदबूबुधत्। तं दृष्ट्वा सहसैव निर्गता मन्मुखाद्गीः – भवन्तोऽद्य दुर्दिनेऽपि समागताः। तच्छ्रुत्वाऽकालहीनं सोऽवोचत् – तदिदनं दुर्दिनं मन्ये यत्र मित्रागमो न हि। तद्वचो मां चमत्कृतमकरोत्। अहो श्लेषमयः पद्यबन्धः। दुर्दिनमिति मेघाच्छन्नदिनकृते प्रयोगः। तथा ह्यमरः – मेघच्छन्नेऽह्नि दुर्दिनम्। सोऽयं पारिभाषिकोऽर्थः। यौगिकोऽर्थोऽस्य, दुष्टं = अशोभनं, मेघाच्छन्नत्वात्, दिनमिति। मया पारिभाषिकोऽर्थः समाश्रितः, तेन पुनः पण्डितेन योगरूढमस्यार्थं गृहीत्वोक्तं तदिदनं दुर्दिनमित्यादि। मित्रागम इत्यत्र श्लेषः। मित्रशब्दः सूर्यार्थकोऽपि सुहृदर्थकोऽपि। तद्दिनं दुर्दिनं यत्र मित्रस्य सूर्यस्यागमो नहि, मेघाच्छन्नत्वात्। तदपि दिनं दुर्दिनं यत्र मित्रस्य मित्राणां वाऽऽगमो नास्ति। वयं मित्राणीति कथमस्माकमागमो दिनं दुर्दिनतां प्रापयेदिति तस्य विदुष आशयः।

विद्यालयपरिदर्शनप्रसंगेन भोगिराइ महाविद्यालयमहं गतः। तत्र नैके छात्रा आचार्यकक्षायामधिजगिरे। ते मया नाना शास्त्रीयान् प्रश्नान् पृष्टाः समीचीनोत्तरेण मां समतोषयन्। दूरस्थितेषु धनाभावकर्शितेष्वपि केषुचिद् विद्यालयेषु येषु द्वित्रा एवाध्यापका नाना कक्षा अध्यापयन्ति, छात्राणां साधीयान् शास्त्रप्रवेशोऽभिलक्ष्यते। तेन यावत्कालमहं कुलपतिपदे स्थितस्तावत्कालमाचार्यकक्षाध्यापनं केवलं विश्वविद्यालय एव प्रवर्तेत न तु महाविद्यालयेष्विति मतं नाहमभ्युपागां, विश्वविद्यालयाध्यापकाः शास्त्रज्ञानेऽध्यापनविधौ च महाविद्यालयाध्यापकेभ्य उत्कृष्टतरा इति मतं नाद्याप्यहमभ्युपैमि।

नानास्थानपरिभ्रमणप्रसंगे रात्रिरेकामहं 'आस्का' इति स्थानस्थशर्करा–निर्माणयन्त्रा(शूगर मिल)तिथिगृहेऽप्यगमयम्। कथं शर्करा निर्मिता भवतीतीदम्प्रथमतयाऽहमपश्यम्। तत्रत्या अधिकारिणः सुजनाः सर्वामपि प्रक्रियां मां बोधितवन्तः।

## १४६

पुरीक्षेत्रे कृताधिवासोऽहं नियमेन प्रातर्भ्रमणार्थमगच्छम्। मदावासनिकट एव वन्यप्रदेशोऽभूत्। तत्र वीथिभ्यः सञ्चरणोऽहं प्राकृतिकीं सुषमामुपोषिताभ्यामिव लोचनाभ्यां यथाकाममपिबम्। अविन्दं तेन च वाचामगोचरं कञ्चनानन्दातिरेकम्। वन्यप्रदेशे काजूपादपा अप्यासन्। तेषामर्धपक्वफलं बहुधा मयाऽऽस्वाद्यत। प्रथमं हरितवर्णं तद् भवति। वृक्षादपक्रियमाणात्तस्माद्रसो निश्च्योतति। तत्फलमधिकं

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

न सेवितव्यं भवति विशेषतो मादृशेन पित्तप्रकृतिकेन जनेन। इतः पूर्वं पादपेषु लम्बमानानि काजूफलानि न मया दृष्टान्यासन्।

सायंकाले बहुशः समुद्रसैकत उपविष्टस्तत्तरङ्गक्रीडाभिरात्मानं व्यनोदयम्। अन्तराऽन्तरा भगवद्दर्शनार्थमप्यहमगच्छं यत्कृपयैवाहं तत्समीपमागतः। यमेवैष वृणुते तेन लभ्य इति श्रुतिः। भगवता नीलाचलाधिनाथेन वृतोऽस्मि तत्सन्निधौ स्थातुमिति धन्यमात्मानमचकलम्।

मासमात्रमेव व्यतिगतं स्यात्पुरीक्षेत्रं प्राप्तस्य मम यदा संसदो[२७२] ऽधिवेशनमायोजितमभूत्। सा हि नाम बृहती समितिः। सप्ततिर्वाऽशीतिर्वा सदस्यास्तत्र भवन्ति। यावद्दिनं तदधिवेशनं प्रचलति। तत्सदस्येषु केवलं संस्कृताध्यापका एव न, अपि त्वन्यक्षेत्रकार्यकर्तारोऽपि। तेषु केचन हिन्दीभाषामपि नाजानन्, न चाङ्ग्लभाषां, संस्कृतस्य तु का कथा। उत्कलभाषयैव ते व्यवहर्तुं क्षमाः। उत्कलीयो विश्वविद्यालय इति तैरपि तद्विषये स्वविचाराः प्रकटयितव्या आसन्। तैरुत्कलभाषयैवोक्तम्। यदा ते तया भाषया भाषन्ते स्म तदा मया दृष्टं यत्तदानीन्तनो वित्ताधिकारी कार्यवाहककुलसचिवश्च तारादत्तपण्डा व्याकुल इवासीत्, कुलपतिरुत्तरदिग्विभागत इत्युत्कलभाषामजानानो ये तद्भाषया व्यवहरन्ति तेषामाशयं नावबुध्येत कदाचिदिति धिया। परन्त्वधिवेशनान्ते स्वकीयेऽभिभाषणे वदता मया तैर्यदुक्तमासीदुत्कलभाषयाऽपि तद्विषयेऽपि स्वाभिप्राय अविष्कृतः। तदा ते परं विस्मयमुपागताः। विसृष्टायां सभायां ते मामभ्युपागच्छन्न– पृच्छंश्च – किमुत्कलभाषां जानन्ति श्रीमन्तः? नेत्यहमवोचम्। परन्तु यत्संस्कृतं तत्रास्ति तदहं वेद। तथा संस्कृतशब्दबहुलोत्कलभाषा। संस्कृतनिष्ठानां सञ्ज्ञापदानामर्थः संस्कृतज्ञस्य स्फुटो भवेदेव। क्रियापदानामुत्कलीयानामर्थमभ्यूह्य वाक्यार्थोऽवबोद्धुं शक्यः।

यथोक्तं पुरस्तादधिवेशनं संसदो यावद्दिनं प्रचलति। मध्याह्नभोजनार्थं मध्ये भवति विरामः। भोजनव्यवस्था विश्वविद्यालयेनैव क्रियते। एकदा यदा कतिपयमासानन्तरं संसदः पुनरधिवेशनं जातं तदा मध्याह्नविरामे जातेऽपि भोजनं न सिद्धमिति तत्र भवति स्म कश्चिद् विलम्बः। तदा कश्चिद् विद्वदग्रयोऽ– शनायया बाध्यमानो महता कण्ठेन मामवोचत् – अद्य भोजनं भविता वा न वा? उत्स्मयमानेन मयोक्तम् – भविष्यत्येव न तु भविता। मद्वाक्येन सुतरां लज्जितोऽभूत्सः। लुडनद्यतने भवति। अद्य इत्यनेन सह भवितेति प्रयोगः प्रामादिकः। मया निपुणं तत्प्रमादः परिमार्जितः, तथा परिमार्जितो यथा तस्य सम्मानरक्षाऽपि भवेत्।

---

२७२ Senate इति आङ्ग्ल्याम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

## १४७

पुरीक्षेत्रे कुलपतिरूपेण कार्यं कुर्वाणस्य मे यदा षण्मासावधिक एव कालोऽवशिष्टो-ऽभूत्तदा बैल्जियमदेशीयल्यूवेननगरस्थात् कैथोलिकविश्वविद्यालयादभ्याग-ताचार्यरूपेण कार्यं कर्तुं निमन्त्रणं मया प्राप्तम्। वर्षत्रयं यावन्मम नियुक्तिर्विश्व-विद्यालय आसीत्। परं १९८३ वर्षे दिशाम्बरमासस्य त्रयोदशदिनं यावदेव मया श्रीजगन्नाथसंस्कृतविश्वविद्यालये कार्यं कृतम्। विश्वविद्यालये गुरुतरप्रशासन-कार्यवशाद् भूयान् कालो मम व्यर्थतां गच्छति लघुचेतसस्तत्रत्याश्च परोऽहमिति न मां मित्रस्य चक्षुषा पश्यन्तीति ततोऽपगमनमेव श्रेय इति बुद्धिमास्थितवता तन्निमन्त्रणं मया स्वीकृतम्। सूचितश्च कुलाधिपतिरुत्कलराज्यपालो ममाभिप्रायम्। अनिच्छताऽपि तेनानुमतं विदेशगमनम्। दिल्लीविश्वविद्यालयोऽप्यभिप्रायमिमं मे मया बोधितः। यतो मम मूलसेवा तत्रैवासीदतः सोऽपि सूचनीय आसीदेव। तेनाप्यहमनुमतः। दिल्लीविश्वविद्यालये पुनः सेवारम्भं विनैव साक्षात्पुरीत एवाहं बैल्जियमदेशं गन्तुं शक्त इति चाप्यनुमतम्।

१९७७ वर्षे पेरिस नगरे तृतीयविश्वसंस्कृतसम्मेलने भागं गृहीत्वाहं समीपवर्तिनः कांश्चिद् देशानपि गमिकर्मीकृतवान् तत्र भाषणार्थं निमन्त्रितः सन्। तेषु बैल्जियमदेशोऽप्येक आसीत्। तत्रत्यः सर्वोऽपि यात्राप्रबन्धो दिल्लीस्थेन बैल्जियमदूतावासेन कृतः। बैल्जियमप्रवासकाले धर्मपत्न्यपि मया सहाऽऽसीत्। यदाऽहं व्योमपत्तनं प्राप्तस्तदा धर्मपत्नीं ज्वर आक्रामत्। उद्विग्नहृदया साऽवोचत्तत एवावाभ्यां दिल्लीं प्रति प्रतिप्रस्थातव्यमिति। नेदं सम्भवीति तामहमवोचम्। प्रथममस्माभिः संस्कृतिमन्त्रालयं प्रति गन्तव्यं ततश्च कार्यक्रमपत्रकं ग्रहीतव्यं, तदनन्तरमेव किञ्चिदन्यत्कर्तव्यम्। सहसैवेतोऽपक्रमो नोचितः। यदावां कार्यालयं प्राप्तौ तदा मध्याह्नावकाशः प्रारब्ध आसीत्। योह्यधिकार्यस्मत्कार्यमवेक्षते स्म स भोजनार्थं गत आसीत्। द्विवादने तस्य प्रत्यापत्तिः स्यात्। धर्मपत्नी बलवदस्वस्था। अस्मिन् विषमेऽहं किं करवाणीति यावदहं चिन्तयामि, तावन्मद्दृष्टौ पतत्येकोऽधिकारी। विशाले कार्यालयकक्षे लघुकक्षा आसन्नधिकारिणां कृते परन्तु नैकोऽपि तत्रोपस्थित आसीदृते तम्। अगतिकगतित्वात्तमहमुपसन्नः। स्वकीया समस्या मया तस्मै निवेदिता। नायं मदधीनो विषयस्तथापि भवत्साहाय्यार्थमहमस्मि सन्नद्धः। उक्त्वैतत्स सम्बद्धाधिकारिलघुकक्षतोऽपेक्षितं पत्रजातमन्विष्य मह्यमार्पिपत्प्राह च द्विवादनं यावत्प्रतीक्षन्तां भवन्तः। तदा भवत्सम्बद्धविषयपर्य-वेक्षिण्यधिकारिण्यागमिष्यत्यनन्तरकरणीयं च भवत्सु निवेदयिष्यति। अस्वस्था मम धर्मपत्नीत्युक्ते तद्विश्रमव्यवस्था कार्यालय एवाक्रियत। द्विवादनेऽ-

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

धिकारिण्यागता। तया सर्वोऽपि कार्यक्रमो मह्यं सम्यग् बोधितो ल्यूवेनयात्रार्थं रेलयात्रापत्रकद्वयं 'टिकट' इत्याख्यं मह्यं दत्तं मां रेलयानं प्रापयितुं च सहायक एको निर्दिष्टः। ल्यूवेनस्थकैथोलिकविश्वविद्यालयसंस्कृतविभागाध्यक्षो गिल्बर्टपॉलेटमहाभागश्च दूरभाषद्वारा मदागमनट्रेनकालं च सूचितः।

पॉलेटमहाभागो यथाकालमावां प्रत्युद्गन्तुं गन्त्रीविरामस्थान उपस्थित आसीत्। होटलाख्ये वासगृहे सामान्यं स्थापयित्वा धर्मपत्नीं च तत्र विश्रमाय निर्दिश्याहं पॉलेटमहाभागेन सह विश्वविद्यालयं गतः।

## १४८

तत्रत्येष्वध्यापकेष्वासीदेकः कैलिवर्त इति नामा। भरतभुवि यापितान्यासंस्तेन नाना वर्षाणि। हिन्दीभाषां मातृभाषावद् वक्ति स्म सः। तस्य हिन्दीवाक्प्रसरः सत्यं रोमाञ्चं जनयति स्म। तस्यास्तां द्वौ पुत्रौ। तयोर्ज्यायसो जन्म जयपुरेऽभूत्। तस्य नाम तेन कृतं विनोदकुमार इति। विनोदेन स तं विनोदकुमार जयपुरिया (= जयपुरजः) इति कथयति स्म। कनीयसो नाम 'तैल' इति। स आसीत् ल्यूवेननगरे लब्धजनिः। मम धर्मपत्न्या अस्वस्थता कैलिवर्तं सुतरामुद्विग्नमकरोत्। तेनावयोस्तद्–गृहमुपेतयोः स्वकीयः पारिवारिकचिकित्सकः स्वगृहमुपेतुमुक्तो येन मद्धर्मपत्नीं सम्यक् परीक्ष्य समुचितां चिकित्साव्यवस्थां स कुर्यात्। ममापि कण्ठपीडाऽऽसीत्। चिकित्सकेन तेन द्वावप्यावां परीक्षितौ, औषधं च निर्दिष्टं यत्सौभाग्यवशात्कैलिवर्त आसीत्। गोलिकात्रयमावाभ्यां प्रत्येकं जनेन सेवितव्यमासीत्। औषधं कैलिवर्तेनावाभ्यां समर्पितम्। यदि भूयोऽपि तदपेक्षितं स्यात्तर्हि तत्कस्मादप्यौषधापणात्क्रेतुमासीच्छक्यम्। चिकित्सकस्यौषधनिर्धारके[२७३] पत्रे स्वकीयनामांकितपत्रा[२७४]देव स्वकीयनामांकितपत्रखण्डमुच्छिद्यौधषनिर्धारके पत्रे तेन संश्लेषितमुक्तं च – एतत्पत्रनिर्दिष्टौषधमल्पमूल्येन क्रेतुं शक्यम्। अन्यथा महान् व्यय एतदर्थं भवद्भिर्वोढव्यो भवेत्। योरूपभूखण्ड औषधानि सुतरां महार्घाणि। तदवध्यपरिचितस्य कैलिवर्तस्य तादृश्यात्मीयता मन्मनो गाढमस्प्राक्षीत्।

---

२७३ Prescription इत्याङ्ग्ल्याम्।
२७४ Letterhead इत्याङ्ग्ल्याम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

## १४६

परेद्यवि आवामाचार्य पी. एच. एल. एगरमॉण्ट महोदयेन स्वगृहे भोजनार्थं निमन्त्रितौ। प्रातर्नववादन एव सोऽस्मद्वासगृहं होटलाख्यमुपेतः। तस्य गृहं ल्यूवेननगरादतिदूरे कस्मिंश्चिद् ग्राम आसीत्। ल्यूवेननगरस्य सौन्दर्यविषये तत्रागमनात्पूर्वमेव मया बहु श्रुतमासीत्। परं ग्रामीणक्षेत्रं तथा सुन्दरं भवेदिति नाहमकल्पयम्। कारयानेन सञ्चरमाणोऽहं तत्सुषमां दर्शं दर्शमानन्दस्य परां कोटिमध्यरुक्षम्। हरितवर्णशष्पास्तीर्णास्तत्रत्या भूमयो यत्सत्यं नेत्ररसायनमेवासन्। समृध्यतिशयेन तत्रत्या ग्रामा नगराण्यप्यत्यशेरत।

सम्पूर्णं दिनमावाभ्यामाचार्यएगरमॉण्टमहोदयेन सहैव यापितम्। त्रीणि वर्षाणि तेन तदान्नीन्तनशर्मण्यदेशशासकैर्नाज़ीभिः स्थापिते निरोधशिबिरे[२७५] आसन् यापितानि। तानि तस्य कृतेऽतीव कष्टकराण्यासन्। कतिपयानि तन्निवासाव-सरसंस्मरणाण्यपि तेन श्रावितानि। तच्छ्रावणेनाभूत्स सुतरामुद्विग्नः। तद्धर्मपत्नी तदा तं न्यषेधीदलं तर्च्चयेत्युक्त्वा। यत्स्मरणेन कष्टं भवेत्को लाभस्तत्स्मरणेनेत्य-वोचत्सा। सत्यमाह भवतीत्युक्त्वा विरतोऽभूत्स भूयोऽपि संस्मरणप्रस्तुतेः।

तत्संस्मरणेष्वेकं तादृशमासीद्यत्संस्कृतस्योपयोगितां, विशेषतो विषमे, प्रत्यपीपदत्। संस्मरणमिदं नाज़ीशासनकालं स्पृशति। तदानीं शर्मण्यदेशीय-शासकस्य हिटलरस्य क्रूरताऽऽसीच्चरमां सीमानमधिरूढा। श्रीमान् एगरमॉण्टस्तदानीं द्वाविंशतिवर्ष आसीत्, हालैण्डदेशे च कृतवसतिः।

हिटलरसैनिका यं कमपि कुतोऽपि मार्गाद्वा, रथ्यातो वा, गृहाद्वा भोजनालयाद्वाऽऽकृष्य बन्धनागारं प्रापयन्ति स्म। न कोऽपि किमपि कस्यचनापि वचः शृणोति स्म। सैनिकानां याथाकामी सर्वत्र प्रसृताऽऽसीत्। बन्धनागारं प्रापितेषु केचन भाग्यशालिनो बन्धनान्मोच्यन्ते स्म। अपरे दिनद्वयानन्तरं दिनत्रयानन्तरं वा 'कन्सेन्ट्रेशन कैम्प'[२७५] इत्याख्ये कठोरकारागृहे प्रेष्यन्ते स्म। तेषु दिवसेषु यदि कश्चिद् गृहान्निर्गच्छति स्म न स जानाति स्माहं गृहं प्रत्यावर्त्स्यामि न वेति।

बन्धनगृहं प्रापितेषु नहि सर्वेऽपि कठोरकारागृहं प्रति प्रेष्यन्ते स्म। केचन मुच्यन्तेऽपि स्म, यथोक्तमुपरिष्टाद्, येनापरेषां बन्धनं प्रापितानां कृते स्थानं स्यात्।

एकस्मिन्दिन एगरमॉण्टोऽपि केनचित्पथा सञ्चरमाणो निरुद्धो बन्धनागारं च प्रापितः। प्राप्तमात्रेणैव तेन तद्भित्तिषु संस्कृतेन देवनागरीलिप्या लेखितुं प्रारब्धम्। तस्य मनस्यासीद्यन्मुच्यमानेषु जनेषु यदि कोऽपि बन्धनागाराद् बहिर्भूतः सन् चर्चां प्रवर्तयेद् बन्धनागारेऽस्ति तादृशः कश्चन बन्दी योऽपरिचितया भाषया ऽपरिचितया लिप्या च किञ्चित् किञ्चिल्लिखति, तर्हि कदाचित्कर्णाकर्णि सा

---

२७५ Concentration Camp इत्याङ्गल्याम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

चर्चा तत्कुटुम्बिजनकर्णगोचरा भवेत्। ते च तयाऽनुमातुं शक्नुयुर्यत्तादृशो जन एगरमॉण्ट एव भवितुमर्हति नान्यः कश्चन। तत्तेषामाश्वासनाय भवेद् यदहं जीवामीति। यस्य कस्यापि जनस्य पशुमारं मारणमपि तदा प्रसृतमासीत्। अतो मद्विषये मयि गृहमपरावृत्ते सति तत्सम्भावनाजनितं मार्मिकं कष्टं नासीदसम्भवम्।

यथा एगरमॉण्टेन चिन्तितमासीत्तथैव वृत्तमपि। निरुद्धेषु जनेषु कश्चिद-परिचितया भाषयाऽपरिचितया च लिप्या लिखतीति वृत्तं कुटुम्बिजनकर्णगोचरतां गतम्।

निरोधदिनत्रयानन्तरम् एगरमॉण्ट आस्ट्रियादेशस्थितं कठोरकारागृहं (कन्सेन्ट्रेशन कैम्पं) प्रापितः। तत्र नाना यातनास्तेन सोढाः। पर्वतशिखरे सरोवरनिर्माणकर्मणि स विनियोजितेऽन्यैर्बन्दिभिः सह। हिम्ये वाति नभस्वति वस्त्रप्रत्ये[२७६]व धारयन् यावद्दिनं सामान्यश्रमिक इवाकार्यमिदं कार्यमकार्यत निष्ठुरहृदयैः कठोरकारागृहाधिकारिभिः। एवं मा जीवन्नेव स वर्षत्रयं व्यत्यययापयत्।

अन्धकूपनिवास इव तस्य कठोरबन्दिगृहनिवासोऽभूत्। न स व्यजानात् किं प्रवर्तते बाह्ये जगति। यातनासहनमेवासीत्तस्य नियतिः।

कठोरबन्दिगृहे बन्दिनां पत्रप्रेषणानुमतिरासीत्। वर्षत्रये समाप्तिमुपयाति एगरमॉण्टेन नार्वेदेशस्थ–'औस्लो' नगरवास्तव्याय स्टेन कोनो इति नामधेयाय पत्रं प्रेषितं यत्र तेन पृष्टम् – अस्ति त्वयि मेघदूतपुस्तकमिति? पत्रमिदं संस्कृतेन निबद्धमासीत्। तेन प्रत्युत्तरितमस्तीति परं नाहं तत्प्रेषयितुं शक्तः। तत्स्थमेकं पद्यमवश्यमहमुद्धर्तुमिच्छामि। तच्च पद्यमिदमस्ति–

> शापान्तस्ते भुजगशयनादुत्थिते शार्ङ्गपाणौ
> शेषान् मासान् गमय चतुरो लोचने मीलयित्वा।
> पश्चादावां विरहगुणितं तं तमात्माभिलाषं
> निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु।।[२७७]

पत्रमिदं देवनागरीलिप्या निबद्धमासीत्। निरोधकेन्द्राधिकारिणोऽपरिचित-भाषयाऽपरिचितलिप्या च निबद्धं पत्रं वाचयितुमशक्ता अकिञ्चित्करमेवेदमित्यनुध्याय एगरमॉण्टमहोदयाय तत् समर्पयामासुः। तेन च सूक्ष्मेक्षिकया निरीक्षितं तत्पत्रं तदध्वन्यर्थं तस्मायभिव्यञ्जयामास। शापान्तो भवितेति तन्मम निरोधकेन्द्रोन्मोक्षं ध्वनयतीति तस्याभूदनुमा। चतुरो मासान् गमयेति मोक्षोऽनतिबहुना कालेन भवितेति संकेतयति। स मोक्षस्तदैव भवितुमर्हति यदा नाज़ीशासकास्तत्सहयोगिनश्च[२७८]

---

२७६ सुप् प्रतिना मात्रार्थे (२.१.६) इत्यने मात्रार्थे (= अल्पार्थे) समासः। वस्त्र प्रति अल्पं वस्त्रमित्यर्थः।

२७७ मेघदूतम्

२६८ Allies इत्याङ्ग्ल्याम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पराजिता भवन्ति। पराजयस्तेषां प्रारब्ध एव स्यात्। एवं पद्यस्य गूढाभिप्रायाविष्करणे एगरमॉण्टस्य बुद्धिः प्रससार। इदमाशाजननमिति स्वकश्मलं स यथाकथञ्चि-त्संयम्य शेषान् दिवसान् गमयितुं मनो बबन्ध। एवं संस्कृतेन निरोधकाले ममोकृतमासीदिति पुरावृत्तं स मामाचख्यौ।

इत्थं द्विः संस्कृतेनोपकृतं तस्य। पूर्वं कुटुम्बिजनसूचनासाधनत्वेन जीवति स इति, अपरं हिटलरपराजय इति संकेतेन विषमेऽपि संतुष्टिप्रदानेन।

उपर्युद्धृतेन संस्मरणेन स्पष्टमिदं भवति यत्संस्कृतभाषा कामदुघा गौरिवोपकरोति जनस्य। एकदाऽतिविषमायां स्थितौ देशस्यास्माकमप्यनया भाषयाऽऽसीदुपकृतं तत्सुरक्षायां कदाचिद् व्याघातं जनयेदिति नात्र विप्रियते।

निरोधकालिकं पूर्ववृत्तस्मरणं कष्टमुपजनयतीति तत्स्मरणाद्वारयति स्म एगरमॉण्टं तद्धर्मपत्नीति पूर्वमुक्तमेव। तत्स्वास्थ्याय न हितमिति सा मुहुर्मुहुस्तं साऽवोचत्। एगरमॉण्टमहोदयस्तल्लघ्व[२७९]भ्युपैत्।

साध्वाह भवतीति ब्रुवन् यदाऽहं पूर्ववृत्तं वृत्तजातं स्मरामि तदा पुनर्नवीभवन्ति मे व्रणाः, अतस्तद्विस्मरणमेव वरम्। तद्वृत्तजातं मद्धृद्देश एव विलीनं तिष्ठतु। किं तस्योद्घाटनेन– इति सोऽवादीत्। अस्मिन्नेव सन्दर्भे एगरमॉण्टमहोदयेन एकस्या बाइबलाख्यधर्मग्रन्थगतायाः कथाया उल्लेखोऽपि कृतो यत्र प्रभुयीशुणा कथितं यद् यः कोऽपि पृष्ठतोऽवलोकिष्यते स लवणस्तूपरूपेण परिणतो भविष्यति।

विविधविषयकचर्चानन्तरं खादतपिबता प्रावर्तत। एगरमॉण्टधर्मपत्न्या शाकाहारिणावावामिति मांसविरतमेव भोजनं साधितमासीत्। तदावाभ्यां भृशमस्वदत।

किञ्चित्कालपूर्वम् एगरमॉण्टमहोदयो लाहौरनगरं गत आसीत्। ततस्तेन स्वधर्मपत्न्यै शाटिकाद्वयमानीतमासीत्। परन्तु तद्धर्मपत्नी तत्कथं परिधीयत इति नावेत्। सा मद्धर्मपत्नीं किञ्चित्संकोचेन पप्रच्छ किं भवती जानाति कथं शाटिका परिधीयत इति। ओमित्युक्तवत्यां तस्यां सा तां शाटिकाबन्धविधिं शिक्षयामास। स सर्वोऽपि विधिस्तया स्वकीयायां लेखनसञ्चिकाया[२८०]मङ्कितः।

## १५०

एवमेगरमॉण्टदम्पत्योर्गृहे दिनं सुखेन व्यतियाप्यावां होटलाद् गिल्बर्टपॉलेटगृहं प्राप्तौ यत्र रात्रिभोजनार्थमावामासातां निमन्त्रितौ। तत्रापि सुखेन काल आवाभ्यां

---

२७९ लघुरतिशीघ्रमित्यर्थः। अत्रार्थे द्रष्टव्यः शाकुन्तलपाठः—तेन हि लघु परित्रायतामेनां भवान्। मा कस्यापि तपस्विन...इंगुदीतैलचिक्कणस्य हस्ते पतिष्यति।

२८० Writing pad इत्याङ्ग्ल्याम्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

यापितः। पॉलेटस्यास्त्यपत्यद्वयमेकः पुत्र एका च पुत्री। भोजनानन्तरं पॉलेटमहोदयेन स्वस्य च स्वकुटुम्बस्य च स्लाइडरूपिणी चित्रशृंखलाऽऽवाभ्यां प्रदर्शिता याऽऽवाभ्यामत्यन्तमरोचत। तत्रासन् क्वचित् समुद्रस्नानदृश्यानि, क्वचित्ततीरे सूर्यस्नानानन्दानुभवचित्राणि, क्वचिद्वनविहारचित्राणि, क्वचिच्च सरितां वा जलप्रपातानां वा चित्राणि यानि पॉलेटमहाभागेन स्पेन – आस्ट्रियादिदेश-यात्रावसरे कृतान्यासन्। तानि तथा मनोहराण्यासन्यथा हठाद् दृशमाकृक्षन्। चित्रशृंखलादर्शनेनैवं प्रत्यैय्यत यदावां तत्तत्स्थाने स्वयं स्थिताविति।

अपरेद्युरावां गेण्टनामकं स्थानं गतौ तत्र च विश्वविद्यालयप्राध्यापकेन डिल्यू इत्यनेनावां प्रत्युद्गतौ। तेन मेघदूतविषयकः स्वकीयो ग्रन्थ आवाभ्यां प्रदर्शितः। तेन तत्र मेघदूत उल्लिखितानां भौगोलिकस्थानानां परिचय उपस्थापितः केन नाम्ना च तानि सम्प्रत्यभिज्ञायन्त इति सर्वं विस्तरेणोपस्थापितम्। तदनुसारेण 'क्षेत्रमारुह्य मालम्' इत्यत्र मालशब्दस्य मालक्षेत्रमिति नार्थो यत् शार्पेमहोदय आहापितूज्जयिनीनिकटवर्ति तत्स्थानं यत्सम्प्रति 'मालखेडी' इति नाम्ना ज्ञायते। डिल्यू महोदय आसन् शतशो भौगोलिकस्थानानां चित्राणि। तत्रासन्नङ्कितानि शतशो भौगोलिकस्थानानां नामान्यपि।

रात्रिरावाभ्यां ल्यूवेननगरे यापयितव्याऽऽसीत्। अतः सन्ध्याकाल आवाभ्यां गेण्टनगरात्प्रस्थातव्यमभूत्। गन्त्रीविरामस्थानं प्रापयदावां डिल्यूमहोदयः। विरामस्थानप्रवेशात् पूर्वम् – आसीदावयोः कश्चित्कालः – वयं सर्वेऽपि, अहं मद्धर्मपत्नी डिल्यूमहाभागश्च, निकटस्थं वृक्षं परितो निर्मिते स्थण्डिल उपाविशाम। तत्र सौप्रस्थानिकरूपेण सद्य एव पद्यचतुष्टयं रचयित्वा तच्च पत्रगतं कृत्वाऽहं तस्मायार्पिपम्। महानयं निधिर्भवद्भिर्मह्यमर्पित इति कृतज्ञतासान्द्रेण चेतसा गृहीतं यावज्जीवमिदं पद्यचतुष्टयं मयि स्थास्यत्यत्रभवतश्च स्मारयिष्यतीत्युक्तम्।

## १५१

एकैकशो व्यतीतानि वर्षाणि। अकस्मात्पुरीक्षेत्रस्थेन मयाऽलाभि पत्रं ल्यूवनस्थात् कैथोलिकविश्वविद्यालयाद्यत् षण्मासकालावधिं यावत्तत्रत्यसंस्कृतविभागेऽ–भ्यागताचार्यरूपेणाऽहं नियुक्त इति। मानदेयरूपेण च मह्यं प्रतिमासं दशसहस्राधिकलक्षमिता बैल्जियनफ्रैंकमुद्रा विश्वविद्यालयो दास्यति। कैथोलिक–विश्वविद्यालय आसीत् पद्धतिः – सम्प्रत्यप्येषा प्रचलिता स्यादेव – यत् प्रतिवर्षं कस्मिंश्चिदपि विभागे कोऽपि विशिष्टः ख्यातनामा विद्वान् षण्मासकालावध्यर्थं कुतोऽपि निमन्त्रयितुं शक्य इति। यदाप्रभृति विभागाध्यक्षेण गिल्बर्ट पॉलेट इत्याख्येन मम साक्षात्कारोऽभूत्तदाप्रभृत्येवाऽहं तत्र निमन्त्रितः स्यामित्य–

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

भिलाषोऽङ्कुरित आसीत् तस्मिन्। एतदर्थं प्रेषितस्तेन प्रस्तावः स्वीकृतश्च विश्वविद्यालयीयमुनिमण्डल्या[२८१]।

अतर्कितोपनतं चिरसञ्चितानां पुण्यानां फलमिव स्वयमुपागतं पत्रं कैथोलिकविश्वविद्यालयादधिगत्य परं सन्तोषमहमन्वभूवम्। सूचितो मया तदानीन्तनः कुलाधिपतिर्निमन्त्रणमिदं स्वीकर्तुं ममाभिलाषो मोचयितव्यश्चाहं कुलपतिपद–भारादिति। दिल्लीविश्वविद्यालयोऽप्येतमर्थं मयाऽवबोधितः। यतो मम मूलसेवा तत्रैवाऽऽसीदतो मया यत्किमिति कर्तव्यमभूत्तस्य सूचना तस्मायपि दातव्याऽभूत्।

अत्रान्तरे महर्षिमहेशयोगिनां कतिच्छिष्यैर्यतः कुतोऽपि मत्संकेतमुपलभ्य कृतो मया सम्पर्कः। महर्षिपादा हालैण्डदेशस्य फ़्लोद्रोप्स्थाने स्थापिते स्वकीये विश्वविद्यालये वैदिकविज्ञानविषये प्रथमां योरूपीयां चर्चागोष्ठीमायोजयि–तुमासन्नुत्सुकाः। तत्र ममाप्युपस्थितिम[२८२]भिलाषुकास्त आसन्। तच्छिष्यमुखेन ते मां न्यमन्त्रयन्। मम च मद्धर्मपत्न्याश्च समस्तोऽपि यात्राव्ययस्तैरेव वोढव्य आसीत्। मयाऽप्यदृष्टपूर्वोऽयं देशो महर्षिपादानां प्रथमः प्रणय इति तन्निमन्त्रणं स्वीकृतम्। योरूपभूखण्डादन्येऽप्यासन्निमन्त्रिताः। तेषु विशेषोल्लेखमर्हन्ति ट्यूबिंगननगरात् पॉलथीमे महाभागा, ब्रिटेनदेशाद् ब्रॉकिंग्टनमहाभागास्तद्धर्मपत्नी च (साऽपि भारतीयविद्याविशेषज्ञा)। भारताद् द्वौ वैद्यावप्यागतावास्ताम्। एकः सुप्रथितयशा दिल्लीतो बृहस्पतिदेवत्रिगुणा अपरश्च महाराष्ट्रेभ्यः टी. एम्. गोगटे। भारतादन्योऽप्येको भारतीयविद्याविशेषज्ञस्तत्रोपस्थितोऽभूत्। स आसीद् द्वारभङ्ग[२८३]स्थकामेश्वरसिंहसंस्कृतविश्वविद्यालयकुलपतिर्मम प्रियसखो[२८४] डा. जयमन्तमिश्रः[२८५]। सप्ताहपर्यान्तं गोष्ठी प्रावर्तत। सग्धिसपीतिसहचर्चादिभिस्तत्र सुखेन कालो गतः।

हालैण्डदेशस्यैककोणे स्थितं ल्फोद्रोपस्थानमतीव रमणीयम्। ग्राम्यस्तत्रत्य–परिवेशोऽतीव लोचनलोभनीय आसीत्। बैल्जियमदेशसीमा तन्निकट एव। नास्ति तत्र कश्चन सीमाबन्धः। एकदा केनचित्पथा सञ्चरमाणोऽहं तद्देशे प्रविष्टः।

---

२८१ Council of Sages इत्याङ्गल्याम्। यदन्यत्र Academic Council इत्युच्यते तत्तत्र Council of Sages इति। कैथोलिकविश्वविद्यालयो विश्वस्यातिपुरातनेषु विश्वविद्यालयेष्वेकः। वर्षाणां षट्शत्या अप्यधिकः कालोऽस्य स्थापितस्य।

२८२ न लोकाव्ययनिष्ठाखलर्थतृनाम् (२.३.६९) इत्यनेन षष्ठ्यभावः।

२८३ दरभङ्गा इत्यस्य सांस्कृतं रूपम्।

२८४ राजाहःसखिभ्यष्टच् (५.४.९१) इत्यनेन तत्पुरुषे टचि यस्येति च (६.४.१४८) इत्यनेन सखिशब्दस्य इकारलोपः।

२८५ दुर्भाग्यवशात् सम्प्रति सोऽस्मासु नास्ति। कतिपयवर्षपूर्वमेव स स्वकीयेन पुण्येन जिताँल्लोकान् गतः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

यदा मया कश्चिदध्वाऽतिक्रान्तस्तदा मया ज्ञातं देशान्तरं प्रविष्टोऽस्मीति। तदा तद्देशप्रवेशानुमतिर्मयि नास्तीति ततोऽहं लघ्व[२८६]पक्रान्तः, मा कदाचिन्मां रक्षापुरुषास्तद्देशीया बन्धनं प्रापयेयुरनिष्टं वा मय्याचरेयुरिति।

फ़्लोद्रोप्स्थान एकं पुरातनं नानाकक्षात्मकं द्विभूमिकं भवनमासीत् क्रीतं महर्षिपादैः। तन्मध्य आसीद् गोलाकारं प्रेक्षागृहं यत्र सहस्राधिका जना उपवेष्टुं शक्नुवन्ति स्म। महर्षिपादानां सर्वाऽपि वैदेशिकी शिष्यमण्डली तदेव भवनमध्यवसत्। प्रत्येकं कक्षस्य पुरतः पट्टिकायां निर्देशोऽभवत्तत्कक्षोपयोगविषये–वेदकक्षः, धर्मशास्त्रकक्षो, व्याकरणकक्ष इत्यादि।

फ़्लोद्रोप्स्थानादमेरिकास्थवाशिंगटननगरे ह्वाइट हाउस इत्यस्यामेरिका-शासनतन्त्रसञ्चालककार्यालयस्य नातिदूर एव कस्मिंश्चिद् भवने महर्षिपादैः स्वकीयं केन्द्रमासीत् स्थापितम्। तत्रापि कश्चन कार्यक्रम आयोजित आसीन् महर्षिपादैः। साक्षाद् फ़्लोद्रोप् इत्यतस्तत्रैव गन्तव्यमासीदस्माभिः। तथैव च कृतम्। ततः प्रत्यावर्तनकाले बैल्जियमदेशस्य ल्यूवेननगरे स्थिते कैथोलिकविश्वविद्यालयेऽभ्यागताचार्यकार्यभारो मयाऽधिग्रहीतव्य आसीत्। ब्रसेल्स इति बैल्जियमदेश-राजधानी। ततः स्थलमार्गेण ल्यूवेननगरं प्रति गन्तव्यं भवति यच्च ततो नातिदूरे। ब्रसेल्स–ल्यूवेननगरयोरन्तरैव व्योमपत्तनम्। उभयत्रापि गमने कश्चिदध्वा कारयानेनैवातिक्रान्तव्यो भवति।

## १५२

व्योमपत्तने आचार्य गिल्बर्टपॉलेटमहाभागो मां प्रत्युद्गन्तुमुपस्थित आसीत्। तत्र प्रवेशानुमतिविषये समुपस्थिताऽऽसीत्काचन समस्या। सा यथाकथञ्चित् समाहिता। अतो व्योमपत्तनाद् बहिर्निष्क्रमणेऽजायत कष्टकरः कश्चन विलम्बः। आचार्य पॉलिटमहाभागो विश्वविद्यालयकोष्ठावलि[२८७]ष्वेकं कोष्ठं, यन्मदर्थमारक्षितम् आसीन्मां प्रापय्य रात्रिभोजनार्थं च मां निमन्त्र्य गतः।

धर्मपत्नी व्योमपत्तनादेव भारतं प्रति गता। तया स्वकीये महाविद्यालयेऽध्यापनकार्यं कर्तव्यमासीत्। महाविद्यालयेन तदीयोऽवकाशः कतिचिद्दिनार्थमेव स्वीकृत आसीत्।

---

२८६ लघु = शीघ्रम्। शाकुन्तलानुकरणेन प्रेरितः प्रयोगः।
२८७ Apartments इत्याङ्ग्ल्याम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

ल्यूवेननगरे मयैकाकिनैव वस्तव्यमासीत्। आ गृहसम्मार्जनाद-भोजनरन्धनपर्यन्तं सर्वमपि कार्यं मयैव करणीयमासीत्। अपेक्षितानां पात्राणां व्यवस्था कोष्ठावल्यां विश्वविद्यालयेन कृताऽऽसीत्– भोजनसाधनाय गैसचुल्ली, रन्धनाय[२८८] स्थाली, परिवेषणाय दर्वी, भोज्यस्थापनाय पात्री[२८६], अशनाय चमसाः, पानाय चषकाः, पात्रसम्मार्जनाय शोधनकद्रव इत्यादि सर्वं तत्रासीत्। चायार्थं चायधानी, शर्करार्थं शर्कराधानी, तितउ इत्यादि सर्वमपि च तत्रास्त। केवलं रन्धनीयं शाकतण्डुलादि, व्यञ्जना[२६०]न्तराणि, ब्रेड इत्याख्याः पाश्चात्यरोटिकाः, नवनीतं, फलानि च क्रेतव्यान्यभवन् तानि च निकटस्थादापणसमूहाद्[२६१] 'डलहेज़'[२६२] इत्याख्यात्सुलभान्यासन्। मम ल्यूवेनप्राप्तेरनन्तरदिन एवाचार्यपॉलेटो मां स्वेन सह तत्रानैषीत्स्वकीयेन यानेन पद्भ्यां तत्रोपगमनाय सरलं पन्थानं च मामुपादिक्षन्निरदिक्षच्च यद् रविवासरेऽयमापणसमूहोऽवरुद्धो भवति, अतस्तत्पूर्वदिन एवापेक्षितं वस्तुजातं क्रयणीयं भवत्यन्यस्मिन् कस्मिंश्चिद् दिवसे वा।

विश्वविद्यालयेन प्रतिदिनं पूर्वाह्ण एकादशवादनेऽपराह्णे च चतुर्वादने चायपानव्यवस्था स्वपक्षत एव क्रियते स्म। तदर्थं निर्धारित आसीदेकः कक्षः। तत्र सर्वेऽपि प्राध्यापकाः समवयन्ति स्म। परस्परेण कुशलक्षेमादिपरिप्रश्नानन्तरमन्येषु नाना विषयेष्वपि चर्चा तत्र प्रवर्तते स्म।

चाय–काफ़ीत्यादि तत्र स्वयं साधनीयमभूत्। एकत्र बृहति थर्मोस् इत्याख्ये पात्र उष्णजलं भवति स्म। तत्समीप एव चषकाश्चमसाश्च पृथक् पृथक् नागदन्तेषु स्थापिता भवन्ति स्म। तन्निकषैव चायभस्त्रिका[२६३] एकस्मिन् पात्रे, शर्कराखण्डा[२६४]श्चापरस्मिन् पात्रे भवन्ति स्म स्थापिताः। प्रत्येकं जनः स्वस्थानादुत्थाय प्रथममेकस्मान्नागदन्ताच्चषकं ततः परमपरस्मान्नागदन्ताच्चमसमादाय चषके थर्मोस् इत्यत उष्णजलं प्रवाह्य चायभस्त्रिकामेकां तत्पूगात्तत्रस्थात् तत्पात्राद् गृहीत्वा चषके च तां प्रवेश्य यथापेक्षं च शर्करां सम्मिश्र्य चायमास्वादयति स्म। यदि काफ़ीप्रियः स, तर्हि तयैव पद्धत्या काफ़ीपेयं साधयित्वा तदास्वादनतत्परो भवति स्म। पीते च चाये, काफ़ीपेये वा स्वयमेव मार्जनद्रव्येण चषकञ्च चमसञ्च सम्मार्ज्य प्रोञ्छनकेन च प्रोञ्छ्य तदुभयं यथास्थानं

---

२८८ तादर्थ्ये चतुर्थी वाच्या इति वार्तिकेन चतुर्थी।

२८६ प्लेट

२६० मसाले इति हिन्द्याम्।

२६१ Departmental Store इत्याङ्ग्ल्याम्।

२६२ Dalheze डचभाषाशब्दोऽयं सिंहार्थकः।

२६३ Tea bag इत्याङ्ग्ल्याम्।

२६४ Suger cubes इत्याङ्ग्ल्याम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

स्थापयति स्म। एतत्सर्वं मया चायकक्षस्थेन प्रत्यक्षीकृतम्। यदाऽहं चायमुपरिष्टान्निर्दिष्टया पद्धत्या साधयितुं प्रवृत्तस्तदा कक्षस्था अन्ये प्राध्यापकाः, नैतद् भवद्भिः करणीयं, वयं भवदर्थं चायं साधयामो भवन्तोऽस्माकं मान्या अतिथय इत्यवोचन्। मयोक्तम् – न मयाऽत्र दिनं वा, दिनद्वयं वा, सप्ताहं वाऽवस्थातव्यम्। भूयान् कालो मयाऽत्र यापनीयः। किञ्च, नाहमतिथिः। अत्रभवत्स्वेक एवाहम्। अत्र स्थितेन मयाऽत्रत्या पद्धतिः परिपालनीयैव। एवमुक्तवत्यपि मयि न ते मद्वचोऽभ्युपागुः। नैवाद्येदं भवितुमर्हति। परतराद् दिनात्स्वैरमत्र प्रवर्तन्तां भवन्तः। तेषां तदवधि ममापरिचितानामपि विद्वत्पुंगवानां मयि तादृशः स्नेह आत्मीयभावश्च मां गाढमस्पृक्षाताम्।

## १५३

कैथोलिकविश्वविद्यालये विभागीयपुस्तकालयोऽप्यासीत्। विभागीयः कश्चनच्छात्र एव तद्व्यवस्थापकत्वेन तत्र नियुक्त आसीत्। एतदर्थं वृत्तिरूपेण कश्चन राशिरपि तस्मै दीयते स्म। मयाऽध्यापनार्थं स्वकीयानुसन्धानकार्यार्थं च कानिचन पुस्तकान्यपेक्षितान्यासन्। ममागमनात् कतिचिद् दिनानन्तरमेवाहं पुस्तकालय–मुपेतः। मया विचार्यं विचार्यं कतिचन पुस्तकान्यभ्युच्चितानि। तानि व्यवस्थापकसमीपं नीत्वाऽहमवोचमिमानि पुस्तकान्यहं पुस्तकालयाद् ऋणरूपेण ग्रहीतुमिच्छामि। तेनोक्तम् – अस्तु। तदा मया चिन्तितं स कुत्रापि सञ्चिकायां पुस्तकानां नामानि लेखिष्यति, तिथिमङ्कयिष्यति यस्यां पुस्तकानि मयाऽऽदत्तानि। मयाऽपि सञ्चिकायां स्वहस्तो दातव्यः स्यात्। परं नैतत्तेन किमपि कृतम्। कदाचित्तेन ममाशयः सम्यगवबुद्धो न स्यादित्याम्रेडयेऽहं वचः। अस्त्वित्येव सोऽवोचत्। ममाशयः स्पष्टतरः स्यादिति तमहं प्रोक्तवान् – स्वगृहं प्रति नेतुमिच्छामि पुस्तकानीमानि, नैतानि मया पुस्तकालये स्थितेन पठनीयानि। एतच्छ्रुत्वाप्यस्त्वित्येव सोऽभाणीत्। तदनु पुस्तकानि गृहीत्वाऽहं पुस्तकालयात् परावृत्तः। तदाऽभून्मे मनसि – अत्रत्यास्तावत्तथा सरलहृदया यत्ते मनसाऽपि कल्पयितुं न शक्नुवन्ति यत्कश्चित्प्राध्यापकः पुस्तकालयात्पुस्तकान्याददीत, न च परावर्तयेत्। अस्माकं देशे तु स्मरणपत्राणि प्रेषणीयानि भवन्ति। यदि पुस्तकादातॄणां नामादिकं नाङ्कितं भवेत् तर्हि ते परावर्तयेयुरेव न। मत्तो नाना जनैः पुस्तकानि गृहीतानि। अस्ति मयि विपुलः पुस्तकसंग्रहः। तत्र सन्ति तादृशान्यपि पुस्तकानि यान्यन्यत्र न सुलभानि। नाना जना मद्गृहमापतन्ति तानि पुस्तकानि दृष्ट्वा लुब्धका मृगानिव साग्रहं मामनुरुन्धन्ति तेषां कञ्चित्कालं यावत् पठनप्रदानाय। तेषु बहुभिस्तानि


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

न परावर्तितानि, यदि परावर्तितान्यपि द्वित्राभ्यां, तर्हि कानिचनान्यान्येव न तु तानि यानि मत्तो गृहीतान्यथवा कृत्वा तानि खण्डितानि दूषितानि वा प्राचीनोक्तिमिमां चरितार्थयद्भिः –

लेखनी पुस्तकं नारी परहस्ते गता गता।
यदि वा पुनरायाति नष्टा भ्रष्टा च खण्डिता।।

बैल्जियमदेशजानां व्यवहारं स्वदेशजानां च व्यवहारं स्मारं स्मारं क्रीडावनम्रो भवामि। चिन्तयामि च कथमस्मास्वेतादृशाः प्रमादा यच्छीलं परं भूषणमिति महता कण्ठेनोच्चारयन्तोऽपि वयं न तत् परिपालयामः। पुस्तकसम्बद्धमपरमपि किञ्चिद् वृत्तमत्रोपन्यस्तुमिच्छामि। आसीन्मम कस्यापि पुस्तकस्य पिपठिषा। तस्य पुस्तकस्य नाम मम स्मृतिपथे नासीत्। तद्विषयवस्त्वेव केवलमहमस्मार्षम्। तद्रचयितुः सम्पूर्णं नामापि नाहमवेदिषम्। केवलं तदुत्तरार्धमेवाहमज्ञासिषम्। कथमत्र प्रवर्तितव्यमिति दोलाचलचित्तवृत्तिरहं विश्वविद्यालयपुस्तकालयाध्यक्षमुपासदं स्वकीयां समस्यां च तं न्यवीविदम्। तां श्रुत्वा तेनोक्तम् – लघ्वीयं समस्या। भवन्त आसनमलंकुर्वन्तु यावदहमिमां समादधामि। पुस्तकालये सर्वं पुस्तकविवरणं कम्प्यूटरयन्त्रेऽस्ति, कानि तच्छीर्षकाणि, के तेषां रचयितारः संस्कर्तारो वा, कुत्र च कस्मिंश्च वर्षे तानि मुद्रितानि प्रकाशितानि चेत्यादि। मदभीप्सितपुस्तक–रचयितुर्यन्नाम्न उत्तरार्धो मयाऽस्मर्यत तस्मिन् पुस्तकालयाध्यक्षेण टंकितमात्र एव तन्नामोत्तरार्धं बिभ्रद्भिर्यावद्भिरपि जनैः पुस्तकानि विरचितान्यासन् तेषां शीर्षकाणि प्रकटान्यासन्। तत्र तस्य पुस्तकस्य शीर्षकमप्यासीत् यन्मयाऽ–पेक्षितमासीत्। मया कृते तत्पुस्तकसंकेते कश्चित्पुस्तकालयकर्मकरः पञ्चभिर्निमेषैरेव पुस्तकं मत्पुरतो न्यास्थत्। अहं च स्वप्नलोके स्थित इव चमत्कारमिमं वीक्ष्याचिचिन्तं कथंविधं सौविध्यमत्रास्ति पठकानां कृते। अस्मद्देशे तु भूयान् कालः पुस्तकान्वेषणेनैव याति। पुस्तकालयकर्मकरा अपि तथा दीर्घसूत्रिणः, पुस्तकान्वेषणे च तत्तदध्येतुकामेभ्यः प्रतिपादने च, यत्तदध्ययनरसमेव ततो निष्कर्षन्ति।

पुस्तकीभवति पण्डित इति प्राचामुक्तिः। यदि पुस्तकान्येव न सुलभानि, किं नाम शास्त्राध्ययनचुञ्चुरपि[२६५] जनः कर्तुं क्षमः। पुराकाले श्रुतिमाध्यमेनैव ज्ञानं संक्रामितमभूदवरेभ्यः। अतः कण्ठगतैव विद्या प्रशंसाभाजनमभूत्। पुस्तकस्था विद्या न तथाऽऽद्रियत सुधीभिर्यथा कण्ठगता विद्या। प्राचामियमुक्तिरत्र प्रमाणम्–

२६५ तेन वित्तश्चुञ्चुप्चणपौ (५.२.२६) इत्यनेन शास्त्राध्ययनेन वित्तः प्रतीतः ज्ञात इत्यर्थः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पुस्तकेषु च या विद्या परहस्तेषु यद् धनम्।
उत्पन्नेषु च कार्येषु न सा विद्या न तद्धनम्।।[२६६]

परिवर्ती कालः। महति ज्ञानविस्तरे कण्ठमारोपयितुमशक्ये तद्रक्षायाः पुस्तकान्यभूवन्नुत्तमं शरणम्। ज्ञानं लिपिबद्धतामनीयत विद्वदुत्तमैः। सन्ति सम्प्रति सार्धकोटिसंख्याकाः पाण्डुलिपयोऽस्मद्देशे ततश्चापि भूयस्तराः। एवमेव सन्ति प्रकाशिता ग्रन्थास्तत्तद्भाषोपनिबद्धाः।

प्रतिमंगलवासरं रात्रिभोजनं मे आचार्यपॉलेटगृह एवाभवत्। कक्षाध्यापनानन्तरं स मां विश्वविद्यालयतः स्वेन सहैव स्वगृहमनयत्। तत्र खादतपिबता प्रावर्तत।

प्रतिबुधवासरं स त्वराक्रान्तोऽदृश्यत। तस्य माता ल्यूवेननगराद् दूरे एकस्मिंश्चिद् वृद्धाश्रमे निवसति स्म। पुष्पगुच्छमादाय तां द्रष्टुं स नियमेन प्रतिबुधवासरं गच्छति स्म। दिनं तस्यां व्यतियाप्य सायं वृद्धाश्रमात् प्रत्यागच्छति स्म।

## १५४

किञ्चिदन्यदपि तत्रत्यमुल्लेखनीयं वृत्तमत्रोपन्यस्तुमिच्छामि। तच्चाध्यापनसम्बद्धम्। अध्यापनीयेषु ग्रन्थेषु शाकुन्तलमपि मयाऽध्यापनीयमासीत्। तदध्यापनविषये नवीनैका पद्धतिर्मयाऽऽश्रिता। अहं पाठ्यं साभिनयमध्यापिपम्। शाकुन्तले–'आः अतिथिपरिभाविनि

विचिन्तयन्ती यमनन्यमानसा
तपोधनं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव।।'[२६७]

इति क्रोधाभिभूतस्य दुर्वाससो वचस्तारस्वरेण भ्रुकुटिबन्धेन रोषारुणित–नेत्रयुगेन तर्जनीसञ्चालनेन तथोच्चारितं मया यत्तद्दृश्यं प्रत्यक्षमिवाकरोच्छात्राणाम्। एवं चटुलोत्फुल्लदुर्निवारया गत्या क्रामता मया 'चटुलोत्फुल्लदुर्निवारया गत्या प्रतिनिवृत्त' इति शाकुन्तलीयो गद्यबन्ध उच्चारणविषयतां नीतः। एवमेव सम्भ्रममाश्रित्य प्रथमप्रतिक्रियारूपेण 'न मे

---

२६६ चाणक्यनीतिः, १६.२०

२६७ अभिज्ञानशाकुन्तलम्, ४.१



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

वचनमन्यथा भवितुमर्हती'ति कठोरमूर्धन्यः [illegible] सारितः, एवमेव च 'दुहितृजनस्य प्रथमोऽसत्यो [illegible] इति [illegible] किञ्चिन्मृदूकृतस्य 'अथवाऽभिज्ञानाभरणदर्शनेन शापो निवर्तिष्यते' इति [illegible] किञ्चिन्मार्दवेन शनैः शनै विमर्शभङ्गिमानं नाटकतोऽभ्यासिषम्। एवं [illegible] प्रवर्तमाने मयाऽवलोकितं यन्मच्छात्रेष्वेका तादृश्यासीद्या ममाभिनयं [illegible] सूक्ष्मया दृष्ट्या चावालोकिष्ट। साऽन्यच्छात्रेभ्यश्छात्राभ्यश्च पृथगेव [illegible]। कृतायां मया जिज्ञासायां ज्ञातं मया यत्सा बेल्जियमदेशस्य सुप्रसिद्धा नृत्यांगनाऽसीद् हैदी पॉवेल इति नामधेया। अत एव तस्या ममाभिनयेऽनुरागदृढा रुचिः। सा तत्र संस्कृतमधीत इति प्रहर्षस्य परां कोटिमहमध्यारुक्षम्। भिन्नरुचिर्हि लोकः। नृत्ये चाभिनये च परं प्रावीण्यं गताया अपि तस्या विश्रुतयशस्कायाः संस्कृतेऽभिरुचिरिति जितं संस्कृतेन।

## १५५

विश्वविद्यालयपरिसर एव विश्वविद्यालयेनच्छात्राणामध्यापकानां च कृतेऽल्प-व्ययेन[२६८] मध्याह्नभोजनव्यवस्था कृताऽऽसीत्। तस्य स्थानस्य यत्रेयं व्यवस्थाऽऽसीन्नाम 'मेन्सा' इत्यासीत्। प्रत्येकं योरूपीयविश्वविद्यालये तादृशी व्यवस्थाऽस्ति। तत्र सहस्रं जना एककालावच्छेदेनैव भोक्तुं शक्नुवन्ति। तस्मिन् स्थाने शाकाहारिणां कृते पृथग् व्यवस्थाऽऽसीत्। यदा प्रथमं कश्चिन्मामुक्तवान् शाकाहारोऽप्यत्र सुलभ इति तदा विस्मितोऽहमभूवं को नामास्मिन्देशे शाकाहारः[२६९] स्यादिति। केचिन्नामात्र स्युर्भारतीया ये नाम स्युः शाकाहाराः। परन्तु गच्छता कालेन मयाऽनुभूतं यदंगुलिगण्या एव सन्ति ल्यूवेननगरे भारताभिजनाः। ये सन्ति तेऽपि केरलप्रदेशादेव। ते च सर्वेऽपि मांसाशिनः। शाकाहारिषु केवलं बेल्जियमदेशीया एव। तेषामपि भूयसी संख्येति विस्मयावहं मेऽभूत्। यदि किञ्चिच्चिरेण भोजनकक्षे गम्यते तर्हि भोज्यं निःशेषतां याति। एकदा ममाऽपि तादृशी स्थितिरभूत्। अतः कालेनैवाहं तत्रोपस्थायाभुञ्जि। एतेन योरुपभूखण्डे केवलं मासाशिन एव सन्तीति धारणा निरस्ता भवति।

अध्ययनाध्यापनयो रतस्य मे ल्यूवेननगरे व्यतियाति स्म कालः। अकस्मादेकस्मिञ्शनिवासरे आचार्यपॉलेटस्य दूरवाणीसन्देशो मया प्राप्तः।

---

२६८ Subsidized इत्याङ्ग्ल्याम्।

२६९ शाक आहारो यस्येति बहुव्रीहिः।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

सोऽवोचन्मध्येनगरं शनिवासरीयविपणिरस्त्येकायोजिता यत्रापणेषु यावदिच्छं वस्तूनि क्रेतुं शक्यन्ते किञ्चिदल्पमूल्येनैव। यदि क्रयणे नाभिलाषस्तथापि परिभ्रमणे का हानिः? आपणसमूहसज्जाऽतीव भवति सुखावहा। स्वकोष्ठकेऽहमासमेकाकी। एकाकी न रमत इति शास्त्रवचः। विपणिपरिभ्रमणव्याजेनैकाकितादंशः कलयाऽपि यदि चिकित्सितो भवति तर्हि शोभनमेव। मयोक्तम् – अवश्यं विपणिं जिगमिषामि। अयमहमागत एवेत्यभाणीदाचार्यपॉलेटः। कतिपयैः क्षणैरेव स मत्कोष्ठकं प्राप्तः। उभावप्यावां तदा विपणिं प्रति प्रस्थितौ प्राप्तौ च तां लोचनलोभनीयाम्। तत्र सद्यः सिद्धाऽऽपणसन्ततिर्नाना पण्याकीर्णा हठादाकृक्षच्चेतः। तत्रापणसमूहेऽन्तरान्तरा यात्राव्यवस्थापकानामापणा अप्यासन् यत्र महाञ्जनसम्मर्दोऽलक्ष्यत। आपणपुरोभागे न्यस्त आसीत्पत्रपूगः। तस्माज्जना अहमहमिकया पत्रमुद्धृत्य तत्प्रपूरणे व्यग्रा अदृश्यन्त। तस्मिन् पत्रे प्रश्ना आसन्नुल्लिखिताः। ते समाधातव्या आसन्। यस्तेषु सर्वेषामपि सम्यक् समाधानं कुर्वीत स प्रथमपुरस्कारभाक् स्यात्ततः किञ्चिन्न्यूनतराणां प्रश्नानां यः समाधानं कुर्यात् स द्वितीयपुरस्कारभाक् स्यादिति व्यवस्था कृताऽऽसीद् यात्राव्यवस्थापकैः। कदाचिद् वयमेव पुरस्कारभाजो भवेमेत्याशया जनाः प्रश्नावलिसमाधान आत्मानं व्यापारयन्। आचार्यपॉलेटोऽपि पत्रपूगात् पत्रमेकमुद्धृत्य तदुट्टंकितप्रश्नावलिसमाधाने प्रवृत्तः। मामपि स एतदर्थं प्राचूचुदत्। शास्त्रज्ञोऽहं विषयान्तरज्ञानगन्धिरिति प्रश्नावलिसमाधानेऽहमासं मन्दोत्साहः। परमाचार्यपॉलेटप्रेरणया तत्र प्रवृत्त एव सुतरामनिच्छया। पत्रं प्रपूर्य यात्राव्यवस्थापकहस्ते मया तत्समर्पितम्। पत्रोपरिभागे निर्धारिते स्थाने मया स्वकीयावाससंकेत आसीद् दत्तः।

## १५६

कश्चित्कालो गतः। एतद्विषयस्मृतिलोप एव मे जातः। एकस्मिन् दिने पत्रमेकं मया प्राप्तम्। डचभाषोपनिबद्धमिति तद् वाचयितुं नाहमशकम्। पत्रोपरिभागे कस्यचिद् यात्राव्यवस्थापकाभिकरणस्य[३००] नामासीन्मुद्रितम्। यात्राव्यवस्थापकाः स्वकीयाय व्यवसायप्रसारायैतादृशानि पत्राणि प्रेषयन्त्येवेत्युपेक्षाभावेन तत्पत्रं कुत्राप्यहं न्यास्थम्। भारतप्रत्यागमनवेला ममोपसीदति स्म। अल्पव्ययेन यात्रा कथं मया साध्येतेति विषये मच्चिन्तनं प्रवर्तते स्म। मयाऽऽचार्यपॉलेटेन सह चर्चा कृता। तेनोक्तमेतदर्थं यात्राव्यवस्थापकैः सह सम्पर्कः कर्तव्यः, त एवास्मिन्

---

३०० Travel Agency इत्याङ्ग्ल्याम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विषये किमपि बोधयितुं शक्ताः। तदा मयोक्तमेकस्य यात्राव्यवस्थापकस्य संकेतो मय्यप्यस्ति। तेन पत्रमेकं मयि प्रेषितमासीत्। डचभाषानिबद्धमिति तस्य वाच्यत्वासम्भवान्मया तत् कुत्रापि न्यस्तम्। तदन्विष्य श्वोऽत्रभवन्तं दर्शयिष्यामि। अपरेद्युस्तन्मया पॉलेटाय समर्पितम्। डचभाषा तस्य मातृभाषेति तस्य तद्वाचने न किञ्चिदप्यासीत्काठिन्यम्। तद्वाचयित्वा तेनोक्तम् – दिष्ट्या वर्धन्ते भवन्तः। भवद्भिः प्रथमः पुरस्कारो जितः। भवदीयानि सर्वेषामपि प्रश्नानामुत्तराणि समीचीनान्यासन्। परन्तु पुरस्कारग्रहणान्तिमतिथिर्गता। कस्मिंश्चिन्निश्चितावधावेव पुरस्कारो ग्राह्यो भवति। सोऽवधिरतिक्रान्तः। एतच्छ्रुत्वा हर्षश्च विषादश्च सममेव मे मनसि पदमधत्ताम्। पुरस्कारो जित इति प्रहर्षः, पुरस्कारग्रहणान्ति–मावधिरतिक्रान्तो येन जितोऽपि पुरस्कारो न मामको भवितुमर्हतीति विषादः। सर्वङ्कषा भगवती भवितव्यतैव। सर्वं तदधीनमेव। यावदहं विविधविचारवीचि–प्रेङ्खोलितो नैभृत्यमवलम्बे, तावत् पॉलेटोऽवोचत् – मत्पक्षतोऽहं यात्राव्यवस्थापकं पत्रं प्रेषयामि पृच्छामि च तं किं सति विलम्बेऽपि – तत्र डचभाषाऽज्ञानरूपं हेतुमप्युपन्यसिष्यामि– पुरस्कारः प्राप्तुं शक्यते वा न वा। प्रेषितं तेन पत्रम्। प्राप्तं च यात्राव्यवस्थापकादुत्तरं शक्य इति। तेन हर्षो मे द्विगुणितोऽभूत्। हस्ताच्च्युतमपि वस्तु यदा पुनर्हस्ताभ्याशमुपैति तदा जनस्य जायते विलक्षणैवानुभूतिः। अयमेवोच्यते क्षेम इति यं प्राप्तस्य रक्षणमिति व्याख्यान्ति व्याख्याकाराः।

स्वप्नेऽप्यकल्पितः पुरस्कारलाभ इति चेतःसन्तोषं जनयत्येव। आत्मन्यप्रत्यये चेतसि प्रत्ययं स जनयतीति महदुपकृतं भवति तेन। संस्कृतेऽधीतिनः शास्त्रैकचक्षुष्कस्य विषयव्यावृत्तकौतूहलस्य मम विषयान्तरज्ञानमुत्तमकोटिक–मित्यात्मबोधो मम परनिर्वृतयेऽचीक्लृपत्।

अथ कोऽसौ पुरस्कार इति जिज्ञासायाम् उच्यते – अस्ति बेल्जियमदेशे नानापादपराजिविराजितं शष्पश्यामलभूमिमण्डनायमानं प्रसादनं चेतसः सुखाकरं देहयष्टे रसायनं नयनयोः 'एर्परहाइद' इति स्थलम्। सामान्यतस्तदधिवस्तुं नानासहस्रमुद्रा भवन्ति व्ययीकर्तव्याः। तत्र सन्ति व्यायामस्थली, सततप्रवहदमल–जलप्रस्रवणानि प्रस्रवणानि, उष्णजलबुद्बुद[३०१] स्नानार्थं विशालं कुण्डम्। तत्र दिनत्रयं विना शुल्कमधिवासः कस्मिंश्चिदुटजे[३०२] इत्यासीत्पुरस्कारः। चतुर्णां जनानां कृते कृताऽऽसीत्तादृशी व्यवस्था। आचार्यपॉलेटोऽवोचदहं भवतस्तत्र प्रापयिष्यामि स्वकीयेन कारयानेन। चतुर्णां कृते तत्र व्यवस्थेति भवांश्च भवद्धर्मपत्नी

---

३०१ Bubble bath इत्याङ्ग्ल्याम्।

३०२ Cottage इत्याङ्ग्ल्याम्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

चाहं च मद्धर्मपत्नी चेति चत्वारो वयं गमिष्यामः। उटजद्वयेऽस्माकमावासो भविष्यति, एकस्मिन्नुटजे भवतोरेकस्मिंश्चावयोः।

वयं सर्वेऽपि चत्वारः परस्परेण सम्भाषमाणा हासप्रहासनिरता मध्येमार्गं क्वचित् काफ़ीपानाय विरम्य पुनर्यात्रां प्रवर्तयन्तः 'एर्परहाइद' स्थानं प्राप्ताः। तत्र पूर्वसूचनाऽऽसीदिति सर्वाऽपि व्यवस्था कृताऽऽसीदेव व्यवस्थापकैः। प्राप्तमात्रा एव वयं स्वं स्वमुटजं प्रापिताः। आचार्यपॉलेटेन बेल्जियमदेशीयेनापि न तत्स्थानं पूर्वं दृष्टमासीदिति तस्याप्यासीदेतद्विषये महत्कुतूहलम्। एवमेवासीत्तद्धर्मपत्न्या अपि। अतीव रमणीयो वनोद्देश इति तद्वीथिभ्यः सञ्चरमाणा वयममन्दमानन्द-मविन्दाम। जलबुद्बुदस्नानमननुभूतमिति तदनुभवोऽस्माकं कृते विलक्षण एवासीत्। जलं तत्र देहमर्दनानुभवमजीजनत्। तेन स्नायुतन्त्रे विश्रमजनितं सुखमन्वभूयत वाचामगोचरम्। दिनस्य द्विस्त्रिर्वा वयं तत्स्नानसुखमन्वभूम। ततो भूयोऽपि स्नानेच्छाऽस्माकमासीत्परमति सर्वत्र वर्जयेदिति न्यायमनुस्मरन्तो वयमात्मनिग्रहमेव वरममन्यामहि।

उटजे भोजनसाधनार्थं सर्वविधं सौविध्यमासीत्। आचार्यपॉलेटेन सर्वाऽपि रन्धनसामग्री समानीताऽऽसीत्। तया भोजनं साधयित्वा वयं समाशं[३०३] प्रावर्तयाम।

एवं दिनत्रयं 'एर्पर्हाइद' स्थले सुखेन व्यतियाप्य वयं ल्यूवेननगरं प्रत्यावृत्ताः। य आनन्दोऽस्माभिस्तत्राधिगतस्तस्य माध्वीकमाधुर्यधरा स्मृतिर्यावज्जीवमस्मच्चेतसि स्थास्यति।

## १५७

अन्यस्मिन्नप्येकस्मिञ्शनिवासरे, आचार्यपॉलेटानुरोधेनाहं विपणिं गतः। तदाऽपि पूर्ववन्मया पत्रं प्रपूरितम्। प्रश्नानां समीचीनोत्तरपारितोषिकरूपेण च 'जरसी'नामकमेकमूर्णावस्त्रं मयाऽधिगतम्। तद् दृष्ट्वाऽऽचार्यपॉलेटेनोक्तमासीत् – बेल्जियमप्रवासोऽत्रभवतां कृतेऽतीव मांगलिक[३०४] इति। तच्छ्रुत्वाऽहं साट्टहासमासं प्रहसितः। आचार्यपॉलेटेन पुनरप्येनं विषयं स्पृशतोक्तमासीत् – यावदायुरत्र स्थितोऽस्मि। पूरितानि पत्राणि मया नैकशः। परं नैकदाऽपि पुरस्कारो मया लब्धः। भवन्तः शास्त्रिण इति शास्त्रानुग्रहो भवत्सु। तच्छ्रुत्वाऽप्यहमासं प्रहसितः। एते हासप्रहासा मम सुखं भूयोऽप्यवर्धयन्।

---

३०३ सहभोजनमित्यर्थः।

३०४ आङ्ग्लभाषयां तेनोक्तमासीत् – Belgium is your lucky number.

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

अस्ति बैल्जियमदेशे 'एन्तवर्प' इति नाम नगरम्। तत्रत्यः काचो विश्वप्रसिद्धः। तथैवाऽस्ति तत्रत्यं रत्नादिशोधनम्। भारताद् बहुकालपूर्वं गौर्जरा धनायया[३०५] प्रणुन्नास्तत्र गतास्तत्रत्या एव जाताः। तेष्वेको धर्मदास इति नामधेयः कुतश्चिन्मत्प्रवृत्तिमुपलभ्य मामुपेतः। अवोचच्च – हिन्दूधर्मविषयेऽधीता मया नैके ग्रन्थाः। तत्स्वरूपविषयेऽस्ति मे काचन जिज्ञासा। तां भवन्त उपशमयितुं समर्थाः स्युरिति भवत उपसन्नोऽस्मि। तज्जिज्ञासा मया यथाशक्त्युपशमिता। तेन स प्रासीदत्तमां न्यमंत्रयच्च मां च मद्धर्मपत्नीं च 'एन्तवर्प' नगरागमनाय। यद्यपि तद्विषये मया बहु श्रुतमासीत् परं न दृष्टपूर्वं तदभूदिति तदर्थं ममोत्कण्ठाऽऽसीदेव। धर्मदासेन सहाहं सपत्नीक 'एन्तवर्प'नगरमगच्छमपश्यं च तन्नगरवैभवम्। स मां च मद्धर्मपत्नीं च स्वगृहमनयत् पर्यचाययच्चापि नौ स्वधर्मपत्न्या च स्वदुहित्रा च। सम्भाषणावसरे स उक्तवान् यन्मम हार्दो मनोरथो यद् एन्तवर्पविश्वविद्यालये हिन्दूधर्माध्यापनं प्रारभ्येतेति। तदर्थमहं भारताभिजनान् एन्तवर्पस्थाञ्जनान् प्रेरयिष्यामि कञ्चिद् राशिमपि सञ्चेतुं तं च निधिरूपेण 'एन्डाउमेन्ट' इति यदुच्यत आङ्ग्ल्याम्, विश्वविद्यालयाय समर्पयितुं येन हिन्दूधर्मपीठं[३०६] विश्वविद्यालये स्थाप्येत।

तस्य मनोरथः सफलो जातः। 'एन्तवर्प' विश्वविद्यालये हिन्दूधर्मपीठमस्ति स्थापितम्। तत्राचार्यपदे नियुक्तः स धर्मदास एव। न केवलं नाम्नैवापि त्वर्थेनापि स धर्मदास एव। स्वधर्मनिष्ठेन विदेशेऽपि स्वधर्मप्रचाराय प्रसाराय च यत्कृतं तेन तत्कृते स सुतरां साधुवादार्हः।

## १५८

धर्मपत्नी दिल्ल्यां कार्यरतेति तया काले काल एव मयि वस्तव्यमासीत्। अधिकांशतस्त्वहमेकाक्येव स्वं कालमत्यवाहयम्। योरूपभूखण्डेऽधिकांशतः शीतकाल एव महाविद्यालयेषु विश्वविद्यालयेषु चाध्यापनं प्रवर्तते। ग्रीष्मकाले सुदीर्घोऽवकाशो भवति यं यापयितुं देशाटनप्रियास्तत्रत्या देशाद् देशान्तरं यान्ति। केचित्तेषु काञ्चन वृत्तिमपि समुपाश्रयन्ति तया किञ्चिद् धनमुपार्ज्येत शीतकालेऽध्ययनव्ययादिवहनायेतिधिया। छात्रास्तत्रत्याः स्वावलम्बिनः। 'प्राप्ते तु

---

३०५ धनगर्धेनेऽत्यर्थः। धनाया इति डाजन्तम् अशनायोदन्यधनायाबुभुक्षा- पिपासागर्धेषु (७.४.३४) इत्यनेन निपात्यते। जीवनार्थं सत्यपि धनेऽधिकधनेच्छेत्यर्थः।

३०६ Chair in Hindu Studies इत्याङ्ग्ल्याम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

षोडशे वर्षे' पित्रोर्गृहं विहायान्यत्र कुत्रापि वसतिं कल्पयन्ति ते वृत्तिं चापि। एषा तत्रत्या जीवनपद्धतिः। मातृपितृवत्सलास्ते भवन्ति न पुनस्तन्मुखापेक्षिणः। प्रायेण स्वकीयेन वाहनेन सञ्चरन्ते जना योरूपभूखण्डे। मयि तन्नासीदिति विश्वविद्यालयपरिसरो नातिदूर आसीदिति च पादविहरणमेवाहमशिश्रियम्। मया विश्वविद्यालये सप्ताहस्य द्विस्त्रिर्वा गन्तव्यमासीत्। शेषान्दिवसानहं गृह एव स्थितिमचीक्लृपम्। आदिवसमारात्रिं च गृह एवावरुद्धस्य मे मनसि नैकदोद्वेग आविशत्। शीतप्रकोपे हिम्ये वाति भगवति नभस्वति बहिर्गमनमपि कष्टकरमभूत्। और्णवस्त्रसंवृताङ्गः प्रलम्बकञ्चुकधृक्[३०७], आजान्वौर्णामनुपदीनां[३०८] वसानो 'गम् बूट' इत्याख्योपानद्गूढपादोऽहं[३०९] यत्र कुत्रापि गन्तुमशक्तः। एकस्मिन् रविवासरे स्ववेश्मनि स्थितं मामेकाकिता तथाऽबाधत यथा हिमपाते सत्यपि बहिर्गमनेच्छा मे प्रादुरासीत् केऽपि जना मद्दृष्टिपथमापतेयुरिति। कुत्र तत्सम्भवीति चिन्तने खिस्तुधर्मावलम्बिनां मन्दिरे 'चर्च' इत्यत्र सम्भवीति तत्प्रति प्रस्थितः। तत्रासन्केऽपि जना जरठा एव। नैकोऽपि तेष्वासीद् युवा। तेषामपि सङ्ख्याऽऽसीदल्पीयस्येव। निमीलिताक्षा धर्मस्थलमिति नैभृत्यमवलम्बमानाः प्रभुध्यानपरायणास्तेऽलक्ष्यन्त। चर्चस्थले न कोऽपि केनापि सम्भाषां प्रवर्तयति। पुरोहितस्तत्र भवति प्रवचनरतः। प्रवचनं तस्यासीद् डचभाषयैव यस्याक्षरज्ञानमपि मे नासीत्। जनानामाकृतिं पश्यामीत्येव मे सन्तोषमजनयत्। तदाऽभून्मे मनसि मादृशानां जनानां मनःस्थितिमनुमित्यैव प्रवृत्तं स्याच्छ्रुतिवचः – सङ्गच्छध्वं संवदध्वमिति।

षण्मासान् यावदेव मे ल्यूवनस्थकैथोलिकविश्वविद्यालये नियुक्तिरासीत्। तान् मासांस्तत्र व्यतियाप्याहं भरतभुवं प्रत्यापन्नः। इदं मे महते सुखायाभूद्यत्तत्र–त्याश्छात्रा मय्यतितरामस्निह्यन्। तेषामद्यापि स्मरामि।

कतिचिन्मासानन्तरं कैथोलिकविश्वविद्यालयेन मदीयं तत्रत्यकार्यमुत्कृष्ट–तममिति परिगणयता स्वर्णजयन्तीवर्षमिति तत्समारोहावसर एव मानदपदकं मह्यं प्रदीयेतेति कृतो निश्चयः। स्वर्णजयन्तीभाषणं मयोपस्थातव्यमिति चापि कृतो निश्चयः। तन्मया तत्र प्रवर्तितम्। यथाऽहं स्मरामि आग्नेयैशियादेशेषु भारतीयसंस्कृतेः प्रभाव इति विषये मयाऽऽसीद् भाषितम्। अध्यर्धहोरां यावत् प्रवहन्नदीजलधारेव प्रावर्तत मे वाग्धारा। पाश्चात्यपद्धतिमननुसृत्य स्वतन्त्ररूपेणैव, वाचिकमेवोक्तं मया न स्वं वचो लिपिबद्धतामासीन्नीतम्। मन्त्रमुग्धा इव सर्वेऽपि श्रोतार एकतानेन मनसा मद्वचोऽश्रौषुः। चित्रलिखितमिव तदा प्रत्यैयत सभागारम्।

---

३०७ Overcoat इत्याङ्ग्ल्याम्।

३०८ Woollen socks इत्याङ्ग्ल्याम्।

३०९ 'उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः' इतिवत् प्रयोगः।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

१९८४ वर्षे मईमासे बेल्जियमदेशीयं स्वं कार्यं परिसमाप्याहं दिल्लीं प्रत्यावृत्तः प्रारब्धं च पुनः कार्यं मया दिल्लीविश्वविद्यालये। तदानीं विभागाध्यक्षपद–परिवृत्तिक्रमो[३१०] विश्वविद्यालये प्रारब्धोऽभूत्। केवलं वर्षत्रयावधिकमेव कालं कश्चिद् विभागाध्यक्षपदमध्यास्तुं शक्तोऽभूत्। समाप्ते तदवधौ केनाप्यन्येन पदमिदध्यासितव्यमभूत्। यस्मिन् विभागे एकाधिका आचार्या अभूवंस्तस्मिन्ननुज्येष्ठं विभागाध्यक्षपदं तेषु केनाप्यध्यासितव्यमभूत्। यत्र पुनरेक एवाचार्यपदभाग् आसीत् तत्राध्यक्षपदमुपाचार्योऽध्यगच्छत्। एवं सतापि ज्येष्ठेन वरिष्ठेन तेनाचार्येणो–पाचार्याधीनं कार्यं कर्तव्यं बभूव। सैषा पद्धतिरद्यावध्यपि प्रचलति।

सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः[३११]। अध्यक्षपदपरिवृत्तिपद्धत्यां गुणा अपि दोषा अपि। वरिष्ठा आचार्या प्रबन्धादिकार्यविरताः सर्वात्मनाऽऽत्मानं शास्त्रशीलनकर्मणि ग्रन्थादिप्रणयने वा व्यापारयितुं भवन्ति क्षमाः। यो नाम तेषां कालो व्यापारान्तरेण व्यर्थतां गच्छति तमध्ययनाध्यापनादिकर्मण्येव विनियोक्तुं ते कालं लभन्ते। दोषः कदाचिदवरकोटिकानामवमाननाभाजनता तेषामध्यक्षपदालङ्–कृतिजनिता। यतो ह्यध्यक्षपदकालः केवलं त्रीणि वर्षाणि यावदेवातो यद्यत्कार्यं पूर्वाध्यक्षेण प्रारब्धं वा प्रारिप्सितं वा तदुदये[३१२] तदुत्तरवर्त्त्यध्यक्षो यदि रुचिं न दधाति तदा न तदुदयं याति। एतेन कृतोऽपि यत्नो व्यर्थतां गच्छति। मद्विषय एवं वृत्तमपि। याऽनुसन्धानपत्रिका 'इण्डोलौजिकल स्टडीज़' इति नाम्ना मया प्रारब्धा साऽस्तङ्गता विश्वविद्यालयतो मदपगमात्, मदुत्तरवर्तिनां तत्रारुचेर्वोत्साहाभावाद्वा। बहु कार्यं कर्तुं शक्यते विभागे परन्तु नैव क्रियते तदेव दुःखाकरोति चेतः। महीयानयं विभागः। सन्ति विश्वविद्यालये लघुतरा अपि विभागाः। लघुतरा इत्युक्तेऽल्पीयांस एव तत्राध्यापका, अल्पीयांसश्शोधछात्रा अल्पीयांसश्च स्नातकोत्तरकक्षाध्येतारः। मदध्यक्षत्वकाले शतद्वयी संस्कृतप्राध्यापकानामासीद् विश्वविद्यालयस्नातकोत्तरविभागीयान् तत्तन्महा–विद्यालयप्राध्यापकान् – दिल्लीविश्वविद्यालयस्यैतद् वैशिष्ट्यं यत्तत्र महाविद्यालया अपि विश्वविद्यालयाङ्गभूता अधिकांशतो न तु विश्वविद्यालयसम्बद्धा एव, तत्रत्याः प्राध्यापका अपि विश्वविद्यालयस्नात्तकोत्तरकक्षा अध्यापयन्ति – पञ्चाशत् एम्. फिल्. छात्राः, शतद्वयी च पीएच्. डी. छात्राणाम्। एवं संहत्य

३१० Rotation इति यदुच्यत आङ्ग्ल्याम्।

३११ श्रीमद्भगवद्गीता, १८.४८

३१२ उदयः = फलसिद्धिः, रघुवंशीय 'आरम्भसदृशोदयः' (१.१५) इतिवत् प्रयोगः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पञ्चाशदुत्तराष्टशतमिता सङ्ख्याऽऽसीत् तदानी संस्कृतविभागे। प्रजातन्त्रयुगे सङ्ख्याया अपि महत्त्वं भवति। अधिका सङ्ख्या चेदधिकः समादरः। सत्यामप्येतावत्यां सङ्ख्यायामत्यल्पा सङ्ख्यैव तत्प्रणीतानां निबन्धानां ग्रन्थानां वा। एकदाऽहं कमप्युक्तवान्– अस्ति शतद्वयं संस्कृतप्राध्यापकानां दिल्ली–विश्वविद्यालये। यदि तेषु प्रत्येकं संकल्पमारोहेद्यदहं प्रतिवर्षं यस्मिन् कस्मिन्नपि स्वरुच्यनुकूले विषये दशपृष्ठात्मकं निबन्धं विरचयेयं यत्र स्वोपज्ञं किञ्चिन्निरूपितं वोद्भावितं वा स्यात्तर्हि सहस्रद्वयपृष्ठात्मिका सामग्री विद्वद्धस्तगता स्यात्। एवं पञ्चभिर्वर्षैर्दशसहस्रपृष्ठान्तर्भूतो ज्ञानराशिः समुपलब्धिविषयतां गतः स्यात्। तेन कियन्नोपकृतं स्याज्जिज्ञासूनाम्। परमेतदपि न कोऽपि चिकीर्षति, दशपृष्ठमात्रं स्वबुद्धिविभवप्रभवं निबन्धमपि न स रिरचयिषति, कार्यान्तरेष्वात्मानं व्यापारयति न तु ज्ञानार्जने तदुपबृंहणे वा, यद्यप्ययमध्यापकस्य प्रथमः कल्पः। न केवलं कक्षा एवाध्यापनीयास्तेनापि तु शास्त्राण्यपि शीलनीयानि, तद्रहस्यमप्युद्भेद्यं, यत्तत्रोक्तं तदपि गुणदोषतः परिच्छेद्यं, स्वोपज्ञाः शास्त्रसिद्धान्ता अप्याविष्करणीयाः। राधाकृष्णन्विश्वविद्यालयायोगेन यदुक्तं तत्सदैव मनसिकरणीयम्– सफलः/उत्तमः प्राध्यापकः स्यामिति प्राध्यापकेन किञ्चिदनुसन्धानकार्यमपि करणीयं, सफलोऽनुसन्धाता स्यामिति किञ्चिदध्यापनकार्यमपि करणीयम्। उभयोरप्य–विनाभावसम्बन्धः। अध्यापनं चानुसन्धानं चेत्युभयोरपि सहप्रवृत्तिः परस्परश्रेयसे। अत्र कश्चन गूढोऽभिसन्धिः। यदि प्राध्यापकः किञ्चिन्नूत्नं चिन्तयति तत्स्वशिष्यान् सङ्क्रमय्य तान् नूत्नां दिशं निर्दिशति, तेऽपि तद्वन्नूत्नचिन्तनोन्मुखा भवन्ति। प्रथमं तेनाऽऽत्मा तथा कल्पनीयो येन शास्त्रस्थं ज्ञानं तच्छ्लिष्टं स्यात्। यथा चिन्तनेन ज्ञानस्य नवनवोन्मेषस्तथाऽध्यापनेनापि। अध्यापनकाले छात्रा विषयं भवन्ति सम्यगवबोध्याः, तत्प्रतिपादनकाले किञ्चिन्नूत्नं समुन्निषेत्प्राध्यापकस्येति प्रकाशम्। वाक्यानि पदानि वा भवन्ति स्पष्टीकरणीयानि प्राध्यापकेन। तत्स्पष्टीकरणार्थं तेन बहु चिन्तनीयं भवति। तच्चिन्तनमनुसन्धानकर्मणि प्रेरयति प्राध्यापकम्। अतोऽध्यापनमनुसन्धानकर्मणि सहायम्। सुष्ठूक्तं तेन राधाकृष्णन्विश्वविद्यालयायोगेन। यदनुसन्धानकौशलमात्मन्यापिपादयिषुणा किञ्चिदध्यापनीयमपि। मया तु नैकश इदमनुभूतं विशेषतः काव्याध्यापनकाले। स्थालीपुलाकन्यायेनात्र समासेन किञ्चिन्निर्दिदिक्षामि। यदा कदैव मया काव्याध्यापनावसरो लब्धः। यदा लब्धस्तदा नानाशङ्काभिरहमाकुलीकृतः। कालिदासो हि मे प्रियः कविः। अतस्तद्विषयकमेवात्र किञ्चिदुद्धरामि। ट्यूबिङ्गनप्रवासकाले रघुवंशमहाकाव्यस्य केचनांशा मया अध्यापिताः। तत्र प्रथमसर्गे महाकविना दिलीपमुखेन महर्षिर्वसिष्ठ उक्तः –


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तव मन्त्रकृतो मन्त्रैर्दूरात् प्रशमितारिभिः।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः॥[313]

एवमेव पञ्चमसर्गे रघुमुखेन कौत्स उक्तः –

अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धिः कुशली गुरुस्ते।[314]

उभयत्रापि महाकविना ऋषयो मन्त्रकृत उक्ताः। भारतीयपरम्परानुसारेण ते हि मन्त्रद्रष्टारो न तु मन्त्रकर्तारः। तेषां मन्त्रकर्तृत्वे मन्त्राः पौरुषेयाः स्युः। अपौरुषेयास्त इति च परम्परा। तेषाम् ऋषिकर्तृकत्वे परम्परायाः अस्या व्युच्छेद एव स्यात् यो न सम्भाव्यते कालिदाससदृशे, कविषु कनिष्ठिकाधिष्ठिते, महाकवौ। प्रश्नोऽयं मे मनसि पद्ययोरेनयोरध्यापनकाल एव समुपस्थितः। समाधानमस्याद्यापि न मे स्फुरति। अनायासेनैव महाकविर्मन्त्रकृत इत्यस्य स्थाने मन्त्रदृश इति मन्त्रकृतामित्यस्य स्थाने च मन्त्रदृशामिति प्रयोक्तुमशक्ष्यत्। यतिभङ्गोऽपि तेन नाभविष्यत्। तर्हि कुतस्तेन समाश्रितो वक्रः पन्थाः?

एवमेव ल्यूवेननगरे कैथोलिकविश्वविद्यालयेऽभिज्ञानशाकुन्तलाध्यापनकाले नान्दीपद्य एव प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीश इति पद्यांशे प्रपन्नपदप्रयोगो महति संशये मां निपातितवान्। प्रपन्न इत्यस्य शरणागत इत्यर्थः। प्रपत्तिः शरणागतिः। अत्र ईश एव प्रपन्न इत्युक्तः। प्रपन्न इत्यस्य संयुक्त इति यद्यर्थः कल्प्येत तर्ह्येव प्रश्नोऽयं यथा कथञ्चित्समाहितो भवेत्। यद्ययमेवार्थोऽभिप्रेतो महाकवेस्तर्हि कथं न स तम् एव वा तादृशमन्यमेव वा पदं प्रायोक्ष्यत? किमत्रोद्भावयितुं शक्यते यदत्र मूलपाठः प्रपन्नांस्तनुभिरवतु वस्ताभिरष्टाभिरीश इत्यासीत्। तदा प्रपन्नान् वः अष्टाभिस्तनुभिरवतु इत्यन्वयो भवेत्।

एकोऽन्योऽपि प्रश्नोऽध्यापनकाल एव मे मनसि समुत्थितः। कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् इति रघुवंशपद्यांशे गौरपदस्य किमौचित्यम्। किमस्य स्थाने तुङ्गपदस्य नौचित्यम्? वृषस्तुङ्ग इति तदारोहणार्थं पीठस्यावश्यकता भवति। गौरत्वेन पीठस्य किं सामञ्जस्यम्? एतादृशा नाना प्रश्ना कक्षाऽध्यापनकाले स्फुरन्ति। अतोऽनुसन्धानक्रियायां कक्षाध्यापनस्य महत्त्वं स्वतः सिध्यति।

---

३१३ पद्यम् ६१
३१४ पद्यम् ४


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

एतावत्पर्यन्तमात्मनो विषय एव प्रवर्तितो मया गीष्प्रसरः। सम्प्रति विपृचरणानां विषये किञ्चिद्वक्तुमिच्छामि। तैर्नाना व्याकरणग्रन्था प्रणीताः। तेषु विशेषोल्लेखमर्हन्ति व्याकरणद्वादशाध्यायी, उपसर्गार्थचन्द्रिका, व्याकरणचन्द्रोदयश्चेति त्रयः। उपसर्गार्थचन्द्रिका व्याकरणचन्द्रोदय इति द्वौ बृहत्कलेवरौ। एतयोः प्रत्येकं पञ्चखण्डात्मकः। उपसर्गार्थचन्द्रिकायाः पृष्ठसंख्या १२०० अस्ति व्याकरण-चन्द्रोदयस्य च २३३२। आह्निकत्रयपर्यन्तं नवाह्निकपर्यन्तं च महाभाष्यमपि तैर्हिन्द्याऽनूदितं विशदं व्याख्यातं च। सर्वेऽपीमे ग्रन्था हिन्दीभाषयैव। १६८६ वर्षे तेषां मनसि समुदितो विचारो यत्तैराङ्ग्लभाषयाऽपि व्याकरणग्रन्थः कश्चन निबद्धव्य इति। प्रथमं कारक-समास-प्रकरणव्याख्या तैराङ्ग्ल्या प्रस्तुता। कालान्तरे प्रकरणान्तराण्यपि तैराङ्ग्ल्या व्याचिख्यासितुमिष्टान्यासन् यद्यप्येतद्विषये निश्चयेन न किञ्चिद् वक्तुं शक्नोमि। यथाऽहं स्मरामि यत्तद्विषये न तैः मयि शब्दतः किञ्चिदुक्तम्। कारकसमासप्रकरणयोर्व्याख्यायां पूर्णायां यत्र सूत्रोदाहरणानि तैः संस्कृतवाङ्मयाद्विचायं विचायं प्रस्तुतानि ते मामचकथन् – किं नामास्य ग्रन्थस्य भवेत्। मया तत्कालमेवोक्तम् – पाणिनेः (पाणिनिव्याकरणस्येत्याशयः) पुनर्व्याख्यानमिति (Pāṇini Reinterpreted)। अहो! अतिशोभनमिदं नाम। सद्यः स्फुरितं तव। वाग्देव्याः प्रसाद एवायम्। इदमेव स्वीकरोमि। यतो ग्रन्थः पूर्ण आसीदतस्तैर्मद्धर्मपत्नीमाहूयोक्तम् – उपेहि मोतीलालबनारसीदाससंस्थाध्यक्षं प्रकाशं समर्पय च तस्मै ग्रन्थपाण्डुलिपिम्। तया तथैव कृतम्। ततः परतरे दिने तेऽवोचन् ग्रन्थपरिचयो, ग्रन्थकारपरिचयोऽपि मयोपस्थापयितव्यः। विशिष्टशब्द-सूच्यपि निर्मातव्या। पुरोवाग[३१५]पि सन्दृब्धव्या। तदपि तावत् करोमि। द्वित्रैरेवाहोभिस्तत्तैः साधितम्। तदा पुनर्मद्धर्मपत्नीमाहूय तैरुक्तं – उपेहि मोतीलालबनारसीदाससंस्थाध्यक्षं समर्पय च तस्मै सर्वमिदमिति। तया तथैव कृतम्। एतत्समर्पणकतिपयदिनानन्तरमेव ते ब्रह्मभूयं गताः।

मासद्वयानन्तरं प्रकाशः (मोतीलालबनारसीदाससंस्थाध्यक्षः) दूरवाणीमाध्य-मेन मामुक्तवान् – ग्रन्थस्यास्य पुरोवाक् सदृब्धव्या, शब्दसूची निर्मातव्या, ग्रन्थपरिचयो ग्रन्थकारपरिचयश्च भवद्भिः प्रस्तोतव्याविति। मयोक्तम्– एतत्सर्वं पितृपादैः कृतमेवाऽऽसीत्। स उक्तवान्– तत्त्वासीदेव, परं सम्प्रति तत्कुत्रास्तीति न ज्ञायते। अस्माकं यो मुद्रणालयाध्यक्ष एतद्विधं कार्यमवेक्षते स्म स इतोऽपगतः। तेनैव कुत्रापीदं न्यस्तं भवेत्। सम्प्रति नोपलभ्यते। अतो भवद्भिरेवैतत्सर्वं करणीयं भवेत्। एतच्छ्रुत्वाऽहं महतीं चिन्तामापन्नः। मन्युश्चाविशन्मे तस्मिन् येन सिद्धमपि

---

[३१५] Preface इत्याङ्ग्ल्याम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

सर्वमसिद्धतामापादितम्। मुद्रणालयाध्यक्षस्तिष्ठतु वा गच्छतु वा। किं न एतेन? सर्वाऽपि सामग्री प्रकाशहस्तं प्रापिताऽऽसीत्। कि मुद्रणालयाध्यक्ष इमां स्वेन सहैव नीत्वाऽपक्रान्तो भवेत्? किञ्च, यत्र कुत्रापि स भवेत्तत आकार्य यत्रापि तेनेयं न्यस्ता भवेत्ततः प्राप्तव्या भवेत्। अहं संस्कृतेऽधीती तत्रापि च व्याकरणशास्त्र इत्यन्यदेतत्। यत्पितृचरणाः कर्तुमशक्नुवन्यथा वा नाहं तद्वा तथा वा कर्तुं शक्तः। नहि कोऽपि तेभ्यः प्रति[३१६] भवितुमर्हति। आत्मा वै जायते पुत्र इत्यात्मजरूपोऽहं पुत्रोऽपि। अत्र बाणभट्ट–भूषणभट्टावुदाहरणम्। यद्यपि भूषणभट्टेनापूर्णा कादम्बरी पूर्णतां नीता स्वपितृशैलीमनुसरता – तन्निर्मितोंश उत्तरभाग इत्युच्यते– तथाऽपि बाणनिर्मिते पूर्वभागे तन्निर्मिते चोत्तरभागे किञ्चिदन्तरमस्त्येव। किञ्च, यदि मया संस्कृतं नाधीतमभविष्यत्तत्रापि च व्याकरणशास्त्रं, तर्हि कथं दुःसाधं कर्म करणीयमभविष्यत्। अत्र मत्कुटुम्बकमेवोदाहरणम्। मत्सुतः शरच्चन्द्रो विश्वकर्मशास्त्रे[३१७] प्रवीणः। संस्कृतं न स जानातीति न। पूर्वे वयसि पितामहचरणैः संस्कृतं शिक्षितोऽसौ परं कालान्तरे विश्वकर्मशास्त्र एव कृतस्तेन परिश्रमः। अतस्तस्य संस्कृतज्ञानं नातिगहनम्। अतो ये ये ग्रन्था ममापूर्णास्तांस्तान् पूर्णतां नेतुं दिवारात्रं श्राम्यामि। मयि लोकान्तरं गते तेऽपूर्णा एवं तिष्ठेयुर्विपरिलोपं वा गच्छेयुः। नहि तस्य सामर्थ्यं तान् पूर्णतां नेतुम्। पाण्डुलिपयोऽपि मदपूर्णग्रन्थानां कुत्र न्यस्ता इत्यस्यापि ज्ञानं तस्य न भवेत्।

सर्वं भवद्भिरेव कर्तव्यं भवेदिति प्रकाशेनोक्ते कर्मण्यहमस्मिन्नात्मानं व्यापीपरम्। ग्रन्थविषये, ग्रन्थकर्तृविषये लेखनं न मे दुष्करमासीत्। मन्ये पितृचरणा अपि तथा लेखितुं नाशक्ष्यन्। ते जीवलोके न स्थिता इति तान् प्रति तेषां ग्रन्थं प्रति च भावोद्रेकविशेषो मत्पङ्क्तिषु समुल्लसति। शब्दसूचीकरणमपि मत्कृते न न कठिनमासीत्। परन्तु ग्रन्थपुरोवाङ्निबन्धनं त्वसम्भवमेवासीत्। तत्र ग्रन्थकर्ता स्वग्रन्थविषये यच्चिन्तनं तस्य भवति, तत् प्रस्तोतुमिच्छति, तत्सर्वं तत्र समाहितं भवति। कथमन्यस्तत्प्रस्तुयात्। उपायान्तराभावादहं स्वमत्र कर्मणि व्यापीपरं परन्तु प्राग्वच, इति तस्मै नाम नादामपि तु किञ्चित्प्रारम्भिकमित्येवए Imprimis, तदभ्यधाम्। तत्र विस्तरेण मया ग्रन्थप्रतिपाद्यं प्रास्तावि। एवं सर्वस्मिन् कार्ये साधिते स ग्रन्थो लोकालोकोऽचल इव प्रकाशानवधानतया पूर्वं प्रकाशश्चाप्रकाशश्च प्राकाश्यं गतो लोकेन च सुतरामभिनन्दितः।

---

३१६ प्रतिः प्रतिनिधिप्रतिदानयोः (१.४.९२) इत्यनेन कर्मप्रवचनीयसञ्ज्ञायां प्रतिनिधिप्रतिदाने च यस्मात् (२.३.११) इत्यनेन पञ्चमी।

३१७ Engineering इत्याङ्ग्ल्याम्। थाईभाषायाम् अयमेव शब्दः सम्प्रत्यपि प्रयुज्यते जनेन।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

ग्रन्थपाण्डुलिपितत्सम्बद्धान्यसामग्रीसमर्पणदिनद्वयानन्तरमेव पितृचरणा ब्रह्मभूयं गता इति पूर्वमुक्तमेव। यस्मिन् दिने तैर्जीवलोकः परित्यक्तस्तस्मिन् दिने किञ्चिद्विचित्रमिवाघटत। तस्मिन्नेव दिने पट्वालयस्थ[३१९]पंजाबी विश्वविद्यालयेन स्वकीये संस्कृतविभागे प्राध्यापकनियुक्त्यर्थं चयनसमितेरधिवेशनं निर्धारितमभूत्। अहं च स्थापित आसं सदस्यत्वेन तत्र। नानादिनपूर्वं विश्वविद्यालयेनोप–स्थितिसहमतिसूचनार्थं मयि पत्रं प्रेषितमासीत् स्वीकृतिमद्य प्रेषयिष्यामि श्वो वा प्रेषयिष्यामीति व्यतियातानि बहूनि दिनानि न च मया स्वीकृतिः प्रेषिता। नैव मयैवं कदापि कृतम्। विश्वविद्यालयपत्रप्राप्त्यव्यवहितानन्तरमेव स्वीकृतिं प्रेषयामि। नैतादृशेषु कार्येषु विलम्ब उचित इति मे दृढा मतिः। परं तदा नैवं मया प्रवृत्तम्। तत्कुत इति नाद्यापि जानामि। अवश्यभव्येष्वनवग्रहग्रहा यया दिशा धावति वेधसः स्पृहा। तृणेन वात्येव तयाऽनुगम्यते जनस्य चित्तेन भृशावशात्मना[३२०] इति महाकविश्रीहर्षवचः। भवितव्यतानुविधायीनीन्द्रियाणि चेति महाकविकालिदास[३२१]वचः। यस्मिन् दिने पंजाबीविश्वविद्यालये साक्षात्कारः कल्पित आसीत्तस्मिन्नेव दिने जातः पितृचरणानां गोलोकवासोऽपि। अतस्तन्निष्ठोऽहं कथं तस्मिन् दिने तत्तो दूरेऽभविष्यम् केनापि देवेन हृदि स्थितेन निरुद्धोऽहं विश्वविद्यालयं प्रति पत्रप्रेषणादपि, स्वीकृतेस्तु का नाम कथा!

मध्याह्नकाल आसीद्यदा पितृचरणाश्चिरनिद्रां गताः। भुक्तास्ते[३२२] वक्षसि कञ्चन दाहमनुभवामीत्युक्तवन्तः। तदानीं ते दीर्घामेकामासन्दीं शयनोपयोग–योग्या[३२३] मधिशयिताः। हृद्गतिरोधो न भवेदिति तद्देशे मृदुहस्तेन मर्दनमप्यकारि मया तच्छिरः स्वाङ्के धारयता। तदैव चक्षुःपरिवर्तस्तेषां शनैः प्रारब्धः। तदोमिति तैरुच्चारितं त्यक्ताश्च प्राणाः। पुत्रवत्सला मदेकपुत्रास्ते ममैवाङ्के प्राणानत्याक्षुः।

यस्मिन् दिने ते ब्रह्मभूयं गतास्तस्मिन् दिने किञ्चिद्विचित्रमिव संवृत्तम्। मत्स्वसा या तदानीन्तनादस्मद्गृहाद् दूरे वसति स्म साऽपि चिराय पितृचरणा दृष्टास्तेषां कीदृशी स्वास्थ्यस्थितिरिति ज्ञातुं कयाऽप्यन्तःप्रेरणयाऽकस्मात्तत्रोपेता। एवमेवोपेता मम पत्न्या ज्येष्ठभगिनी। एवं सर्वेऽपि कुटुम्बिजनास्तान् परिवार्य स्थिता अभूवन् यदा ते पुण्यजितॉंल्लोकान् गताः। सर्वैरपि भुक्तमप्यासीद् यदा

---

३१९ पटियाला इति लोकभाषायाम्।

३२० नैषधीयचरितम्, १. १२०।

३२१ विक्रमोर्वशीयम्, तृतीयोऽङ्कः, मिश्रविष्कम्भकः।

३२२ भुक्तमेभिरित्यर्थः। अर्श आदिभ्योऽच् (५.२.१२७) इत्यनेनाच्प्रत्ययः।

३२३ Reclining chair इत्याङ्ग्ल्याम्।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

ते दिवंगता इति पूर्वमुक्तमेव। प्राणत्यागो यदा कदाऽपि सम्भाव्यते दिवाऽपि रात्रावपि। रात्रौ सर्वेषामपि कुटुम्बिजनानामसौविध्यं भवत्येव। परमन्तकाले परमसात्त्विकैस्तैर्न कोऽप्यसौविध्यमापादितः। अपत्यद्वयमपि तेषाम्– अहं च मत्स्वसा च– तान् निकषाऽऽस्ताम्। उभावप्यावां स्नेहपरिवाहिणा चक्षुषा परिष्वज्य ते दिवं गताः।

अहमासं तेष्वनुरक्तस्तद्भक्तः। ते हि मे न केवलं पितरोऽपि तु प्रथमगुरवोऽपि। गोलोकप्रस्थानात् पूर्वं नाना मासानेकतानेन मनसा ते मया सेविताः। प्रत्यूषेऽहमेव बृहच्चमसपरिमितं 'डेक्स आरेंज' इत्याख्यं शक्तिवर्धकमासवं स्वहस्तेन तानपाययम्, स्वयं च पयः श्रपयित्वा[३२४] स्वहस्तेन तान् पर्यवेविषम्। वाचंयमास्ते न वाचा किमप्यब्रुवन्। मन्ये, आशीर्भिर्विर्धितः स्यामेव तैः। तासामेव फलं यदहं लोकवत्सलतां गतस्तत्सम्भावनां च। तद्वियोगेन तथोद्विग्नचेता अहमभूवं यथा चिरकालमहं नात्मानमासं सन्धारयितुं क्षमः। अन्धतमसेनावृतमिव सर्वं जगदिदमहमदर्शम्[३२५]। न मे पाणिपादं[३२६] प्रासरत्।

# १६२

यथा यथा तेषां महाप्रयाणवृत्तान्तो जनैरधिगतस्तथा तथा तैः शोकसंदेशः प्रेषितः। सर्वप्रथमः शोकसंदेशः महाप्रयाणानन्तरवर्तिन्यां रात्रौ द्वादशवादने तारमाध्यमेनाधिगतः। स च स्वामिनाम् अखण्डानन्दसरस्वतीपादानाम् आसीत्। तत्र तैरुक्तमासीत् अद्य व्याकरणसूर्योऽस्तं गतः[३२७]। येषामपि पितृचरणसुहृदां शिष्याणां वा शोकसन्देशो मयाऽधिगतः तान् प्रति मया तत्पत्रप्राप्तिसूचकं पत्रं प्रेहितम्। तत्र मम भावोद्रेको मयाऽभिव्यञ्जितः। २४.४.१९८७ दिनाङ्के आचार्यदिवाकरदत्तशास्त्रिणं प्रति प्रेषिते पत्रे मया तदानींतनी मनोदशैभिः पद्यैरभिव्यञ्जिता –

---

३२४ श्रा पाके इत्यस्य णिचि रूपम्। क्षीरस्य पाकार्थं श्राधातुप्रयोग एव व्यवहारसंमतः। तत्र च शृतं पाके (६.१.२७) इति सूत्रं प्रमाणम्। अनेन क्षीरहविषोः पाके शृतशब्दस्य निपातनम्। Boiling इति यदुच्यत आङ्ग्ल्याम् तदर्थमस्य धातोः प्रयोगः।।

३२५ ऋदृशोऽङि गुणः (७.४.१६) इत्यनेन गुणः।

३२६ द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् (२.४.२) इत्यनेनैकवद्भावः। स नपुंसकम् (२.४.१७)। इत्यनेन च नपुंसकलिङ्गता। पाणी च पादौ च इत्यर्थः। समाहारे द्वन्द्वः।

३२७ आज व्याकरण का सूर्य अस्त हो गया।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

यावज्जीवं समाराध्य शब्दब्रह्म विशेषतः।
तातपादा अन्तकाले तत्रैव विलयं गताः।।
अनाथं संस्कृतजगदनाथा च सरस्वती।
अनाथं चापि वैदुष्यमनाथा प्रतिभाऽपि च।।
तादृशेऽथ महाभानावस्ताचलमुपेयुषि।
तामिस्रमिव भात्येतज्जगत्कृत्स्नं चराचरम्।।

१४.४.१९८७ दिनाङ्क एव मया मन्नामराशिं श्रीगंगानगरस्थं डा. सत्यव्रतवर्ममहाभागं पत्रमासीत् प्रेषितं तत्पत्रप्रतिवचोरूपेण। तदप्यत्रोद्धरामि–

धन्यास्ते ऋषयो लोके शास्त्रनिर्मलबुद्धयः।
नास्ति येषां यशःकाये जरामरणजं भयम्।।
पितृपादा विहायास्मानश्रुपूर्णाकुलेक्षणान्।
विसृज्य पार्थिवं कायं यशःकायं समाश्रिताः।।

एवमेवोद्धरामि ११.५.१९८७ दिनाङ्के डा. कपिलदेवद्विवेदिमहाभागं प्रति प्रेषितं पत्रम्–

शब्दब्रह्मणि लीनास्ते सततं तदुपासकाः।
जन्म ह्यपुनरावृत्त्यै भवत्येतादृशां किल।।
सारस्वतान् ब्रह्मलीनान् अशोच्यांस्तान् विदन्नपि।
शोकतप्तो भवाम्येव तत्स्नेहात्प्राकृतो यथा।।
भवादृशानां बन्धूनां स्निग्धानां सान्त्वनाशतैः।
यथाकथञ्चिदात्मानं पर्यवस्थापयाम्यहम्।।

एवमेवोद्धरामि ११.६.१९८७ दिनाङ्के डा. रामकरणशर्ममहाभागं प्रति प्रेषितं पत्रम्–

शब्दब्रह्मणि लीना मे पितरस्तदुपासकाः।
विदन्नपीदमस्म्येव शोकसन्तप्तमानसः।।
मधुराः स्मृतयो नैका मथ्नन्ति मम मानसम्।
तेषां मदेकपुत्राणां मयि स्नेहः परोऽभवत्।।
सर्वं शून्यमिवाभाति तदभावे जगन्मम।
स्नेहप्रवृत्तिरेवैवं दर्शिनीति भवेन्ननु।।
यथाकथञ्चिदात्मानं पर्यवस्थापयाम्यहम्।
लौकिकी रीतिरेषा हि तां लोको नातिवर्तते।।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

बहु परिश्रान्तं तैश्शब्दशास्त्रे समुपार्जितं च हस्तावचेयं यशः। यत्र यत्राहं गच्छामि लोकेनोद्गीयमानं तद्यशः शृणोमि। महाराजरघोर्यशोविषये यदुक्तं कालिदासेन तन्मत्पितृचरणविषयेऽपि चरितार्थतां याति–

आरूढमद्रीनुदधीन् वितीर्णं
भुजङ्गमानां वसतिं प्रविष्टम्।
ऊर्ध्वं गतं यस्य न चानुबन्धि
यशः परिच्छेत्तुमियत्तयाऽलम्।।[328]

## १६३

२०१४ वर्षे फर्वरीमासस्याष्टादशाद् दिवसाद् एकविंशं दिवसं यावदहं केरलेष्वासम्। तत्र विंशे दिने राष्ट्रियसंस्कृतसंस्थानस्य गुरुवायुरपरिसरे मम व्याख्यानमासी–दायोजितम्। तस्मिन्नवसरे नाना तत्रत्यैरध्यापकैर्वाचिकी मे सभाजना कृता। तत्र बालमुरुकानाम्ना न्यायविभागीयेन प्राध्यापकेन मत्पितृचरणसभाजनामाध्यमेन मदीया सभाजना प्रस्तुता। तैर्मद्विषय उक्तम् – इमे महावैयाकरणानां पण्डितचारुदेवशास्त्रिणामात्मजाः। संस्कृतवाग्व्यवहारनिर्णये त आसन् प्रमाणभूता आचार्याः। एतद्दृष्ट्या तेषां वाग्व्यवहारादर्शनामा ग्रन्थोऽद्वितीयः। तत्र शिष्टसम्मतः संस्कृतवाग्व्यवहारः सोदाहरणं निरूपितः। डा. बालमुरुकाविद्वद्भिरस्य ग्रन्थस्य प्रारम्भ एव यो विषयः स्पृष्टस्तातपादैस्तमेवाधारीकृत्य स्वं वच उपन्यस्तम्। ग्रन्थस्य तृतीये पृष्ठे तातपादैरुक्तम् – यद्यप्यन्वयवन्त्यर्थवन्ति च पदानि वाक्यं भवति तत्रैकेन तिङन्तेन भवितव्यमिति नियम्यते। तच्च तिङन्तं पदं न सर्वत्र श्रूयते, क्वचिद् गम्यते चापि .......... क्वास्य परिहारो न केवलं वाक्यदुष्टये न भविष्यत्युपस्कृतये चापीति शिष्टशैलीत एव शक्यमध्यवसातुम्। इति शंकरभगवत्पादा, इति गुरुचरणा इत्यादिषु वाक्येष्वाहुर्मन्यन्ते पश्यन्ति प्रतिजानत इत्यादितिङन्तं गम्यमानमपि वाक्यालङ्कृतये भवति।" क्वचित्त्वराकारणादेव क्रियापदपरिहारो भवति – प्रविश पिण्डीम्। अत्र गृहाणेति क्रियापदं गम्यते। एवमेव संभ्रमेऽपि – आपस्तावत्, इमा आपः।

पितृचरणानामिमं स्वग्रन्थं प्रत्यासीन्महानादरः। १९८१ वर्षेऽक्तूबरमासस्य षड्विंशेऽहनि ते काशीहिन्दूविश्वविद्यालयेन मानद डी.लिट्. उपाधिना सत्कृताः। तदोपाधिप्रदानात् पूर्वं वाचिते प्रशस्तिपत्रे तद्रचितानां सर्वेषामपि ग्रन्थानां

३२८ रघुवंशम्, ६.७७


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

चर्चाऽऽसीदृत एतद्ग्रन्थात् (वाग्व्यवहारादर्शात्)। उपाधिप्राप्त्यनन्तरं प्रस्तुते स्वीकृतिभाषणे पितृचरणैर– स्यानुल्लेखो विशेषतश्चर्चितः। यद्यपि ग्रन्थोऽयं स्वल्पकलेवरस्तथापि गहनोऽत्र विषयो विमृष्टः संस्कृतवाग्व्यवहारो नाम। इतः पूर्वं न केनाप्यत्र विमर्शः प्रवर्तितः। इदम्प्रथमतया मयैवात्र प्रवर्तित आत्मा। एतदर्थं शतशो ग्रन्था मयाऽक्षरशो वाचिताः। ततश्चादर्शवाग्व्यवहारनिदर्शन–भूतान्युदाहरणानि विचायं विचायं मयाऽभ्युच्चितानि। बहु श्रान्तमत्र मया। अर्धशताब्दीं यावत् प्रवर्तितोत्र मयाऽऽत्मा। शब्दसाधुत्वं न केवलं व्याकरणादेव निर्णीयतेऽपि तु शिष्टप्रयोगाद् व्यवहारतश्चापि। यानि वा यथा वा पदानि शिष्टैरुच्चार्यन्ते तानि वा तथा वा तानि साधूनि। तथा च महाभाष्यकाराः – यदि शिष्टाः शब्देषु प्रमाणं, किमष्टाध्याय्या क्रियते? शिष्टपरिज्ञानार्थाष्टाध्यायी। शिष्टप्रयोगः शब्दसाधुत्वनिर्णये खल्वेकं प्रमाणम्। अपरं प्रमाणं लोकव्यवहारः – कोषाप्तवाक्याद् व्यवहारतश्च। आप्तवाक्यं शिष्टप्रयोगः। व्यवहारो लोकव्यवहारः। स तथा प्रबलो यथा तत्र व्याकरणमपि नाद्रियते। तथाहि महाभाष्यकाराः – देवश्चेद् वृष्टो निष्पन्नाः शालयः। तत्र भवितव्यं निष्पत्स्यन्ते शालय इति। सिद्धमेतत्। कथम्? भविष्यत्प्रतिषेधात्। यल्लोको भविष्यद्वाचिनः शब्दस्य प्रयोगं न मृष्यति। कश्चिदाह देवश्चेद् वृष्टः सम्पत्स्यन्ते शालय इति। स उच्यते मैवं वोचः। सम्पन्नाः शालय इत्येवं ब्रूहीति।

## १६४

पितृचरणेषु न केवलं भावयित्री प्रतिभैवासीदपि तु कारयित्र्यपि। तत्प्रमाणं तेषां गद्यग्रन्थः श्रीगान्धिचरितं नाम। पद्यरचनायामप्यासीत्तेषां काचनानितरसाधारणा प्रौढिः। न तैः पद्यकाव्यं किमपि व्यरचि। परं नैकेषु ग्रन्थेषु प्रारम्भिको वचनोपन्यासस्तैः संस्कृतपद्यैरेव कृतः। उपरिनिर्दिष्टे वाग्व्यवहारादर्शग्रन्थेऽपि विषयप्रवर्तनात् पूर्वं स्वोऽभिप्रायस्तैः समासेन पञ्चभिः पद्यैरुपन्यस्तः–

अभिधेयाभिधानस्य वाचि वाचि व्यवस्थितः।
प्रकारो विद्यते लोके कश्चिदेव स्वलक्षणः।।१।।
शिष्टैः प्रमाणितः सम्यक् छीलितः पूर्वसूरिभिः।
संस्कृतेऽपि प्रकारोऽस्ति नियतोऽसौ निरूप्यते।।२।।
प्रस्मृतः प्रायशो लोको व्यवहारं तथाविधम्।
तस्य प्रबोधनायैषा प्रवृत्ता नो निरूपणा।।३।।



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

शास्त्रेष्वधीतिनो ये च ये च व्याकृतिचुञ्चवः।
व्यवहारं व्यतीयन्ते प्राधीतैरपि ते समम्।।४।।
अत्र सूदाहृतिस्तोमैर्व्यवहारो निरूपितः।
प्रचरत्सु प्रयोगेषु व्यभिचारश्च दर्शितः।।५।।

यद्यपि श्रीगान्धिचरितं नाम तेषां गद्यग्रन्थस्तथाऽपि तत्रादौ श्रीगान्धिनं प्रति स्वकीयः श्रद्धाभावः तैः पद्यैरेव प्रकटितः–

महात्मेति समाख्यानं यस्येह विदितं भुवि।
लोकोत्तरं च चारित्रं स वाचां विषयोस्ति नः।।१।।
महितो यश्च लोकस्य महतोऽमहतोपि च।
आकुमारं यशो यस्य स वाचां विषयोस्ति नः।।२।।
योभ्यस्यति कलावेको धर्मसूनुरिवापरः।
आसिधारं व्रतं तीव्रं स वाचां विषयोस्ति नः।।३।।
ब्रह्मक्षत्रे विशश्शूद्रा अन्त्यजाश्श्वपचा अपि।
आत्मैवाभून्मुनेर्यस्य स वाचां विषयोस्ति नः।।४।।
महेश्वरे परं श्राद्धः परं सद्योगमास्थितः।
योऽपाकरोद्भियं सर्वां स वाचां विषयोस्ति नः।।५।।
यो न हृष्यति संपत्त्या विपत्त्या च न दुःख्यति।
शुभोदर्काः क्रियाः कुर्वन्स वाचां विषयोस्ति नः।।६।।
स्तुतिनिन्दे अनादृत्य लोकसङ्ग्रहतत्परः।
इच्छति ब्रह्मभूयं यः स वाचां विषयोस्ति नः।।७।।
येन नीतोऽनुशिष्टश्च मर्त्यलोकोपि नाकति।
लब्धालोकः सहामोदः स वाचां विषयोस्ति नः।।८।।
अकारणद्विषः कांश्चित्परार्थेनोदरम्भरीन्।
यो जिगीषति हार्देन स वाचां विषयोस्ति नः।।९।।
यः प्रमाथमनालम्ब्य सहोद्योगं विवर्ज्य च।
मोक्षमीप्सति वर्षस्य स वाचां विषयोस्ति नः।।१०।।

तथैव तैः कृतं वाक्यपदीयुपोद्धातपर्यवसाने–

कश्मीरेष्वतिविख्यातं स्रोतोऽक्षय्यबलाह्वयम्।
यस्याद्य स्यन्दमानस्य सन्ततं शतशः समाः।।१।।
यदीयं विमलं वारि निपीयायाति कल्यताम्।
आमयावी जनः क्षिप्रं चिरं वार्तं च जीवति।।२।।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

तत्र रम्यं नृपोद्यानं झरै रम्यतरं कृतम्।
मन्दैः सुगन्धिभिश्शीतैः समीरैश्च समीरितम्।।३।।
प्रारिप्सितस्य सिद्ध्यर्थं घर्मार्तेश्च जिहीर्षया।
समागत्य प्रदेशं तं स्रोतःपाथःपिपासया।।४।।
भूरन्ध्रग्रहचन्द्राब्दे निवासं तत्र कुर्वता।
चार्वीयं चारुदेवेन भूमिका रचिता मया।।५।।

## १६५

प्रसक्तानुप्रसक्तोऽयं विषय इति किञ्चिदत्रोपन्यस्तुमिच्छामि। पितृचरणाः प्रायशो ग्रीष्मावकाशकालं कुत्रापि पर्वतीये स्थाने यापयामासुः। एकान्तप्रियास्ते तत्रापि किञ्चिन्निर्जनमेव स्थानमन्विष्य तत्र वसतिं चक्रुः। एतस्मिन्नेव प्रसंगे ते कश्मीरान्गतास्तत्र चाच्छाबलस्थाने कल्पितस्तैरधिवासः। अतीव रमणीयमास्त तत् स्थानं यत्तत्कृताद् वर्णनाज्ज्ञातुं शक्यते। तत्र तैर्वाक्यपदीयभूमिका रचिता यथा तैरुक्तमेव।

एकस्मिनन्दिने नृपोद्याने कस्यापि पादपस्यच्छायायां बद्धासनास्त आसन्। तस्मिन्नेव काले कोचीनमहाराजस्तदुद्यानं द्रष्टुमुपागतः। तदङ्गरक्षकास्त–दौच्चैरुद्घोषमकार्षुः – अयि भो! शृणुतावहिताः। महाराज उद्यानमुपैति। यः कोऽप्यत्र स्यात्सोऽकालहीनमितोऽपसर्पतु। पितृचरणास्तथा स्वकार्ये निमग्ना आसन् यथा तैरुद्घोषो न श्रुतः। यदाङ्गरक्षका इतस्ततो भ्रमन्तः पितृचरणानद्राक्षुस्तदा परुषाक्षरैस्तान् निर्भत्सितवन्तः। कुतो भवानत्रास्ति? अस्माभिर्वारं वारमुद्घोषः कृतो योऽत्रोद्यानेऽस्ति स त्वरितमितोऽपगच्छत्विति। कुतो भवता नेदमादृतम्? पितृचरणैरुक्तं न मयाऽऽकर्णित उद्घोषः। सर्वेन्द्रियाणि संयम्य स्वकार्यैकपरोऽहम्। मां परितः किं प्रवर्तत इति नाहं वेद। यद् भवतु तद् भवत्वस्मदाज्ञाऽवधूलिता भवतेति दण्डमर्हो भवान्। यावदयं विवादः प्रावर्तत तावन्महाराजस्तत्रैवागतो यत्र मत्पितृचरणा आसन्। किं जातमित्यौत्सुक्यवशाद्यदा तेनाङ्गरक्षका पृष्टास्तदा तैरुक्तमुद्घोषे सत्यपि नायं जन इतोऽपक्रान्त इति सुतरामनुचितमनेनाचरितमिति। पितृचरणैरुक्तं नाहमुद्घोषमश्रौषमिति। तदा महाराजस्य दृष्टिर्मत्पितृचरणा यत् सन्दृभ्णन्ति स्म तत्र पतिता। देवनागरीलिपिविन्यास इति तेन पृष्टं कया भाषया किं विरचयन्ति श्रीमन्त इति। पितृचरणैरुक्तं संस्कृतभाषया वाक्यपदीयभूमिकां विरचयामीति। तत्क्षणमेव रोषारुणितनयनेन तेन निर्भर्त्सिता अङ्गरक्षकाः –


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

धिङ् मूर्खाः, यस्तादृश आत्मरतिर्जनः स्वं परितः प्रवर्तमानं न किञ्चिदपि वेद तादृशं तपोनिधिं ज्ञाननिधिं वाग्बाणैस्तुदथ। यत एतादृशास्तपस्यन्त्यत अस्मद्राज्यं प्रवर्तते। एतदुक्त्वा स पितृचरणपादयोः पतित्वाऽऽत्मानं तदपराधकृते क्षमापयामास। स आसीन् महान् संस्कृतपण्डितः, न्यायादिशास्त्रपारदृश्वा। अत एवासीत्तस्य संस्कृतपण्डितेषु तादृशः समादरः। स्वराज्यं प्रत्यावृत्तेन तेन सर्वाण्यपि स्वरचितानि पुस्तकान्युपायनमिति प्रेषितानि। तान्यस्मत्पुस्तकसङ्ग्रहशोभां वर्धयन्ति।

## १६६

भिन्नरुचय आसन् पितृचरणाः। संगीते – विशेषतः शास्त्रीयसंगीते–तेषां सचिरासीत्। प्रथमे वयसि तैस्तच्छिक्षितमपि। नैकशो मार्गै रथ्याभिश्च सञ्चरमाणास्ते प्रोच्चैर्नानारागबद्धानि गीतानि गायन्ति स्म। एकदा लक्षणगीतमेकं तैर्गीतम्। तत्रोक्तमासीत् – राग खम्भावती गा गयो रे। न खमाच न दुर्गा न बागेश्वरी राग खम्भावती गा गयो रे। यदा त इदं गायन्ति स्म तदा तत्पृष्ठवर्ती कश्चन मिरासी[३२९] चटुलोत्फुल्लगत्या तानुपसद्य सव्यङ्ग्यमभाणीत् – खमाचं गायसि, वक्षि च न खमाच इति। तदा पितृचरणैरनुभूतं सम्यगेवाहायं जनः। मया हारिणा गीतरागेण प्रसभं हृतान्तरङ्गेण नावधारितः स्वकीयः प्रमादः। वस्तुतः खमाच एवात्र न तु खम्भावती।

पितृचरणानां प्रातर्भ्रमणनियम आसीत्। महति प्रत्यूषे सूर्योदयात् प्राक् चतुर्वादनवेलायामेव ते भ्रमणार्थं निर्गच्छन्ति स्म। रूपनगरस्थात्तदानीन्त–नादस्मदावासात्सार्धकिलोमीटरद्वयान्तराल एव दिल्लीविश्वविद्यालयभूमिं निकषा पर्वतकमेकमासीदाङ्ग्ल्यां 'रिज' इत्याख्यायमानं तत्रैव तेऽगच्छन्। स्वेन सह ते जलस्य पूर्णमेकमुदञ्चनमप्यनयन्। पर्वतकशिखरे 'बौण्टा' इत्याख्यं स्थानमासीत्। तत्रोदञ्चनस्थेन जलेन पञ्चाशत्कृत्वस्तेऽक्षिणी प्रोक्षयन्। तेषां मुक्ताबिन्दु[३३०]रित्याख्यं नेत्रकष्टमासीत्। तदर्थं चिकित्सकानुरोधेनापि शल्यचिकित्सा तैर्न कारिता। 'आपो वै भेषजमि'ति श्रुतिवचसि प्रत्ययमादधानैस्तैर्जलचिकित्सायामेव नियमेनात्मा दत्तः। नेत्रयोर्जलप्रोक्षण एतदर्थैव तेषामासीत् प्रवृत्तिः। तेन मुक्ताबिन्दुरोगो न प्रासरत्। यत्रैव तस्य प्रारम्भोऽमूत्तत्रैवाभूत्सोऽवरुद्धः।

---

३२९ संगीत निपुणा यवना तदाख्यम्या ऽऽख्यायन्ते।

३३० मेतियाबिन्द इति हिन्द्याम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पर्वतकोपरिभागे समतलभूमिरासीत्। तत्र भ्रमणार्थिनां जनानां गतागताय तत्र निर्मितायाः प्रपायाश्च व्यवस्थार्थं कर्मकराणां गतागताय च मार्ग आसीन्निर्मितोऽधिकृतैः। जलप्रोक्षणानन्तरं पितृचरणास्तेन कोणादेकस्मादपरं कोणं यावदटाट्याञ्चक्रिरे द्विर्वा त्रिर्वा। अटाट्यावसरे चोच्चैः सस्वरं भजगोविन्दस्तोत्रं ते जगुर्यदन्येषां भ्रमणायागतानां जनानां कृतेऽपि महत आनन्दाय चक्लृपे। दैनिकोऽयं क्रम इति नाना भ्रमणार्थिभिस्तेषां परिचयोऽपि जातो यः कालेन स्नेहसम्बन्धरूपेण परिणतः। तेष्वनेकेताननुरुरुधुर्यत्ते नः किमपि संस्कृतसुभाषितं श्रावयेयुस्तद्व्याख्यां चापि हिन्द्या प्रस्तुयुः। उदारः कल्प इति तेषामनुरोधमुररीकृत्य यत्किमपि वाक्यं वा पद्यं वा तत्स्मृतिपथमुपारुरोह तत्ते श्रावयामासुः सव्याख्यम्। 'बौण्टा' इत्यत्र शर्करिल आसनरहिते भूभाग एवोपविष्टाः श्रवणार्थिनो भ्रमणार्थिनस्तद् वाक्यं वा तत्पद्यं वा भक्तिप्रवणेन चेतसा शुश्रुवुः। किञ्चित्कालानन्तरं पितृचरणानां मनसि स्फुरितमिदं कस्मादपि ग्रन्थविशेषात् सुभाषितरूपं किमपि पद्यं श्राव्येत च व्याख्यायेत च। आर्यसमाजमतावलम्बिनामपि तेषां श्रीरामे परा भक्तिरास्त। अतः श्रीरामायणादेव ते पद्यमेकमभ्युच्चिक्युः। प्रत्येकं दिनमेकमेव पद्यं तैः श्रावितव्यमिति कश्चित्क्रमस्तैरास्थितः। यत्पद्यं तैः श्रावणीयमासीत्तत् ते पत्रखण्डमारोपयामासुस्तद्व्याख्यां चापि हिन्द्या। एवं क्रमेण भूयान् पद्यसङ्ग्रहो जातः। ग्रन्थरूपेणायं प्रकाशनीय इति कालेन तेषां बुद्धिरुदिता। तां बुद्धिमास्थाय पद्यसंग्रहोऽसौ श्रीरामचरितमिति नाम्ना प्रकाशितः।

एतद्विषये तदीयो भावस्तच्छब्दैरेवात्र प्रस्तूयते—

सर्वो लोकः पिपठिषति रामायणम्। .......................... संस्कृतेनोत्तमेनोपनिबद्धं नैतत्सर्वस्य सुखमास्वाद्यम्। तस्मात्सामान्यस्य जनस्य सुखबोधायार्षमेतदाख्यानं संक्षिप्य ऋज्व्या च हिन्द्या सनाथीकृत्य प्रकाशनीयम् इत्युदगान्मे मनीषा। यथा चाल्पीयसाऽनेहसाऽसंस्कृतज्ञोपि जनो रामायणसारमाददीत तथा तास्ताः कथाः परिहृत्योपदेशतात्पर्यकास्ते ते ग्रन्थांशा इह संगृहीता ये सादरं सश्रद्धं चर्चिताः सत्त्वशुद्धय आचारशुद्धये च कल्पेरन्। न हि रामायणाद् वरीयः प्रयतीकरणे करणमस्ति। रामादिवद् वर्तितव्यं न रावणादिवदिति यथा रामायणाच्छक्यशिक्षं न तथा ग्रन्थान्तरात्। अत एव लोकाः स्वं स्वं चरित्रं शिक्षेरन्निति नः कामः। एतदर्था नः प्रवृत्तिः।

एतद्ग्रन्थप्रारम्भेऽपि तैः संस्कृतपद्यैः स्वो भाव आविष्कृतः। हृद्देशनिर्गतपद्यधारातः कश्चनापूर्वः प्रभवति भक्तिरसनिष्यन्दः—


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

प्राधान्येन पदार्थानां व्यपदेशा विदां मताः।
रामचारित्रमित्यस्मात् समाख्येयं समाश्रिता।।१।।
सीताया लक्ष्मणस्याथ भरतस्य च मारुतेः।
अनुषङ्गेण सन्दृब्धश्चरितांशः कियानपि।।२।।
तत्सन्तः श्रोतुमर्हन्ति सद्वृत्तप्रतिपत्तये।
आदिकाव्यवचोबद्धं संक्षिप्तं काव्यमुत्तमम्।।३।।
नाभिषेकादिवृत्तान्तो वाचां मे जातु गोचरः।
रक्ष आदेः प्रमाथो वा तस्य वापि प्रवासनम्[३३१]।।४।।
असंहार्यो ह्यनूरागः सीताया भर्तरि स्थितः।
पितुराज्ञाविधेयस्य रामस्य च प्रतिश्रवः।।५।।
स्नेहो निष्कारणो रामे सौमित्रेरतिविश्रुतः।
उत्सर्गो भरतस्यापि वितत्य गदितो मया।।६।।
मा भूद् गतिप्रतीघातो ग्रन्थस्यास्य विबोधने।
प्राकृतेनापि तेनायं हिन्द्या साध्व्या सनाथितः।।७।।

यथा तैः श्रीरामायणविषये प्रक्रान्तं तथैव महाभारतविषयेऽपि। तत्रत्यः पद्यसंग्रहोऽपि तैर्महाभारतवचनामृतमिति नाम्ना प्रकाशितः। उपदेशसाहस्रीत्य-स्यापरमभिधानं यद् ग्रन्थप्रारम्भे तैः संकेतितम्। अन्यग्रन्थवदस्यापि प्रारम्भे पञ्च पद्यानि तैः संस्कृतेनोपन्यस्तानि यत्र तैरुक्तं यदियं तेषां कृत्याकृत्यविवेचनी कृतिरार्याचारविचारस्य पद्धतीं सम्प्रणेष्यति–

यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्।
इत्येवं कीर्त्यते प्रज्ञैः पुराणैर्नूतनैरुत।।१।।
संहिता शतसाहस्री कार्ष्णो वेद इतीव वा।
कृतिर्व्यासस्य या लोक्या पावनी लोकविश्रुता।।२।।
ततः प्रयत्नमास्थाय कल्याणीं कलयामहे।
दिष्ट्योपदेशसाहस्रीं वाक्यामृतपराभिधाम्।।३।।
इयं नूनं कृतिर्नोद्य कृत्याकृत्यविवेचनी।
आर्याचारविचारस्य पद्धतीं सम्प्रणेष्यति।।४।।
सुहृदः स्नेहभाजो ये कर्मण्यत्र प्रयोजकाः।
धर्मं जिज्ञासमानांस्तान्धन्यान्नामाभिदध्महे।।५।।

३३१ विनाशनम्, निशारणम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

## १६७

विद्वत्पर्यायवाचिषु शब्देष्वेको दोषज्ञशब्दोऽप्यस्ति। तथा ह्यमरः— विद्वान् विपश्चिद् दोषज्ञः सन् सुधीः कोविदो बुधः। पितृचरणा दोषज्ञा इति तैः श्रीमद्भागवत-महापुराणस्य भाषा निपुणं परीक्षिता विशेषतो दोषदृष्ट्या। तेषां श्रीमद्भागवत-भाषापरिच्छेदनामा भागवतपुराणवाग्विमर्शपरो द्वादशाध्याय्यात्मक इदम्प्रथमो ग्रन्थः। अस्य प्रारम्भोऽपि पितृचरणैः पद्यैरेव कृतः—

पुराणवाचां सदृशो न सन्ति
प्रतर्क्यवाच्यस्य विदोऽस्य वाचः।
इत्यभ्युपेतं प्रविवेकवद्भिः
पुराणमेतद् विपरीक्ष्यतेऽतः।।१।।

सारासारविवेकाय सदसन्निर्णयाय च।
विपश्चितां विनोदाय मामकोऽयमुपक्रमः।।२।।

लोकयिष्यति वाङ्मार्गं विनिर्णिक्तमियं कृतिः।
प्रथयिष्यति सच्छब्दान्वाग्भ्रंशान्वारयिष्यति।।३।।

तामिमां रसयिष्यन्ति गुणगृह्या विपश्चितः।
विमत्सरा विवेकाढ्याः प्रत्ययोऽयं ममान्तरः।।४।।

सुहृद्भिः प्रेरितः कैश्चित्पुण्यैः स्वैर्वा फलोन्मुखैः।
कृत्ये प्रावर्तिषि स्तुत्ये विनेयप्रणयेन वा।।५।।

दैवीं वाचमुपासीय कुर्वीय च क्रियाः शुभाः।
सन्ततं, मे वरं देयाद् वरेशः परमेश्वरः।।६।।

पद्यप्रस्तुतेरनन्तरं पितृचरणैर्ग्रन्थस्यैतस्य विषये स्वोऽभिप्राय एभिः शब्दैराविष्कृतः—

"विद्यावतां भागवते परीक्षा" इति प्रथते प्रवादः। तत्र किं नु निबन्धनं स्यात्? सर्गप्रतिसर्गादीनां पुराणप्रतिपाद्यानां विषयाणां दुरधिगमानां निपुणं निरूपणेति चेन्न। तत्र निरूपणायां न किञ्चिदिह नूतनमुपन्यस्तम्। पुराणान्तरप्रपञ्चिता सैवेह सर्गादिवर्णना, सैव स्वर्गापवर्गाद्यतीन्द्रियार्थप्रतिपादना, महदादीनां साङ्ख्योदितानां तत्त्वानां च व्याक्रियेति गहने दर्शनकान्तारे स्वैरं विहरतां कापिलानां काणादानां च का नाम तत्र परीक्षाविडम्बना। अहं तु पश्यामि परोक्षप्रियतया कविना कृतमिदं पुराणमप्रसिद्धशब्दार्थबहुलतया


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

क्लिष्टान्वयतया दुर्घटसमासप्रधानतयाऽध्याहारापेक्षतया व्यवहारातिक्रमजिह्मतया छन्दोनुरोधकृतशब्दवैरूप्यतया छन्दोमात्रगोचरशब्दप्रयोगतया च सत्यं प्रतिहन्ति प्रसरं विपश्चिताम्। अत्र प्रवृत्तास्ते विवक्षितार्थमनर्पयन्ति पदवाक्यानि पदे पदे संमुखमापतन्ति विलोक्य व्यामुह्यन्तीति किं चित्रम्। कविशाब्दिकेन भट्टिना स्वकाव्यावसाने सहर्षोल्लासं "व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम्" इति यदुदघोषि तदिहाप्यवितथमिति मूलोदाहरणैः कैरपि निदर्शयिष्यामः, स्वाभिप्रायं च तत्र तत्र विवर्णयिष्यामः। न वयमस्य कवेर्वैदुष्ये का बाहुश्रुत्ये वा सन्दिह्महे, न चास्य वाच्यधिकारमपह्नुमहे। पुराणान्तरदुर्लभां निरुक्तदोषजातजननीं परोक्षप्रियतामेवास्य न रोचयामहे। नास्य यशसि पुरोभागिणो वयम्। सतो दोषान्नोपेक्षामहे, असतश्च नोत्प्रेक्षामहे।"

ग्रन्थोऽयं द्वादशाध्याय्यात्मक इति पूर्वमुक्तमेव। द्वादशाध्यायेषु प्रत्येकमध्यायं यो विषयो विमृष्टस्तस्य विवरणमित्थमस्ति–

अप्रसिद्धाः शब्दाः अप्रसिद्धाश्चार्थाः (प्रथमोऽध्यायः), व्यवहारदूषणम् (द्वितीयोऽध्यायः), रूढिं प्रत्यनादरः (तृतीयोऽध्यायः), अध्याहारबाहुल्यम् (चतुर्थोऽध्यायः), अधिकपदत्वम् (पञ्चमोऽध्यायः), क्लिष्टान्वयः (षष्ठोऽध्यायः), अपाणिनीयाः प्रयोगाः (सप्तमोऽध्यायः), अस्थान उपसर्गयोगः (अष्टमोऽध्यायः), दुर्घटाः समासाः (नवमोऽध्यायः), छन्दोभङ्गभयाच्छब्दवैरूप्यम् (दशमोऽध्यायः), छन्दोमात्रगोचराः शब्दाः (एकादशोऽध्यायः), अनौचित्यम् (द्वादशोऽध्यायः)।

## १६८

यदा पितृचरणा एम् ए. कक्षायामधीयाना एवासंस्तदा तैर्वामनशिवराम आप्टे महोदयेन दाक्षिणात्येन रचितस्याङ्ग्लपाठनिकरस्य प्राथमिकभागधेयस्य संस्कृतेनानुवादः कृतः। स १६१६ वर्षे, यदा ते विंशतिवर्षा एवासन्, लवपुरात् (लाहौरात्) प्रकाशितः। तदानीं तैः प्राज्ञपरीक्षैवोत्तीर्णाऽऽसीत्। एतदनुवादपुस्तक–मुखपृष्ठस्थाद्विवरणाज्ज्ञातुं शक्यते। छात्रावस्थायामेव प्रकाशितमिदं पुस्तकमिति तस्य किञ्चनानितरसाधारणं महत्त्वम्। पितृचरणानां जन्मनाम चरणदास आसीत्। चारुदेव इति नाम परस्तात् तैः स्वीकृतम्। तदेव चरणदास नाम पुस्तकरचयितृरूपेण पुस्तकस्य मुखपृष्ठेऽस्ति निर्दिष्टम्। पुस्तकमिदं तैः स्वेनैव व्ययेनासीत् प्रकाशितम्। केनापि भक्तरामशास्त्रिणाऽऽसीत् तत्परिष्कृतमिति पितृचरणैरुक्तम्। पुस्तकस्यास्योपोद्घातस्तैर्भाषाद्वयेन – आङ्ग्ल्या च संस्कृतेन च–उपनिबद्धः। आङ्ग्ल्या तैरुक्तं पुस्तकमिदं पञ्जाबविश्वविद्यालयीय एफ्. ए.

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

छात्रानुपकरिष्यतीति। संस्कृतेनोपनिबद्ध उपोद्घातस्तेषां कौमारेऽपि संस्कृतपद-रचनाप्रौढिं पिशुनयति। ततः कश्चनांशोऽत्रोद्ध्रियते—

"गीर्वाणवाग्गहनं प्रविविक्षूणां व्युत्पत्तिपेलवानामध्येतृणां हिताय मयाल्पग्रन्थोऽयं निरमायि। श्रीमच्छिवराममहोदयेन दाक्षिणात्येन ग्रथितस्याङ्ग्लवाक्यव्रातस्यानुवादोयं व्यरचि।

अत्र प्रत्येकं पाठस्य विख्यातपदप्रयोगतो विशुद्धा व्याकरणसम्मता अनुकृतिर्विधीयते।

अधोऽधः पाठं, प्रयुक्तशब्दानां निरुक्तिस्तेषां पर्यायवाचिनो विषमतरपर्यायवाक्यानि च प्रदर्शितानि सन्ति।

सर्वं पुस्तकस्थं विषयं यदि विद्यार्थिनः सम्यक् सावधानमधीयीरंस्तर्हि भूरिलाभं प्राप्नुयुरहञ्चामोघक्रियो भवेयमिति।"

## १६६

पितृचरणानां पद्यरचनापाटवस्य तद्गद्यग्रन्थश्रीगान्धिचरितप्रारम्भे तद्रचित-पद्योद्धरणमाध्यमेन चर्चा मया पूर्वं, २७७ पृष्ठे, कृता तद्गद्यविषये तु चर्चा नैव प्रवर्तिता। सास्ति मेऽभीप्सिता। एतत्सहकारेणैव पितृचरणरचितस्यान्यस्य प्रस्तावतरङ्गिणीतिसमाख्यस्य गद्यग्रन्थस्य चर्चाऽपि मेऽभीप्सिता। यत इयं चर्चा मन्नामराशिभिर्मत्पितृचरणपरमस्नेहभाजनैः श्रीगंगानगरस्थैर्विद्वद्धौरेयै डॉ. सत्यव्रतमहाभागैर्होशिआरपुरतः प्रकाश्यमानाया 'विश्वसंस्कृतम्' इत्याख्यायाः संस्कृतपत्रिकाया १९८१ वर्षीये (सञ्चिका २५, अंकाः २–४) डॉ. चारुदेव-शास्त्रिविशेषाङ्के 'श्रीचारुदेवशास्त्रिणां गद्यगौरवम्' इतिशीर्षके निबन्धे कृतैवातः स्वमत्र कर्मणि न व्यापारयंस्तत एव कञ्चन विशिष्टमंशमत्रोद्धरामि—

अन्तरात्मना शास्त्रप्रज्ञोपेता अपि शास्त्रिवर्य्याः सहृदया आसन्। ललामभूतं प्राचीनं काव्यनिकरमविकलं तैरध्यगायि स्वकृतिभिश्च तदुपकर्तुं प्रशस्यं प्रयत्नं व्यधायि। यत्सत्यं संस्कृतगद्यदारिद्र्यमपाकर्तुं कृताभिनिवेशेषु साम्प्रतिकेषु प्रबन्धकृत्सु ते तुङ्गं किमपि पदमारोहन्ति।

लवपुरतः (लाहौरतः) १९३० ख्रिष्टाब्दे प्रकाशितं श्रीगान्धिचरितं शास्त्रिवर्य्याणां परिपचेलिमापन्नाश्चर्यकरा गद्यकृतिरस्ति। अत्र लोकवन्द्यस्य परोपकरणी-कृतकायस्य सविग्रहस्येव धर्मस्य महामहिम्नो गान्धिनो जन्मनः प्रभृति लवणशासनातिक्रमेण कारडीग्रामे तदासेधपर्यन्तमलोकसामान्यं चरितम्प्रथमतया विबुधवाचोपनिबद्धम्। षट्परिच्छेदात्मकोऽयं प्रबन्धोऽभिनवां चरितकाव्यशैलीं साहित्य


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

आसूत्रयति, प्रथितयशसां गद्यसम्राड्भूतानां सुबन्धुबाणादीनां कृतिभ्यश्च सुदूरं विप्रतिपद्यते। नात्र प्रतिपाद्यं सपरिणाहवर्णनाकदम्बकैः परिक्षिप्तं व्यावर्ण्यत न च कालजीर्णालंकारततीनां साग्रहमनपेक्षं वा समावेशोऽकार्यत। कथ्यधारात्र वर्णनसेतुभिरव्याहता निर्बाधं प्रवहति। गान्धिचरितम् आधुनिकीभिराङ्ग्लादिभाषा–भिर्निबद्धैश्चरितकाव्यैः साम्यं बिभर्ति शैल्या प्रणयनपद्धत्या च। तद्वदत्रापि विषयाभिव्यक्तिः प्राधान्यं प्रपद्यते। अन्यत्सर्वं च तदङ्गतामापद्यते। उच्चावचावस्थितिनिभृतो व्यतिकरभूयिष्ठोऽयमर्थस्तथौजस्विन्या संस्कारवत्या हृद्ययानवद्यया वाचा शास्त्रिवर्य्यैर्न्यबन्धि यथा प्राक्तनतमापीयं गीः साम्प्रतिकेन विषयेण मनागपि नाभिभूता। अविकलेयं सकलं भावभरं भव्यं भावयति। इदं हि पण्डितवर्य्याणां वाच्यधिकारं शब्दशास्त्राधीतिं वाग्व्यवहारावगतिं च प्रकामं ख्यापयति। सकलं प्रसङ्गं ते तदनुरोधिन्या परिमृष्टया बलिष्ठया च वाचा निबद्धुं प्रभवन्ति। पञ्चापवैशसव्यतिकरो वा स्याद्, उपोषणवर्णना वा सत्याग्रहनिरूपणा वा भवेत्कार्यनिवृत्तिर्वा कवेस्तूलिका सर्वस्मै समं वैभवं प्रदातुमलम्! निभाल्यतां सत्याग्रहस्वरूपपुरस्सरं गान्धिन इदमुद्बोधनं सभायाम्–

"सत्याग्रह आत्मबले प्रतितिष्ठति। ....... आत्मबलमजय्यं नित्यं च। शरीरस्य तु बलं महीयसा शक्त्यन्तरेण शस्त्रैः सैन्यैश्च विजेतुं ध्वंसयितुं पार्यते। सत्याग्रह एवंरूपस्यात्मबलस्य विम्जृभणप्रकारः। सत्याग्रही यद्यपि शत्रुं न कदर्थयति नेतरं शातयति तथापि हेलया शारीरं बलं पराभवति। ........... अतः क्रूराः इमे राज्याधिकृताः स्पष्टमिदमावेदनीयाः– यावदच्छिन्नं नः शिरस्तावद् वयं नेमामवधीरणां सहिष्यामहे। अतो यद्येतद्विधानानुविधायित्वमस्माकमिष्यते तदेतत् प्रथमं कर्तनीयम्।"

पञ्चनदसंहारस्य लोमहर्षकं रौद्रत्वमधिकृतां क्रूरत्वञ्चात्र वर्णने साकल्येन सपदि प्रत्यक्षीभवति–

संनिपतिताः जनाः, निरुपप्लवा निरायुधाश्चासन्। .......... सेनापतिस्तु यन्त्रगुलिकाप्रक्षेपणीरादाय जहलोद्यानमागात्। प्रबोधनमन्तरेणैव च निरायुधेषु तेष्वाग्नेयचूर्णप्रक्षेपणं प्रारभत। अयञ्चाग्निविसर्ग आचूर्णपरिसमाप्तेर्दशकला यावत् प्रावर्तत। .............. पञ्चशतं षट्शतं वा तत्र प्राणैर्वियुक्ताः। एतदतिरिक्तसंख्याश्च क्षताः। .............. अभ्यर्हिता नागरा अधिकरणान्यकृष्यन्त, कशयाऽभ्यहन्यन्त, जानुभ्यां विसर्पणं च बलादकार्यन्त।"

गान्धिचरिते विद्यते गान्धिमहाभागस्य केषाञ्चिदभिभाषणानां पत्राणां चानुवादः। अयं भाषापरिवर्तस्तथा नैपुण्या व्यधायि सहजया गिरा च प्राणायि यथा सोऽनुवादपदवीं विहाय मूलपदं गृह्णाति। अस्ति अत्र चित्रकरी परिचेलिमा, अनन्यत्रलभ्या मनोरमा च वाक्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

गान्धिचरिते पण्डितवर्य्याणां पाण्डित्यं पदे पदे दृष्टिपथमायाति। तेषां गद्यकारत्वमत्र वैयाकरणेनाक्रान्तमिति नेदं विप्लुतार्थं वचः। शास्त्रिवर्य्येष्वपारा प्रतिभा विद्यते परं सा सर्वत्र पाडित्यघटयैवावृताऽऽविर्भवति। तेऽप्रतिमं स्वीयं शब्दशास्त्रवैदुष्यमत्रैकपदे समाहितवन्तो येनेदं गद्यकाव्यं तेषां पाण्डित्यवैजयन्तीं दधानं प्रतिभाति। असंस्तुतचराणां क्लिष्टक्लिष्टानां लुङां लिटां चानायोऽत्र साग्रहं ग्रथितो येन संदानितपदा अध्येतारः सायासमेव प्रसर्तुं प्रभवन्ति। अवादीधरन्, न्यभान्त्सीत्, उपालप्सत, संप्राहृषत, उपाक्रंसि इत्यादयः कष्टाः प्रयोगाः प्रतिपदं तेषां गतिं रुधन्ति। अस्मिन्नचिरेण पिप्रिये भूमिपः इत्यत्र प्रीङोऽकर्मकत्त्वम्, व्यवहाराधीतये मोहनेनाङ्गलदेशस्य गमनमवश्यसंविधेयं मयेति इत्यत्र मोहनस्य करणत्वम्, तत्र सानन्दं सस्मितं भ्रूविकारमन्तरेण च ता रक्षिवर्गैरग्राहयन् इत्यत्र रक्षिवर्गस्य करणत्वम्, प्रोषितान्भरतवर्षीयानदयमन्याय्यमाचरन्ति इत्यत्र भरतवर्षीयान् इति कर्मत्वं कथं समाधेयमिति न गोचरं पण्डितम्मन्यानाम्। अनेन गान्धिचरिते विपश्चितां परीक्षा प्रकामं भवति, परमयं पाण्डित्यातिरेको वाचो लालित्यं प्रसादं च व्याहन्तीति न संशीतिः। तद्धि दुर्लभप्रायमत्र। काव्यमिदं महात्मनः प्रकृष्टेनर्षिकल्पेन पुण्येन चरितेन राजनीतिवैशारद्येन राद्धान्तानुविधायित्वेन भारतस्वातन्त्र्यसमरवृत्तेन चाद्यन्तं प्राणितीति किमपि गौरवमावहति।

## १७०

शास्त्रिवर्य्या उद्गीतमहिमानो निबन्धकृतोऽपि सन्ति। वैदेशिकीं चिन्तननिभृतां निबन्धशैलीमनुरुध्य य आधुनिका निष्णाता देववाण्या निबन्धनिचयान् काले काले निबबन्धुस्तेषां गुरुचरणा मुखराः। १९५० ख्रिष्टाब्दे काशीतः प्राकाश्यमिता प्रस्तावतरंगिणी विविधविषयावगाहिनां वैदुष्यनिर्भराणां प्रबन्धरत्नानां चेतोहरा मञ्जूषास्ति। एकषष्टिप्रस्तावात्मिकेयं तरङ्गिणी पञ्च तरङ्गान् व्याप्य विराजतेतराम्। पण्डितप्रवेकानां व्यक्तित्वमिव प्रस्तावतरंगिणी पुराणत्वनवत्वयोः सारं समाहृत्य समुदैति।

प्रस्तावतरंगिण्याः प्रबन्धेषु निबन्धकर्तुरदभ्रं वैदुष्यं प्रकामं प्रतिफलति। प्रायेण सर्वे निबन्धा गम्भीरं सुष्ठु च परिचिन्तिताः साधु चोपवर्णिताः। केषुचिच्च विलोक्यतेऽपूर्वं विचारप्रात्यग्र्यं तदृद्धिश्च। पानीपतसमरः, छात्राश्वरूप्य–काणामात्मकथाः, दारुणा हि महाहवा भवन्ति इत्यादयः आधुनिकाः प्रबन्धाः प्रस्तावतरङ्गिण्यामेव प्रथमतया दृक्पथमवतरन्ति। विचारात्मकानां शास्त्रीयाणां च विषयाणां विवेचने शास्त्रिवर्य्यैरेकतः पारम्परीणा पद्धतिरालम्बिता परतश्चाभिनवा


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

विचारसरणिः परिगृहीता। अनेन तरंगिण्याः प्रबन्धाः प्रत्यग्राममभिख्यां पुष्णन्ति रोचकतां चानवद्यामावहन्ति। केचित्प्रबन्धाः प्रबन्धकर्तुः प्रौढिं प्रकटयन्ति। विवक्षातः कारकाणि भवन्ति, पदार्थविकासः, करोतिना सर्वधात्वर्थानुवादः क्रियते इत्यादयः केचिदपरे च तस्य ज्ञानस्य गाम्भीर्यं निर्दुष्टां च व्युत्पत्तिं प्रख्यापयन्ति। परिपचेलिमा हि या तदमीषां बहिष्ठं वैशिष्ट्यम्। हासव्यङ्ग्ययोः समावेशश्चेदं प्रगुणीकरोति।

गान्धिचरितस्य कार्कश्यं विहाय पण्डितप्रवराणां शैली प्रस्तावतरंगिण्यां प्रसादं गृह्णातीति तोषाय। तरंगिण्या निबन्धेष्वनेकत्र शब्दसौष्ठवसहचरितं पदलालित्यसध्रीचीनं चेतोहरं माधुर्यमस्ति। शास्त्रिवर्य्याणां शास्त्रपारदृश्वता, प्राच्यप्रतीच्यशोधावगतिः, इतिहासप्रावीण्यं, भाषापण्डित्यं, शब्दशास्त्रसिद्धत्वं च गरिष्ठां श्लाघामर्हन्ति, निबन्धकर्तुर्वैदग्धीं च सविशेषं प्रख्यापयन्ति। प्रबन्धकृतो वर्णनाशक्तिस्तलस्पर्शिनी मर्मोद्घाटिनी चास्ति। हीरोशीमाध्वंसनस्येदं वर्णनं कल्पनाजन्यमपि याथार्थ्यपदवीमारोहति। ........ "तथा न्यक्षेणोज्जासि तदभूद्यथा नात्र पुरा कदाचिदधिष्ठानं किमप्यासीदिति जायते प्रतीतिः। समतलापि भूरुत्खातिनी समजनि, निरुदका च सोदका पुलिनवती च स्रोतस्वती। निर्दग्धानि राजसदनानि, संहृतानि हर्म्याणि। कषितानि च कुटीराणि। भस्मावशेषतां च गतानि तरुलतानिकुरम्बाणि। सहस्रशो वपुष्मन्तः प्रतिभानवन्तः कलावन्तस्तत्पत्तनस्था निमेषेण यमधानीं प्रविष्टाः, का कथा मृगशकुनिसरीसृपादीनाम्? गगने स्वैरविहाराणि पत्त्ररथकुलानि वासाय प्रतिष्ठमानान्यन्तराऽध्वानमग्निच्छटातापेन सन्तप्तानि विचेष्टमानानि सद्यः कालधाम गतानि। किं बहुना! भूकम्पेनाप्लावेन वा न तथा ज्यानिर्जीवलोकस्य कदाचिदजनि यथाऽनेनास्त्रेण नूत्नेन संस्कारातिशयविस्मितैरमेरीकास्थैः प्रयुक्तेन।"

अवदातमिदं कर्कशे शास्त्रे मृदुनि च काव्यवस्तुनि लीलायते पण्डितवराणां भारती। एतादृशं पाण्डित्यं प्रविरलविषयं साम्प्रतम्। स्वर्यातेषु तेषु तद्भूय आहतमिति शोकाय। पल्लवग्राहिणो भूयिष्ठाः शास्त्रिसदृक्षाः मर्मग्राहिणोऽल्पिष्ठाः।

वेश्यानामिव विद्यानां मुखं कैः कैर्न चुम्बितम्।
हृदयग्राहिणस्तासां द्वित्राः सन्ति न सन्ति वा।।
द्वित्राणां मध्येऽवर्तन्त श्रीचारुदेवशास्त्रिणः।

## १७१

पितृचरणैश्शब्दापशब्दविवेको नाम कश्चिदपरोऽपि ग्रन्थो निरमायि यः पूर्वार्धोत्तरार्धरूपेण द्विधा विभक्तः। पूर्वार्ध एकोत्तराणि पञ्चशतानि केवलं व्यवहारतो


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

दुष्टानि वाक्यानि समुच्चितानि। उत्तरार्धे च संगृहीतपूर्वस्य महतः शब्दार्थसार्थस्य सोपपत्तिकं सप्रपञ्चं च साधुत्वासाधुत्वे विवेचिते। इतः पूर्व चतुष्पञ्चाशत्पृष्ठात्मिकायां भूमिकायां शिष्टसम्मतो वाग्व्यवहारः सोदाहरणं प्रस्तुतः।

लक्ष्मीशब्दं प्राय ईकारान्तत्वेन प्रयुञ्जते जनाः प्रथमैकवचने। यथा– सा लक्ष्मीत्यभिधीयते। अत्र पितृचरणाः– लक्ष्मीशब्दे ईकार औणादिको न तु स्त्रीप्रत्ययः, तेन सुलोपासम्भवः। लक्ष्मीरित्यभिधीयत इत्येवं वक्तव्यम्।

त्रिंशद्भिरपि वर्षैर्नेदं शक्यं निर्वर्तयितुम्, किमुत त्रिभिः इति त्रिंशद्भिरिति प्रयोगे दोषमुद्भावयन्ति पितृचरणाः। त्रिंशतेत्येकवचनं प्रयोक्तव्यम्। विंशतेः प्रभृत्या नवनवतेः सङ्ख्याशब्दाः स्वभावतः स्त्रियामेकत्वे वर्तन्ते।

ग्राम्याश्चतुष्पदा नृशंसैस्तैर्यवनैर्निपातिताः इति वाक्ये प्रथमाबहुवचने चतुष्पादा इत्येव प्रयोक्तव्यम्। चतुष्पदा इत्यपशब्दः।

अस्थान उपसर्गयोगं दोषदृशा पश्यन्ति पितृचरणाः। तथा हि सन्धत्ते भृशमरतिं हि सद्वियोगः (किराते ५.५१)। अत्र समुपसर्गयोगोऽन्यमेवार्थं प्रतिपादयति। उपसर्गेणात्र नार्थः।

पाञ्चालास्तव पश्चिमेन त इमे वामा गिरां भाजनाः (बालरामायणे)। अत्र पितृचरणाः – गिरां भाजनं वा भाजनानीति वा वक्तव्यम्। पदमास्पदं भाजनमित्यादयोऽजहल्लिङ्गाः शब्दा वाङ्मये प्रसिद्धाः।

सम्मानशब्दं बहुशो नपुंसके प्रयुञ्जते जनाः। तन्न साधु। शब्दोऽयं मन्यतेर्घञि व्युत्पद्यते। तेन सम्मान इत्येव साधु। इयमेव स्थितिराधारशब्दस्यापि।

अपीयं वियति सम्पतन्ती बलाकपङ्क्तिर्दृष्टेस्ते गोचरा इत्यत्र गोचरा इति पदे दोषं पश्यन्ति दोषज्ञाः पितृचरणाः– गोचरसंचरेत्यादिना गोचरशब्दो घान्तो निपातितः। घाजन्त इति चायं नैयत्येन पुमान्। गोचर इत्येव साधु।

को नाम सुधीश्चलाचलान् प्राणान् प्रति मानं यच्छेत्। अत्र पितृचरणानामिदं वचः – प्रतिः प्रतिनिधिप्रतिदानयोः इति प्रतिशब्दः कर्मप्रवचनीयः। प्रतिनिधिप्रतिदाने च यस्मात् इति कर्मप्रवचनीययुक्ते पञ्चमी। तेन चलाचलेभ्यः प्राणेभ्य इति स्यात्।

आन्दोलयन् विशिखमेककरेण सार्धम् (हनुमन्नाटके, ४.१)

अत्र पितृचरणाः– एककरेणेति करणे तृतीया। तेन सार्धमित्यनेन नार्थः। दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् इति मनुस्मृतौ न्यसेदित्यपशब्दः। असिर्दैवादिकः। न्यस्येदित्येव साधु। उदयति दिशि यस्यां भानुभान् सैव पूर्वा (उदयनाचार्यः) इत्यत्र उदयति इत्यपशब्दः। अयिरात्मनेपदी। उदयते इत्येव साधु।

अत्र ग्रन्थे पितृचरणैरपशब्दप्रयोगा एव न केवलं निर्दिष्टाः किं वा तत्रापशब्दत्वमित्येव वा नाऽऽलोचितं तत्स्थाने कः साधुः प्रयोगः स्यादित्येव वा

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

नोक्तमपि तु तत्समाधानमपि प्रस्तुतम्। ङमो ह्रस्वादचि ङमुण्नित्यम् इति पाणिनिनियमः। स च सनाद्यन्ता धातव इति सूत्रं कुर्वता तेन स्वयमेव न पालित इति प्रायोवादः। सन्नाद्यन्ता इति रूपेणात्र भाव्यं ङमुटि सति। तत्र पितृचरणा एवं समादधति– ङमो ह्रस्वादचि ङमुण् नित्यमित्यत्र नित्यशब्दोऽ–भीक्ष्णवचनः, यथा नित्यप्रहसितः, नित्यप्रजल्पित इत्यादिषु। तेनाभीक्ष्णं ङमुडागमो भवति। क्वचिन्नैव भवतीति सनाद्यन्ता इति सूत्रकारप्रयोगः साधुः। एवमेव भट्टिपद्ये हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः इत्यत्र 'सुभ्रु' इति प्रयोगे ह्रस्वोकारप्रयोगं समादधति पितृचरणाः– सुभ्रु इति सम्बुद्धौ भट्टिप्रयोगः। सुभ्रूरिति चेष्यते। अयमत्र समाधिर्जयमङ्गलायाम्–भ्रूशब्दात् अप्राणिजातेश्चा–रज्ज्वादीनामित्यूङ्। उवर्णान्तमात्रस्य विधानाद् बहुव्रीहिः, उपसर्जनत्वं च, पुनः स्त्रियामूङ् । अन्तादिवच्चेति पूर्वं प्रत्यन्तवत्त्वात् प्रातिपदिकत्वम्। अतः सम्बुद्धौ ह्रस्वत्वम्।

## १७२

पितृचरणानां हस्तलेखोऽतीव शोभन आसीत्। मुक्ताकणसंघात इवासीत्तदक्षरविन्यासः। स आसीद्वस्तुतो नेत्ररसायनमेव। हारि तत्सौष्ठवं हठादाकर्षति स्म लेखनविधिविशेषज्ञानपि। रेखाविरहितमेव पत्रखण्डं पितृचरणा लेखनार्थमुपायुक्षत। तत्र ऋजुता नांशतोऽपि व्याहताभूत्। अक्षरविन्याससूक्ष्मत्वं तल्लेखनस्य वैशिष्ट्यमासीत्। अल्पेऽपि स्थाने बहुलेखन आसीत्तेषामभिनिवेशः। प्रतिपृष्ठं चत्वारिंशद्वा ततोधिका वा पङ्क्तीस्ते विन्यास्थन्। यदि ततोऽप्यधिकपङ्क्तिविन्यासोऽभूत्तदा परममाह्लादं वहन्तो मां वा मद्धर्मपत्नीं वाऽऽहूय तेऽवोचन्– पश्य, अद्य मया पञ्चचत्वारिंशत्पङ्क्तयः पत्रखण्डे विन्यस्ता इति। शोभनो हस्तलेखो मदीयो हस्तलेखो न शोभन इति ते तत्परिष्कारार्थं मां प्रैरिरन्। शोभनो हस्तलेखो नेत्रम्पृणो भवति, तदर्थं प्रयस्येति च मामबूबुधन्। परं लिपिविन्यासे यत्कौशलं तेषामासीत्तत्कलयाऽपि मयि नास्तीति मां तुदत्येव।

पितृचरणाः प्रायशः पोस्टकार्डरूपाण्येव पत्राणि प्रैषयन्, यदा कदान्तर्देशीयान्यपि। क्वाचित्कतयैवावेष्टनकान्तःस्थपत्रखण्डरूपाणि पत्राण्यपि ते प्राहैषुः। पोस्टकार्ड इत्यत्र यावदधिको वस्तुविन्यासः स्यात्तावदधिको भवेदित्यत्राभूत्तेषां प्रयासः। सूक्ष्मतराण्यक्षराणि तदर्थमुपयोगीन्यभूवन्निति ते तानि समशिश्रियन्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

यत्पत्रं तैः प्राप्तं भवति स्म तत्प्रतिवचोऽकालहीनं प्रेषयितव्यमित्यासीत्तेषां स्वो भावः प्रकृतिनियतत्वादकृतकः। पत्रमञ्जूषिका रूपनगरस्थमस्मद्गृहं निकषैवासीत्। तत्र स्वयं गत्वा वा मद्धर्मपत्नीं वा मां वा सम्प्रेष्य ते पत्रं तदन्तरकार्षुः। मञ्जूषिकापुरोभागे पत्रनिर्गमकालो भवति निर्दिष्टः। ततः पूर्वमेव पत्रं तदन्तर्गतं भवत्वित्यत्राभूत्तेषामाग्रहः। यद्दिने पत्रं सन्दृब्धं तस्मिन्नेव दिने यदि तन्न निर्गच्छेच्चेत्तर्हि विषादस्तानाक्रमीत्। सार्धत्रिवादनं वा चतुर्वादनं वाऽभूदन्तिमः पत्रनिर्गमकालः। स नातिक्रामेदित्याग्रहग्रहिला वैयाकुलीं भजमानास्ते समलक्ष्यन्त।

पत्रेषु विविधान् विषयांस्तेऽस्प्राक्षुः। नाना पत्राणि तैर्मयि प्रेषितानि यदाऽहं दिल्लीतो बहिरासम्। तेषु कतिचन मया विश्वसंस्कृतमित्याख्यायां होशिआरपुरस्थविश्वेश्वरानन्दवैदिकशोधसंस्थानपत्रिकायां 'श्रीचारुदेवशास्त्रिणां संस्कृतपत्राणीति' शीर्षकेण प्रकाशितानि। तानि ततो मट्टिपणीसहचरितानि निदर्शनरूपेणात्रोद्ध्रियन्ते—

मदुपोद्घातः— पुण्यश्लोकैः श्रीचारुदेवशास्त्रिभिस्तथाऽऽत्मा संस्कृताय समर्पितोऽभूद्यथा ते संस्कृतज्ञान् स्वबन्धून् स्वसुहृदश्च संस्कृतेनैव पत्राणि प्रैरिरन्। परश्शतानि तादृशानि पत्राणि तैः प्रेषितानि। यदि तद्बन्धवः तत्सुहृदश्च तेष्ववहिताः भवेयुस्तर्हि महानयं पत्रसङ्ग्रहः प्रकाशितः सन् बह्वुपकुर्वीतास्य जगतः। संस्कृतवाग्व्यवहारे यथा तेषां नैपुणी न तथाऽन्येषां बहूनां प्राचामपि, किमुतार्वाचाम्। ये हि महावैयाकरणस्य कविमूर्धन्यस्य भट्टेरपि काव्ये स्खलितानि निरदिक्षन्, "भट्ट्याद्यैः सूरिभिश्चापि सम्प्रदायो न रक्षित" इति चोदजूघुषन्, कस्तत्तुलामधिरोहेत्। तेषां सुरगवीगुम्फा न केवलं तद्ग्रन्थेषु तन्निबन्धेष्वेव वा जाग्रत्यपितु तत्पत्रेष्वपीति संस्कृतवाङ्मये तान्यन्तर्भावमर्हन्ति। तेभ्योऽपि संस्कृतवाग्रचना तस्यास्तात्त्विकं स्वरूपं च ज्ञातुं शक्येतेति निर्मायं ब्रूमः। लोकस्याचार्यकं कुर्वाणाः शब्दप्रमाणका एते विद्वत्प्राग्रहरा यं कमपि विषयं संस्कृतेनोपास्थापयंस्तेनैव साधिष्ठः संस्कृतवाग्व्यवहारः शिक्षितुमशक्यत।

अहं तेषां प्रियः पुत्र इति काले काले ते मां पत्राणि प्रैरिरन्संस्कृतेनैव। तानि प्रायशः सर्वाण्येव मयि सन्ति। सोऽयममूल्यो मे संग्रहः। दिल्ल्यागमनात्पूर्वं तानि तैर्मां प्रति प्रेषितानि। देशविभाजनानन्तरं प्रथमं तेऽहियापुरमितिनामकं स्वजन्मस्थानं प्राप्तास्तदनु च महाविद्यालयसेवार्थमम्बालापुरीम्। अहं तु तदा वाराणस्यामधीयान आसम्। अतः पत्रमाध्यमेनैवावयोः संव्यवहारः प्रावर्तत। वाराणस्यामध्ययनं पर्यवसाय्याहं दिल्ल्यां प्राध्यापकरूपेण नियुक्तः। तदा पितृचरणा विश्वेश्वरानन्दवैदिकशोधसंस्थानेऽवैतनिकरूपेण कर्मरता आसन्। आसन्नवर्षद्वयं दिल्ल्यां व्यतियाप्य कञ्चित्कालमहं कुरुक्षेत्रे व्यत्ययापयम्। तदनु पुनरपि दिल्ल्यां


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

नियुक्तिमापम्। तदाप्रभृति पितृचरणसेवावकाशो मया साक्षाल्लब्ध इति धन्यमात्मानं कलयामि। यावन्तं कालं तेभ्योऽहं दूरेऽभवं तावति काले तैर्नाना पत्राणि प्रेषितानि। तेषु नैके कौटुम्बिका विषयास्तैः स्पृष्टाः प्रबोधितश्चाहमनेकान् अर्थान्।

पितृचरणा मम स्वास्थ्यविषये बहु चिन्तिता आसत। व्यायामस्तदर्थं सुतरामावश्यक इति ते मां बहुधाऽवोचन्। जनेन न केवलमध्ययनरतेनैव भाव्यं शरीरस्वास्थ्यायापि काश्चित्कालकलास्तेन विनियोज्या इति ते प्रण्यगदन्।

१३.६.१९५४ दिनाङ्के स्वग्रामादहियापुरात्प्रेषिते पत्रे व्यायामविषये ते मामित्थमबूबुधन्— "स्वे कर्मणि निरन्तरं व्यापृतोऽश्रान्तं च श्राम्यन् मा स्म शरीर उदासितो भूः। इदं हि सत्तमं साधनं सिद्धीनां भृशं चोपकारकमायतेः।" कस्मिंश्चित्पत्रे मया लिखितं महती शीर्षवेदना मेऽस्ति। ततः परतरं च कञ्चित्कालं नाहं पत्रं प्राहिणवम्। तदेवोद्दिश्याम्बालयतः (अम्बालातः) २३.३.१९५४ दिनाङ्के प्रेषिते पत्रे पितृचरणा माममलिखन्— "अद्य चिरं ते कुशलोदन्तस्य सम्प्राप्तस्य। कच्चित्स्वस्थोऽसि शरीरे? यत्त्वं क्वचित्पत्रेऽलेखीः— शीर्षवेदना मेऽस्तीति शिरोभ्रान्तिर्वा मे जायत इति तत्परामृशतोरावयोर्मनः सव्यथमास्ते। कथय कीदृशीदानीं ते शरीरसमवस्थेति। कर्हि विश्वविद्यालयो नैदाघस्यानध्यायस्य कृते संवरीता (कर्मणि लुट्), कर्हि च वाराणसीतः प्रतिष्ठाससे? संवृते विश्वविद्यालये वाराणस्यां स्थित्या नार्थः, निदाघप्रसरदोषाश्च प्रचुरा भवन्तीति मन्येऽप्रैलमासारम्भ एव ततः प्रस्थानीयम्। अहं त्वप्रैलमासोपक्रम एव होश्यारपुरं प्रति प्रस्थास्ये। तत्रोपसर्गार्थचन्द्रिकायाः कृते जर्मनकोषान्मे बहु सङ्ग्राह्यमस्ति। यदीच्छसि, त्वमपि तत्रैव मया समं पादोनं मासमवतिष्ठेथाः स्वमध्ययनं च प्रवर्तयेथाः। यथा ते रोचते तथा वा करिष्यसीति कामचारस्ते।" ३०.७.१९५६ दिनाङ्के होश्यारपुरतः प्रेरिते पत्रे व्यायामविषये ममोदासीनतामुपलक्ष्य पितृचरणाः स्वकीयां मानसीं व्यथामित्थमाविरकुर्वन्—

"इदं च भूयोऽनुशास्मि त्वां शरीरे स्वेऽवधातव्यमिति। कुतस्त्वां व्यायामभीरुत्वमुपस्थितम्। किं शङ्कसे व्यायामो विकरिष्यति ते कायम्। यद्येवमस्थाने शङ्कितं ते। श्लथाङ्गः पिचण्डिलस्ते कायो दुर्भरतामिवोपैति। मेदस उपचयो रुजां पृथग्विधानामगारमिति महतीं चिन्तां मे जनयति। शारीरीं समवस्थां ते चिन्तयन्नहं न क्षणमपि निर्वृणोमि। यदेतरान् श्लिष्टावयवान् दृढाङ्गांस्तरुणान् पश्यामि स्पृहयामि तादृशस्त्वमपि स्या इति। परमसकृत् प्रबोधितोऽपि न त्वमनिष्टामायतिमुत्प्रेक्षसे न च तां वारयितुं मनागपि चेष्टसे। वत्स! कालस्तेऽयं शरीरं समाधातुम्। अतिक्रामति कालः, अपुनरावर्ती चायम्। अद्य वत्सराः केचन प्रेरयतो मम। अप्येषा प्रेरणा फलवती भविष्यति? बाढमारभे चैव व्यायाममिति वचसा निर्वापय तप्तं मे चेतः।"


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

यथा व्यायामविषये पितृचरणाः काले काले मां प्राबूबुधंस्तथैवाध्ययनविषयेऽपि। आचार्यपरीक्षार्थं कथं मया प्रवर्तितव्यमितिविषये २७.११.१९५३ दिनाङ्के प्रेषिते पत्रे ते मामित्थं निरदिक्षन्– "सर्वं प्रच्छनीयमिति सम्भावितं भाष्यादिस्थलम्– सकृदावर्तनीयम्, प्रश्नोत्तरमालया च निबन्धनीयं, गुरुचरणैश्च परिष्कारणीयम्। इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणामिति स्मरणीयम्।"

पीएच्. डी. इत्युपाध्यर्थं काशीहिन्दूविश्वविद्यालये भर्तृहरिकृतवाक्यपदीयस्य दिक्कालसमुद्देशावधिकृत्यानुसन्धानकर्मण्यहं प्रावृतम्। तद्विषयेऽपि पितृचरणाः काले काल इतिकर्तव्यताप्रबोधनेन बहु ममोपाकुर्वन्। अम्बालयतः षष्ठे दिशाम्बरस्य वासरे (वर्षनिर्देशस्तत्र नास्ति) प्रेषिते पत्रे त एवमवोचन्– "हरिमतसंवादीनि तन्मतविसंवादीनि वाऽन्यदीयानि वाक्यानि यथास्थानमुपन्यसनीयानि, तत्तदर्थश्च सङ्ग्रहेण देयः। तात्पर्येऽवधातव्यं न तु पदार्थे। उद्धरणानीमानि पत्त्रपार्श्वमूले देयानि, न तु मध्ये, तत्र तु तदर्थ एव संकेत्यः। इति सर्वमालोच्य प्रक्रमः कार्यः।"

१४.१२.१९५४ दिनाङ्के प्रेषित एकस्मिन्नपरस्मिन्पत्रेऽपि शोधप्रबन्धनिर्माणविषये विस्तरेण ते मां निरदिक्षन्– "त्वन्निबन्धनीयेऽर्थे त्विमां विधामनुविधेयामुत्पश्यामि। प्रथमं तावद् हरिणा कारिकाभिरुपनिबद्धोऽर्थ आङ्ग्लभाषान्तरेण सहचरितो विशदं संनिधाप्यः। पश्चाद् एके, अपरे इत्यादिकारिकागतं पदमाश्रित्य वैशेषिकाणां मतमिह हरिणा प्रत्यवमृष्टम्। तथा च प्रशस्तपादभाष्यादिषु तन्निबन्धनं दृश्यते किरणावल्यादिषु च विस्तरेण व्याख्यायते। सोऽयं सन्दर्भः प्रकृतार्थवैशद्यं करोतीति निखिलेनेहोद्ध्रियते। इत्यपोद्धृत्य तत्तद्ग्रन्थो देयः। निबन्धमध्ये तत्तदुद्धारार्थो देयः, पत्त्रपार्श्वे च मूलविन्यासः ससङ्केतः कार्यः। एवं क्रियमाणे निबन्धस्य ते कलेवरमपि पोषं पर्याप्तमाप्स्यति विषयश्च प्रतिपिपादयिषितः साधीयो विवरीष्यते।"

दिक्कालसमुद्देशसमीक्षणनिर्णयात्पूर्वं कदाचित्स्फोटनिर्णयविषये मया पीएच्.डी. उपाध्यर्थमात्मा व्यापारणीयो वा न वेत्यर्थं पृष्टास्तातचरणा ७.१२.१९५३ दिनाङ्केऽम्बालयतः प्रेषिते पत्र इत्थं प्रत्यपीपदन्– "स्फोटविषयं चेदनुसन्धेयं पश्यसि तर्हि तत्रैवाध्ययनं सविशेषं प्रवर्त्यताम्। इदं तावद् व्यवसेयं पूर्वैर्यावद् विवेचितं ततोऽभ्यधिकं किञ्चिद्विवेच्यमस्तीत्याहो नेति। यदि नाम सन्त्यपरामृष्टा ग्रन्थाः पूर्वैरनालोकितास्तदा ध्रुवं तत्र नूत्नोऽर्थः शक्यः उपज्ञातुम्। नूत्नार्थोपज्ञयैव च चारितार्थ्यं स्वस्याभ्युपेयम्।"


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पीएच. डी. उपाध्यर्थ स्वकीयः प्रबन्धो मया वर्षद्वयादरे काल एव समुपस्थापयितव्य इत्यासीन्मम संकल्पः। अल्पीयानेवासीन्मयि कालस्तं प्रणेतुम्, मासविशेष एव च तं समुपस्थापयितुम् इति चिन्ताचान्तचेता अहं पितृचरणान् स्वकीयां मनस्तान्तिमसुसूचम्। तज्ज्ञात्वा तैरहमित्थमनुशिष्टः—"अविदं ते वृत्तमवेदिषं च चिन्ताभराक्रान्तोऽसुखितश्चासीति। सत्यमनल्पं ते कृत्यमल्पीयांश्च त्वदुपयोग्यः कालः। अगृहीततत्तद्ग्रन्थाशयस्त्वं कथं तत्तन्मतं सङ्गृहणीयाः... तथाऽपि सततमभियुञ्जानस्त्वं तत्र सिद्धिमभीप्सितामाप्स्यसीति मा स्म विषदः। प्रारब्धं परिसमापनीयमिति धीयतां धीः।"

## १७४

न केवलं मदीया शास्त्रचिन्तैव तन्मनसि सततमवर्तत, मल्लौकिकसुखसौ-
विध्यसम्पादनसमीहाऽपि या हि ३०.१२.१९५४ दिनाङ्केऽम्बालयतः प्रेषितात्पत्रादुन्नेतुं
शक्यते— "पिण्ड्यस्तु प्रथमे सप्ताहे संस्कृताः स्थास्यन्ति। स सुजनो वाच्यः
स्वयमुपेत्य ता आददीतेति। किञ्च, त्वत्सकाशे यान्यतिरिक्तानि कुतुपादीनि
करण्डादीनि वा तानि प्रियं धर्मपालं द्वारीकृत्येह प्रहेयाणि यथा तानि
त्वदर्थेऽर्थसम्प्रेषणे समुपयोगं नीयेरंस्त्वदीयश्च भारः कयापि कलया लाघवमियात्।
घृतमात्राऽपि कियतीचित् सम्प्रेषयिष्यते प्रत्यहं समुत्पादिता।"

यद्यपि पितृचरणा निरन्तरं शास्त्रानुशीलनरता एवासंस्तथापि लौकिकज्ञानवैधुर्यं तेषां नाभूत्। महर्षिकण्ववत्तेऽपि यद्यपि नासन्वनौकसस्तथापि लोकेनासम्पृक्ता अपि लौकिकज्ञा अभूवन्। मां द्वितीयाश्रमोपसङ्क्रमयोग्यमुपलक्ष्य तद्विषयेऽपीतिकर्तव्यतार्थं ते मनो ददुः। कन्यापितरो यदा तान्प्राचूचुदंस्तदा ते तैः समगंसत कन्यकाश्चापि साक्षादकृषत। तादृशीमेकां कन्यकां साक्षात्कृतवतां तेषां मनसि ये भावाः प्रस्फुटितास्तांस्त इत्थं प्राचीकटन्— "भिषग्वरस्य गुण्यां तां कन्यकामप्यदर्शं तया समं कामपि कालकलां समलापिषं च। सर्वथा निभृता गुणाढ्याऽपि सा यत्सत्यं मह्यं नारुचत्। वर्णो नास्ति यः स्पृहाविषयः स्यात्। अङ्गसौष्ठवमपि नास्ति यद् रुचिरं स्यात्। कान्तिस्तु दूरापेता। कुलं सर्वथाभ्येषणीयसम्बन्धम्। डाक्टरोऽपि मधुर उदारः प्रश्रितश्च। परं कन्यकाया मुखाकृतिर्मुखवर्णश्च सुतरां शोभाविधुरौ। शरीरे किमपि वैवर्ण्यमपि लक्ष्यते। ईक्षणे च सहायापेक्षे। एवं सति किं क्रियताम्?"

एकदा मत्पितृव्येण कस्यचनात्युच्चैःपदाधिकारिणः सुताया विवाहप्रसंगो मदर्थं समुपस्थापितो यदुद्दिश्य नाना विकल्पाः पितृचरणानां मनसि प्रादुर्भूता



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

ये वैवाहिके विषयेऽपि तेषां सूक्ष्मेक्षिकां गहनं च चिन्तनमभिव्यञ्जन्ति–"बहुशश्चिन्तितोऽयमर्थो मया। उच्चैस्तरेण राज्ञामर्चितेनान्ववायेन नोऽभिसम्बन्धो नः समुत्कर्क्ष्यतीत्येकः पक्षः। उच्चैरास्पदप्रतिलम्भेऽपि महीयोऽधिकारप्राप्तावप्यङ्गभावं यायादिति नासम्भवि। परमेतादृशे कुले सम्भूता कन्यका किंशीला भविष्यति, नम्रा वोद्धता वा, सेवापरा सेवापराङ्मुखी वा, वृद्धेषु भक्तिमती वा निरपेक्षा वेति सन्देहास्कन्नोऽर्थः, त्वय्यप्यनुगुणं वर्ततोत प्रतीपमिति सावलेपा गृहं निरयीकुर्यादित्यपि शङ्क्यते। सर्वथाऽन्यादृशोऽस्माकमाचारो विचारश्च तदन्वयान्वितादाचाराद् विचाराच्च। तेन सर्वं साध्वालोच्य प्रक्रमः कार्यः। मा स्म वयमस्थाने पदमर्पिपाम।"

(होश्यारपुरात् ६.१.१९५६ दिनाङ्के प्रेषितात्पत्रादुद्धृतोंऽशः)।

अहमपि पितृचरणान् पत्राणि संस्कृतेनैव प्रैरिरम्। ते च तेषु यदि किमपि चिन्त्यमपश्यंस्तर्ह्यवश्यमेव तन्मां प्रत्यबोधयन्। तथाहि–१. षूच पैशुन्येऽदन्तः। तेनाऽग्लोपित्वादुपधाह्रस्वो नेति असुसूचत् इति रूपम्। 'अह्नोऽह्न एतेभ्य' इति सर्वाह्ण इति भवति। स्फुर सञ्चलने इत्यस्य णिचि लुङि अपुस्फुरदिति रूपमात्वपक्षेऽपीति माधवीयधातुवृत्तिः। (अहियापुरतोऽगस्त्यस्य चतुर्थेऽहनि वर्षसङ्केतस्त्वत्र नास्ति– प्रेषितात्पत्त्रादुद्धृतोंऽशः)।

२. 'यच्च त्वया पूर्णचन्द्रमहं स्मर्तव्य इत्युक्तं तत्साधूकरणीयम्। न हि स्मरतिर्द्विकर्मकः। स्मारयतिरपि द्विकर्मको नेति दीक्षितः। गत्यादिसूत्रे बुद्ध्यर्थकत्वेन ज्ञानसामान्यवचना जानातिप्रभृतयो गृह्यन्ते। स्मरतिस्तु ज्ञानविशेषवचनः। भवभूतिस्तु नैतदाद्रियते यदाह– य एव दुस्सहः कालस्तमेव स्मारिता वयमिति। तेनाऽहं पूर्णचन्द्रेण स्मारयितव्य इति दीक्षितमतेन, पूर्णचन्द्रं स्मारयितव्यः, पूर्णचन्द्रतः मां स्मारयितव्य इति मतान्तरेण तत्र प्रयोज्यकर्मणि वा तव्यः। बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छयेति वचनात्।"(अम्बालयतः २६.११.१९५३ दिनाङ्के प्रेषितात्पत्त्रादुद्धृतोऽशः)।

३. मनसिकृत्य मनसिकृत्वेति चोभयं साधु। अनत्याधाने उरसिमनसी इति विभाषा गतिसंज्ञाविधेः। (१५.३.१९५५) दिनाङ्के प्रेषितात्पत्त्रादुद्धृतोंऽशः)।

४. कर्मणि लुङि बहुवचने अदायिषत अदिषत इति रूपद्वयं भवतीति स्मरणीयम्। तत्र चिण्वद्भावकृतो विशेषः। (अम्बालयतः ६.३.१९५४ दिनाङ्के प्रेषितात्पत्त्रादुद्धृतोंऽशः)।

कदाचित्पितृचरणा जिज्ञासामपि व्याकरणविषयिणीं काञ्चन स्वपत्रे समुपास्थापयन्। प्राचोदयंश्च मां तत्समाधानाय काशिकान्मे गुरूनुपसत्तुम्। अम्बालयतः १५.३.१९५५ दिनाङ्के प्रेषिते पत्रे ते निरदिक्षन्–

"इदं च ते गुरवो जिज्ञासितव्याः। विसंपूर्वाद् वदेर्विमत्यर्थे आत्मनेपदं भवत्युत नेति। भासनोपसम्भाषेत्यादिसूत्रे भासनादिषु विशेषणेषु सत्स्विति वृत्तौ


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

स्थितम्। उपसर्गनियमस्तु नोक्तो विपूर्वता वा न नियता। विमतेरन्यत्र तु कामं परस्मैपदं भवतु यथा विसंवदन्त्यक्षराणीत्यादौ, विमतावात्मनेपदं कुतो न स्यात्।"

पितृचरणानां होश्यारपुरीयसाध्वाश्रमस्थं विश्वेश्वरानन्दशोधसंस्थानं प्रति विशिष्टोऽनुरागोऽभूत्। काले काले ते तदुपासदन्। केवलमेकमवसरं विहाय यदा मातृचरणा अपि तैः सहासन्, त एकाकिन एव तदध्यवसन्। तत्र भोजनसंविधा साधीयसी नेति कदाचित्ते मामसुसूचन्– "इदानीमहं स्वकार्यनिरतोऽनन्यमनाः सुखं कालं नयामि। इदमेवैकं दुःखाकरोति नेह तादृशी भोजनसंविधाऽस्ति यादृशी ममानुगुणा स्यात्। सुलभे नाम दधिपयसी, परं ते याप्ये भवतो न प्रशस्ये। शाकाद्यपि न विविच्य पाकाय परिगृह्यते, किन्तर्हि यत्किमपि स्वल्पव्ययं भवति तदादीयते। उपशयीत भोक्तुर्मा वोपशयिष्ट तदिति नाद्रियते। (६.४.१९५४ दिनांके होश्यारपुरात्प्रेषितात्पत्राद्दुधृतोंऽशः)।

यदा कुरुक्षेत्रे मे नियुक्तिर्जाता तदा मया सहयोगिषु छात्रेषु च कथं वर्तितव्यमिति ते मामन्वशिषन्– "इदमेव तु विवक्षे– स्वे कर्मणि सर्वात्मना व्याप्रियस्व, आर्जवेन च गुरुषु वर्तस्व, विनेयेषु च हार्देनातिरिक्तेन प्रवर्तस्व। नान्यच्चिन्तय, न च रुष्य, न वाऽपरागमर्हति जने समीरय" (देहलीतः १८.३. १९५८ दिनाङ्के प्रेषितात्पत्त्रादुद्धृतोंऽशः)।

एवं सन्ति बहुविधानि वाक्यानि पितृचरणानां पत्त्रेषूपदेशपराणि येषां सार्वकालिकं सार्वभौमिकं च महत्त्वम्। मामुद्दिश्य प्रणीतानि तान्युपदेशवचांसि मम सुतरामुपाकुर्वन्नन्येषामपि तथैवोपकुर्युरिति तानि विचार्य विचायमत्रोपन्यस्तानि। तादृशा विद्वत्तल्लजास्तथा वचांसि विन्यास्थन्यथा तानि सर्वस्य लोकस्योपकारकाणि भवितुमर्हन्ति।

## १७५

पितृचरणविषयकचर्चाप्रसंगे कञ्चन प्रसंगविशेषमत्रोपस्थापयितुमिच्छामि यत्तेषु तच्छिष्याणां परमादरमभिव्यनक्ति। अहमप्यासमेतत्साक्षी। देशविभाजनानन्तरं प्रथमं स्वपितृपैतामहं स्थानं पञ्चनदीयहोशिआरमण्डलान्तर्गताहियापुरसञ्ज्ञकं ग्रामं मत्पितृचरणा उपाश्रिताः। अस्मत्कुटुम्बिषु न कोऽपि ग्राममध्युवास। पितृचरणा लवपुरं यत्पाकिस्तानाङ्गभूततां गतमासीदध्यवात्सुर्ज्येष्ठताताः कनिष्ठ– ताताश्चाम्बालयम्। ग्राम्यं गृहं जीर्णतां शीर्णतां च गतं बभूव। तत्पुनर्निर्मातव्यमिति



CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

पितृचरणैरास्थितः संकल्पः। विषमेऽपि, सर्वत्र प्रवृत्त औत्तराधर्येऽपि, भवननिर्माण-सामग्र्या निर्माणकर्तॄणां चोपलब्धावत्यन्तकाठिन्येऽपि गृहनिर्माणकार्यं तैः प्रारब्धमिति पूर्वमुक्तमेव। यावद् गृहं तन्निर्मितं भवति तावत्प्राप्ता भवति सूचना यल्लवपुरीयो डी.ए.वी. कालेजोऽम्बालयनगरे पुनः स्थापितो भविष्यतीति। ये चापि प्राध्यापकास्तत्र लवपुरे कार्यरतास्ते पुनरत्र कार्यं कर्तुं शक्नुवन्तीति। एतत्सूचनानुसारेण पितृचरणा मातृचरणैर्मया च साकमम्बालयशिबिराख्यं नगरमभिप्रपन्नाः।

पाकिस्तानात्समागतानां कष्टश्रितानां शरणार्थिनां साहाय्यार्थं भारतशासनेन कृताऽऽसीत्काचन व्यवस्था। तत्साहाय्यं तैरेव लभ्यं बभूव येषु प्रमाणपत्रमासीत्। तच्चाधिकरणिकादेव सुलभं बभूव। एतदर्थं त एकस्मिन् दिनेऽधिकरणमुपेताः। अहमपि तैः सहासम्। अधिकरणद्वारि स्थितास्ते यदाऽधिकरणिकमपश्यंस्तदाऽवोचन् परिचितैवास्याकृतिर्लक्ष्यते। तदा मयोक्तमग्रे सरन्तु भवन्तो येन स्पष्टरूपेण भवन्तो निभालयितुं शक्नुयुः। तेऽधिकरणान्तः प्रविष्टाः। यथैवाधिकरणिकस्य दृष्टिस्तेषु पतिता तथैव स ससम्भ्रमं गुरुचरणाः प्राप्ता इत्युक्त्वा स्वासनादुदतिष्ठत्[३३२]। तस्मिन्नुत्थिते समाप्तमभूदधिकरणकार्यम्। अधिकरण एतादृशी पद्धतिः। यद्यधिकरणिकः स्वासनं विजहात्यधिकरणकार्यमवरुद्धं भवति। एतज्जानानोऽप्यधिकरणिकः नालं प्रभुः स्वस्य संयमने बभूव। पितृचरणानां पूर्वच्छात्रोऽसौ तेषु दृष्टौ पतितेष्वात्मानमधिकरणं तत्कार्यं च सर्वमपि व्यस्मार्षीत्। एतत्तस्य पितृचरणेष्वादरस्य परां कोटिमभिव्यनक्ति। यथा ते स्वच्छात्रेष्वस्निह्यंस्तथा तेऽपि तेषु।

गुण्येषु पितृचरणेषु 'गुणानुबन्धित्वाद् गुणाः सप्रसवा' इवासन्। तेषां गुणेषु दानशीलता विशेषोल्लेखमर्हति। तदुदाहरणरूपेण द्वित्रान् प्रसंगानत्र प्रस्तौमि। पितृचरणानामासीत्कश्चन सतीर्थ्यः। तैः स्नातकपरीक्षोत्तीर्णैवासीत्कुत्राप्यध्यापनमपि न प्रारब्धमासीद्यदा सोऽपस्माररोगेण ग्रस्तो बभूव। स आसीदत्यन्तं दरिद्रः। तथैवासन् पितृचरणा अपि। सतीर्थ्यचिकित्सार्थं धनं कथं संगृह्येतेति ते महतीं चिन्तामापन्नाः। अगतिकगतिकत्वाद्यानि स्वर्णपदकानि तत्तत्परीक्षासु प्रथमस्थानावाप्तिकारणाल्लब्धान्यासंस्तैस्तानि विक्रेतुं ते मनो बबन्धुस्तथैव चक्रुश्चापि। तद्विक्रयेण यो राशिस्तैः प्राप्तो बभूव तेन सतीर्थ्यस्य चिकित्सां ते कारयामासुः।

---

३३२ उदोऽनूर्ध्वकर्मणि (१.३.२४) इत्यनेनानूर्ध्वकर्मण्येवात्मनेपदविधानम्। अत्र च ऊर्ध्वकर्म (= उत्थानम्) अभिप्रेतमतो नात्मनेपदम्।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

शिक्षायाः प्रचारः प्रसारश्च तेषामत्यन्तमभीष्टावास्ताम्। स्वजन्मस्थले तैर्डी.ए.वी. हाईस्कूल इति नाम्ना महाविद्यालय एकः स्थापितोऽभूत्। स्थापनानन्तरं कतिपयवर्षाणि तत्सञ्चालनार्थमपेक्षितं धनं नालभ्यत। यावती न्यूनता तत्राभूत् तावतीं ते स्ववेतनादपूरयन। तेऽतीव मितव्ययिन आसन्। न्यूनातिन्यूनेन व्ययेन ते लोकयात्रां प्रावर्तयन्। अतः स्वल्पतरादपि वेतनात्कञ्चिद्राशिं ते सञ्चेतुमशकन्नेव। तं च ते लोक्येषु कर्मसु विन्ययुञ्जत।

दिल्ल्यामस्त्येकोऽन्धकन्याविद्यालयः। प्रतिवर्षं नियमेन कञ्चिद्राशिं ते तस्मै दानरूपेणादुः। यदा तेषामन्तकालः उपसीदति स्म तदैकस्मिन् दिने पौत्रं शरच्चन्द्रं तत्पत्नीं शालिनीं चाहूय तेऽवादिषुः — उभावपि युवां प्रतिशृणुतां मयि दिवङ्गते युवामन्धकन्याविद्यालयाय यथासामर्थ्यं राशिं नैरन्तर्येण प्रदास्यथः। नाहमेतदर्थं पुत्रं वा स्नुषां वा प्रेरयामि। युवामेव हि प्रेरयामि। तेनाश्वस्तो भवामि यन्मम गोत्रापत्यं यावत्परम्परैषा प्रचलिष्यतीति। पौत्रेण तत्पत्न्या च कृते प्रतिश्रवे सुतरां निर्वृतस्वान्तास्तेऽलक्ष्यन्त।

न केवलं स्वयमेव ते दाने प्रवृत्तिमन्तोऽभूवन्नपि त्वन्यानप्येतदर्थं प्रैरिरन्। ये तेषां प्रातर्भ्रमणसहायास्तद्भक्तास्तानप्यनेकशस्ते स्वजन्मभूमिष्ठहाईस्कूलकृत आर्थिकं साहायं प्रार्तथन्त। अहं कदाचिदाक्षिपमपि नैतदुचितमिति प्रतिपादयन्। याञ्जनान् भवन्तः प्रार्थयन्ते तैर्महाविद्यालयो दृष्टोऽपि न, तद्विषये ते किञ्चिज्जानन्त्यपि न। केवलं भवद्वचसि प्रत्ययितास्ते भवत्सु बद्धादरा दानरूपेण राशिं प्रयच्छन्ति। तदा त इदमेवावोचन् — सार्वजनिकानि कार्याणि दानेनैव सिध्यन्ति। अयमेव लोकसंग्रह इति य उच्यते। सर्वं कार्यं शासनेनैव न सम्पादनीयं भवति। लोकेनाप्यत्र प्रवृत्तिमता भवितव्यम्। धनार्जनं तावदात्मनोऽर्थ एव न भवत्वपि तु लोककल्याणायापि। अत्र विषये गीतावचनं तेऽनेकश उदधार्षुः — अघं ते भुञ्जते पापा ये पचन्त्यात्मकारणात्। वैयाकरणास्तेऽरातिशब्दव्याख्याम— प्येतदर्थौपयिकतया प्रास्तौषुः। अरातिः शत्रुः। कुतः? नास्ति रातिर्दानं यस्य। यो न ददात्यात्मार्थमेव च धनमर्जयति तत्संग्रहे च भवति रतः स भवति समाजस्य शत्रुः। यो न ददाति, यस्य रातिर्दानं नास्ति इत्येतद्रूपमूलार्थकोऽरातिशब्दः कालेन शत्रुरूपार्थकत्वेन परिणतः।

पितृचरणाः सुतरामनुशासनप्रिया आसन्। तेषां जीवनचर्याऽत्यन्तं सुव्यवस्थिताऽऽसीत्। ममापि तथैव भवत्विति तत्रासीत्तेषां प्रबल आग्रहः। प्रातरुत्थाय भ्रमणार्थं ते मां प्राचूचुदन्। पुत्रक! शरीरेऽवधेहीति ते मामनेकशोऽचकथन्। प्रातः पादपा वनस्पतयश्च 'ऑक्सीजन' इत्याख्यं वायुविशेषमुत्सृजन्ति


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

यत्स्वास्थ्यायात्यन्तं हितं भवति। तं गृहाण। स्ववचस उपोद्बलनाय तेऽतीव मार्मिकीं हृदयस्पृशं गिरमुदगिरन् – अहो! विचित्रा लोकस्य प्रकृतिः। स हि विनैव धनं सहजरूपेण यदुपलब्धं भवति तन्नोपादत्ते, पश्चाच्च धनव्ययलभ्यात् सिलिण्डरात् तद् गृह्णीते। व्यायाममभ्यस्य नियमेनेति ते मां प्रैरिरन्। अध उद्ध्रियमाणं पद्यं तेषामति प्रियमासीत्–

व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च।
व्याधयो नोपसर्पन्ति वैनतेयमिवोरगाः।।

## १७७

विभवगुरुभिः कृत्यैः प्रतिक्षणमाकुलेन मया पितृचरणवचोऽनेकधा न पालितमतो नानारुजाभिराक्रान्तोऽहमभवम्। २०.५.१९९१ वर्षे पुरीस्थान् डा. सदानन्ददीक्षितान् लोकभाषाप्रचारसमितिसचिवान् प्रेषिते पत्रेऽयमेव भावो मया संस्कृतपद्यै–रित्थमाविष्कृतः–

स्वस्थे शरीरे कार्याणि कर्तुं शक्यानि नान्यथा।
अतस्तत्रावधातव्यं सविशेषं विपश्चिता।।
कृशे शरीरे कस्यापि साहाय्यं नोपलभ्यते।
सत्यमेवोच्यते प्राज्ञैः कृशे कस्यास्ति सौहृदम्।।
अतस्तात! प्रकर्तव्यो यथाशक्ति परिश्रमः।
कृतेऽतिक्रम्य शक्तिं स शरीरं सादयेन्ननु।।
मया नैतत्कृतं सत्यं पूर्वे वयसि तेन मे।
शरीरसादो येनाहं परितप्येऽधुना भृशम्।।
प्रबोधितोऽपि पितृभिर्मद्धिताकाङ्क्षिभिर्मुहुः।
नात्रावाधां स्वकार्यौघपरो ह्यबुधचेष्टितः।।
चटकाभिर्हृते धान्ये भवेत्क्षेत्रस्य या दशा।
वार्धके तप्यमानस्य तादृश्येवास्ति मे दशा।।

३०.९.२००७ दिनाङ्के डा. कृष्णलालमहाभागान् प्रेषिते पत्रेऽपि मया स्वकीयाऽविवेकिता शब्दैरेभिः प्रकटिता–

सर्वरात्रं विषादेन ग्रस्तोऽहं व्यत्ययापयम्।
वार्धक्यं सर्वकष्टानां मूलमित्यवधारयन्।।
पूर्वे वयसि न मया कायसंरक्षणे मनः।
प्रदत्तमिति तस्यैव विषाक्तं फलमश्नुवे।।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

निबद्धव्यो ग्रन्थ एष लेख्यो लेखश्च नूतनः।
रचितव्यं काव्यमिदमित्येवं गमितं वयः।।
विश्रमाय क्षणो नैव दत्तोऽभूद्, दत्तचेतसा।
कार्यान्तरेष्विति हहा! शरीरमवसादितम्।।
शरीरसादे को बन्धुः कः सहायः स्वकश्च कः।
रुग्णस्य जीवनं सत्यमूषरक्षेत्रसन्निभम्।।

पितृचरणाः स्नानात्पूर्वं नियमेन प्राणायाममभ्यस्यन् पञ्चेन्द्रियतैलाभ्यङ्गञ्च। चायादि तेभ्यो नारोचत। पयस्येव तेषां विशिष्टाऽभिरुचिरासीत्। फलेष्वाम्रफलं तेभ्यो भृशमस्वदत तत्रापि चोष्यं न तु खाद्यम्। ग्रीष्मर्तौ वातादान्[333] फलचतुष्कबीजैः[334] खसखसकणैश्च सह सूक्ष्मं सम्पेष्य पयश्च तत्र सम्मिश्र्य ते 'ठण्डई' इति लोकभाषायां प्रसिद्धं पेयं स्वयमपिबन् कुटुम्बिजनांश्चापाययन्। रसेषु मधुररस आसीत्तेषां विशिष्टोऽभिनिवेशः।

अहमेव वा मद्धर्मपत्न्येव वा जानाति यत्तेषां मिष्टान्नादिसाधनेऽप्यासीदनितरसाधारणं प्रावीण्यम्। तैः साधितानि पेड़ा, बर्फ़ी, बादाम–बर्फ़ी, पिस्ता–बर्फ़ी, बीजचतुष्टयबर्फ़ी, हलवेत्यादीनि मिष्टान्नान्यावाभ्यां स्वादुंकार[336] माशितम[335] शितानि। परिणते वयसि मातृपादानां नेत्रज्योतिषो मान्द्यात् भोजनादिसाधने ते तेषां साहाय्यमप्यकार्षुः।

असुलभकोपास्त आसन्। कदाचिदेव परुषाक्षरां गिरं ते प्रायोजयन्। सरलप्रकृतयस्तेऽनेकदा व्यंसकैर्वञ्चिता अपि। तथापि तांस्तेऽमृष्यन्नेव न तु कदाचिदन्याय्यं तेषु व्यवाहरन्, अबोधोपहता एते मय्यनुचितं व्यवहरन्तीति धियमास्थिताः।

## १७८

आसील्लवपुरे डी.ए.वी. हाईस्कूल इत्यत्र संस्कृताध्यापको नृसिंहदेवशास्त्रिनामा। स कालेन पितृचरणानां प्रेमपात्रतां गतः। तेन लवपुरे भूखण्डः क्रेतव्य आसीत्। यावदपेक्षं धनं तस्मिन्नासीदिति कश्चन तदंशस्तेन पितृचरणेभ्य ऋणरूपेण

---

३३३ बादाम इति यदुच्यते भाषायाम्।
३३४ चारमगज इति लोकप्रसिद्धम्।
३३५ स्वादुमि णमुल् (३.४.२६) इत्यनेन णमुल्।
३३६ आतृप्ति इत्यर्थः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

गृहीतः। किञ्चित्कालानन्तरं देशो विभग्नः। पाकिस्थानान्तर्भूताल्लवपुरात्पलाय्य तत्रत्या हिन्दवः शिष्याश्च यत्र कुत्रापि शरणं प्रपेदिरे। अस्मत्कुटुम्बकमपि धनेनार्थीति मातृचरणाः पितृपादान् प्राचूचुदन् यद्यतः कुतोऽपि नृसिंहदेवशास्त्रि–प्रवृत्तिमुपलभ्य स ऋणपरावर्तनाय प्रेरणीय इति। पितृचरणैः कुतोऽपि ज्ञातं स मेरठमधिवसतीति। ते तमुपेताः। स न केवलम् ऋणमेव नैव प्रत्यावर्तयदपि तु पितृचरणेषु बहु कुवाच्यमपि प्रायोजयत् । तेन पितृचरणा महान्तं विषादमापन्नाः। कालेन वृत्तमिदं तेषां स्मृतिपटलादपगतम्। एकस्मिन् दिनेऽकस्मादेवास्मद्गृहमुपेतः स नृसिंहदेवः कैंसररोगेण ग्रस्ता तद्भार्या दिवंगता, तस्यापत्यजातं महतीं विपदमापन्नमित्यादि बह्ववोचत्। तेन तस्य बुद्धिरुदिता यद् यतः पण्डितवर्येषु मयाऽनुचितमाचरितं तद्वशादेव कष्टपरंपरा मय्यापतितेति। भवतां धनं न मया प्रत्यर्पितमिति दण्डोऽयं मयि भगवता पातितः। अतो भवदृणं मया शोधनीयमिति। इत्युक्त्वा स राशिं पितृचरणेभ्योऽर्पयितुं प्रवृत्तः। पितृचरणैरुक्तं नेमं स्वीकरोमीति। कष्टश्रितस्य जनस्य धनं न मद्गृहे प्रवेशमर्हति। त्वय्येवैतत् तिष्ठत्विति। अहं स्वकुटुम्बमङ्गलेनार्थी। दुःखितस्य जनस्य धनं मम कुटुम्बकस्यामङ्गलं जनयेत्। पूर्वं स्वं प्रति प्रयुक्तामवमाननां सोढवद्भिरपि पितृचरणैः स भोज्यपानादिभिः सत्कृतः सूनृतया च वाचा। अहमासमेतस्य सर्वस्य वृत्तस्य प्रत्यक्षदर्शी। तत्स्मृतिरद्यापि मे रोमाञ्चं जनयति। अलौकिकचरित्रा मे पितृचरणा आसन्निति तदर्थं गर्वमपि कञ्चिद् वहामि।

आचारे व्यवहारे च सत्यमेवाशिश्रियन् पितृचरणा अर्थशुचितां च। सत्यव्रत इति यन्नाम तैर्मह्यं दत्तं तत्तेषां सत्यं प्रति कमप्यनितरसाधारणमनुरागं पिशुनयति। यावज्जीवं 'सत्यान्न प्रमदितव्यम्' इति श्रुतिवचस्तैः पालितम्।

काले काले मया नाना देशा गमनविषयीकृतास्तत्तद्गोष्ठीप्रसंगेन चान्यथापि च। तद्यात्राविवरणं कालान्तरे प्रकाश्यमाने ग्रन्थद्वितीयखण्डे प्रस्तोतुं मम संकल्पः। अस्मिन् खण्डे १९८५ वर्षपर्यन्तं मया स्वजीवनवृत्तं प्रस्तूयते। द्वितीयखण्डे, यथोक्तमुपरि, यात्राविवरणं प्रस्तोतुं मे मनः। तृतीयखण्डे च १९८५ वर्षानन्तरं वृत्तस्य वृत्तजातस्य। एवं खण्डत्रयेणासन्नसहस्रपृष्ठात्मकोऽयमात्मकथाग्रन्थः समाप्तिमेयात्।

यद्यपि यात्रावृत्तान्ता मया द्वितीये खण्ड एव प्रस्तोतुमभीष्टास्तथाप्येकं यात्रावृत्तान्तमस्मिन् खण्डेऽपि प्रस्तोतुमिच्छामि।


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

१९८४ वर्षेऽमेरिकादेशीयफ़िलाडेल्फ़ियानगरे पेन्सिलवेनियाविश्वविद्यालये विश्वसंस्कृतसम्मेलनस्यायोजनमभूत्। तत्राहमासं समुपस्थितः। सम्मेलनं नाना सत्रेषु विभक्तमासीत्। पञ्चदिवसीये सम्मेलने एको दिवसस्तादृश आसीद्यस्मिन् पृथक् पृथक् सत्राणि नाभूवन्। सर्वेऽपि प्रतिभागिन आसन्नेकस्मिन् विशाले कक्षे समुपस्थिताः। चर्चाविषय आसीदाधुनिकं संस्कृतवाङ्मयम्। तत्राध्यक्षपदेऽहमासं स्थापितः। मञ्चोपर्येकाऽऽसीदासन्दी, पटलमपि न। तत्राहमुपवेशितः। तत्रोपविष्टोऽहमपश्यं मत्सम्मुखे स्थितं विद्वज्जनौघम्, यत्रासन्मत्तो भूयस्तरां ज्येष्ठा वरिष्ठाश्च केचिद्विद्वत्तल्लजाः। चर्चायां प्रवृत्तायां भारतादागत एको विद्वदग्र्यो वक्तुमुपक्रान्तः—किमित्याधुनिकं संस्कृतवाङ्मयमिति। पूर्वतनं वाङ्मयमपि संस्कृतेनोपनिबद्धमद्यत्वे यद् वाङ्मयं विरच्यते तदपि संस्कृतेनैव। तत्कुतो न यद्वाङ्मयमद्यत्वे विरच्यते संस्कृतेन तत्कृते संस्कृतवाङ्मयमिति सञ्ज्ञा पर्याप्ता स्यात्। कोऽयं प्राचीनसंस्कृतवाङ्मयाधुनिकसंस्कृतवाङ्मयविभेदः? यदा नैकोऽपि समुपस्थितेषु विद्वत्सु तच्छङ्कां समाधातुं प्रवृत्तस्तदा—यद्यप्यहमध्यक्षासने स्थितः— मया चिन्तितं मयकैव प्रश्नोऽयं समाधातव्य इति। तदाऽहमेवं वक्तुमुपक्रान्तः—

आधुनिकं संस्कृतवाङ्मयं नाना दृष्ट्या प्राचीनसंस्कृतवाङ्मयाद् भिद्यते। प्रथमं वस्त्येव तावत्। अद्यतनं वाङ्मयं रामायणं, महाभारतं, पुराणानि, कथासरित्सागरादि वा तदानीन्तना उदयनादिलोकप्रसिद्धकथा एव वा न केवलमुपजीव्यत्वेनाश्रयत्यपितु साम्प्रतिके युगे यौतक – कन्याभ्रूणहत्या–ऽऽतङ्कवादार्थिकाशौच (भ्रष्टाचार इति सञ्ज्ञा प्रथते यदर्थं लोके)–स्वाधिकारप्रमादादि नानान्यविषयानपि। अयमेकोऽद्यतनस्य संस्कृतवाङ्मयस्य विशेषः। अपरो विशेषोऽस्य नूत्ना शब्दावलिः। आधुनिकयुगे पाश्चात्यप्रभावाद्वा कालप्रभावाद्वा बहु नूत्नमङ्गीकृतं जीवनशैल्यामस्माभिर्भारतीयैः – नूत्नाः पदार्थाः, नूत्नानि यन्त्राणि, नूत्नानि सञ्चारसाधनानि, नूत्ना चिकित्सापद्धतिः, नूत्नानि शासनप्रबन्धन–वाणिज्यव्यवसाय–धनागारप्रबन्धनशास्त्राणि, नूत्नानि शस्त्रास्त्राणि च। तदर्थं नूत्नाः शब्दा अपेक्षिताः। ते नाम भवन्ति कल्पनीयाः संस्कृतरचनाकारेण। तत्र त्रिविधां पद्धतिं स समाश्रयति। प्रथमा पद्धतिः– वैदेशिकभाषायां/भाषासु वा तदर्थे प्रयुज्यमानाञ्शब्दान्स संस्कृतप्रबन्धे यथास्वरूपं प्रयुङ्क्ते। तथाहि– अत्र प्लेग उत्पत्स्यते, मदनलालस्तं रिवाल्ह्वरस्य गोलिकानां बलीचकार, कोटादिकमपनीय नागदन्ते स्थापयति, पैण्टं निष्कास्य, चायं साधयति, प्लेटफार्मदिटिकटमध्ये, क्लर्का आगच्छन्ति। द्वितीया पद्धतिः– लोकभाषासु प्रयुज्यमानाञ्शब्दान् स संस्कृतरूपतामापाद्य व्यवहरति। सा संस्कृतरूपता तथा


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

भवति यथा ते शब्दाः स्वरूपतोऽप्यनेकशः पुनरर्थतोऽपि मूलसंस्कृतशब्द–वत्प्रतिभासन्ते येन संस्कृतगद्यबन्धे वा पद्यबन्धे वा ते प्रक्षिप्ता इति प्रतीतिं परिहृत्य संस्कृतमूलत्वात्तदङ्गभूता इति प्रतीतिं जनयन्ति। तथाहि – साबुन् इत्यर्थे स्वफेनशब्दः– सुगन्धिस्वफेनेन स्नातव्यम्, मोटरकार इत्यर्थे मरुत्तरशब्दः– चक्षूंषि चमकुर्वन्तो मरुत्तराः, पैट्रोल इत्यर्थे प्रतैलशब्दः – प्रतैलवाहिनो मरुत्तराः। तृतीया पद्धतिः – वैदेशिकाञ्शब्दान् मनाक् ध्वनिपरिवर्तनेन स संस्कृत–रूपतामापादयति– आंग्लनद्या टेम्स इत्याख्यायाः कृते तमसाशब्दः– तमसाख्या तरङ्गिणी नगरमभितः प्रवहन्ती प्रमोदकारिणी, बाजार इत्यस्य कृते वाणिज्यारशब्दः– वाणिज्यारं प्रति सम्प्रति प्रस्थितोस्मि, हारमोनियमकृते हरमनोयमशब्द– चन्द्रकला हरमनोयममादाय; ऑफ़िसर कृतेऽपसरशःब्दः– अपसरे लब्धो विजयः। इयमेव पद्धतिरनेकशो हिन्द्यादिशब्दविषयेऽपि। तथाहि– चप्पलकृते चपलोपानहशब्दः– चपलोपानहौ धारयित्वा। चतुर्थी पद्धतिः – हिन्दीशब्दानां तथा संस्कृतरूपतापादनं यथा ते संस्कृतादेवोद्भूता इति प्रतीतिं जनयेयुः। तथाहि– ऊधमी इत्यस्य कृते उद्धमशब्द– प्रयोगः – उद्धम किमपि कार्यं कुरु, पूंजीवादकृते पुञ्जवादशब्दप्रयोगः– तस्य पूजा पुञ्जवादयुगे प्रवृत्ता, दोगला इत्यस्य कृते द्विगलशब्दप्रयोगः – द्विगलो न समाजे सम्मानभाजनम्, हंसमुख इत्यस्य कृते हसमुखशब्दप्रयोगः– हसमुख उद्धवः प्रस्थितः, बड़ों बड़ों के इत्यस्य कृते वरान् वरान् इति शब्दप्रयोगः – वरान् वरान् अपि स निःसत्त्वतां नयति स्म, घड़ी इत्यस्य कृते घटी–घटिका–शब्दयोः प्रयोगः। घटीविशेषस्य कृते मणिबन्धघटी, भित्तौ स्थापिताया घटिकायाः कृते भित्तिघटिकाशब्दप्रयोगः। पञ्चमी पद्धतिः – अर्थनित्यः परीक्षेतेति दृष्ट्या वैदेशिकानां शब्दानामर्थमनुसन्धाय नूत्नशब्दकल्पना–स्टैथिस्कोपकृते उरश्श्रवयन्त्रशब्दः, नाइट गाऊन कृते नक्तांशुकशब्दः, पैरासाइट कृते परैधितशब्दः, लाइफ़ इंशुरेंसकृते जीवनाश्वासनशब्दः, इंजिनीयरिंगकृते आभियान्त्रिकीशब्दः, सर्कसकृते पशुक्रीडाप्रदर्शनशब्दः, आईसक्रीमकृते हिमखण्डिकाशब्दः, जेब इत्यस्य कृते गोह–गुप्ति शब्दौ, चायकृते उष्णजल–उष्ण पेय– कषायपेय–कषायपानशब्दाः, तालककृते तालक–लोहसूचिशब्दौ, ट्रेनकृते वाष्पशकटी–धूमशकटी–गन्त्री शब्दाः।

बॉम्बशब्दस्य टुवम उदिग्गणे इति धातोरुद्भवं परिकल्प्य वमरूपेण तस्य संस्कृतरूपतामापाद्य तद्भेदवाचकानां शब्दानां संस्कृते प्रयोगः– विस्फोटका वमा, विषोद्वामका वमा, अग्निवमा, समयापेक्षिवमाः[३३६]। एवमेव गेष अन्विच्छायाम्

---

३३६ आङ्गल्याम् explosive bomb, poisonous bomb, incindiary bomb, time bomb,

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

इति धार्तोगेष शब्दस्य व्युत्पत्तिं परिकल्प्य आङ्ग्लगैसशब्दं गेषरूपतामापाद्य तद्विविधरूपाणां संस्कृतेन निर्देशः—नरसंहरणा विषाक्ता अश्रुस्राविणः क्षविणस्तोदोत्पादिनो विसर्पसम्पादिनश्च गेषाः[३३७]।

न केवलं शब्दावल्यामेव भेदः अपितु शैल्यामपि। अद्यतनसंस्कृतरचनासु नूत्नसम्बोधनवाचकशब्दा दृष्टिपथमवतरन्ति — ओह्, अहा, ओहो, आह्। गद्गदध्वनिसूचनम् क् क् क् .... किम्, भ भ भ, भृशं जल्पसि। नूत्नाभाणकप्रयोगोऽप्यधुनातनं संस्कृतवाङ्मयं पुरातनाद् विशिनष्टि।

## १८०

लेखनशैल्यामपि काचन विलक्षणता। वार्तालापप्रसंगे प्रथमपङ्क्तिद्वय एव वक्तृनामनिर्देशः। तदनन्तरम् रेखामाध्यमेनैव तत्संकेतः। यथा —

मृणालिनी — सखि! सुभाषिणि, कः कालस्त्वामन्विष्यामि।
— अहमपि त्वां किञ्चिद् वृत्तं सूचयितुमुत्का।
— किं तद् वृत्तम्?
— जनाकीर्णोऽयं प्रदेशः।
— तेन हि कञ्चन निर्जनं प्रदेशमन्विष्यावः।
— स तु गृहालिन्दाद् बहिरेव भवेत्
— गृहालिन्दाद् बहिः कुत्र?

अथवा नाम्नोर्नाम्नां वा प्रथमाक्षरप्रयोगेण तद्बोधनम्।

मृ० —
सु० —

चिन्तनस्य विरामततिप्रयोगेण बोधनम्। यथा—

तत्तु साध्वेव, परम् ..........

दुराशङ्काया अन्तरान्तराविरामचिह्नप्रयोगेण बोधनम्। यथा—ए.....ष दू. .... र..... सन्दे.....शः। एवमेव सञ्कोचस्यापि विरामचिन्हप्रदर्शनेन पदावृत्त्या च। प्रकाशम्— किं किं.... किं किं भवत्या नाम?

दूरेणागतस्य ध्वनेः ३ इति चिह्नेन सूचनम् — ससम्भ्रममुत्थाय आत्मघातं करोमि ..... आ ३...त्मघा ३ तम्।

---

३३७ आङ्ग्ल्याम् Poisonous gas, tear gas, nose-irritant gas, lungirritant gas and blister gas.

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

सम्भ्रमस्य प्रथमवर्णावृत्त्या सूचनम् –

तारिका– (झटिति प्रविश्य) कथं गतवतीति? अहमत्रैव तिष्ठामि।

भोलानाथः – त ...... त....त..... तारिका?

पदावृत्त्या रोषस्य खेदस्य वा प्रकटनम् – विवाहो विवाहो विवाहः–न मे स रोचते।

लोकभाषायां येषां संस्कृतशब्द ां यस्मिन्नर्थे प्रयोगस्तस्मिन्नेवार्थे तेषां संस्कृतबन्धेऽपि प्रयोगः – तस्य जन्म सम्भ्रान्तपरिवारेऽभवत्। सोऽस्त्यन्तर्जातीयो (= अन्तरराष्ट्रियो) विद्वान्।

एतत्सर्वं यस्मिन्नस्ति तदाधुनिकसंस्कृतवाङ्मयनाम्ना व्यपदिश्यते। एवं सविस्तरं प्रस्तुतायां मया व्याख्यायां सर्वेऽपि समुपस्थिता विद्वांसो मद्वचः सुदीर्घकरतालिकाध्वनिनाऽभ्यनन्दन्।

## १८१

मया कुत्र कुत्र न गतं, कुत्र कुत्र वा न भाषितं, कुत्र कुत्र न वाऽध्यापितं, कैस्कैर्न वा संगतं, किं किं न वा दृष्टं, कैस्कैर्न वाऽऽलपितम्। विश्वयात्र्यहम्। नाना देशा मया गमिकर्मीकृताः। अद्य वर्षीयानहं संवृत्तः। बहु दृष्टं मया, बहु चानुभूतम्। तस्य सर्वस्य स्मृतिततिर्मे मनोऽनेकश उद्वेल्लयति। दूरङ्गमं जविष्ठं ज्योतिषां ज्योतिरिति श्रुत्या कीर्तितं तन्मां स्मृतिमाध्यमेन दूरस्थांस्तान् देशान् पुनरपि प्रापयति, पूर्वदृष्टैर्विद्वद्भिः संगमयति, तैः सम्भाषयति, तत्स्नेहेन मां स्नपयति, मदीयां रिक्ततामपनीय पूर्णतां मय्यादधाति। तदा हठान्निःसरति मे मुखाच्छ्रुतिवचः–

पूर्णमिदं पूर्णमदः पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते।।

अथोपसंहारवचः–

पूर्णोऽहं, पूर्णकामोऽहं पूर्णो मे हृदि संस्थितः।
कृपया तस्य पूर्णस्य ग्रन्थोऽयं पूर्णतां गतः।।

□□□


CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri



सत्यव्रतशास्त्री

1930 वर्षे सिताम्बरमासस्यैकोनत्रिंशे दिवस आचार्यसत्यव्रतशास्त्रिणां जनिरजनि नगरललामभूते लवपुरे यत्सम्प्रति पाकिस्तानान्तर्वर्तते। एतेषां प्रथमगुरवः सुप्रथितशसः पितृचरणाः पण्डितचारुदेवशास्त्रिण आसन्। बी. ए. परीक्षायां संस्कृतविशेषविषय एषामासीद्यत्र कीर्तिमानमेभी रचितम्। संस्कृतविषये एम्. ए. परीक्षैभिः प्रथमश्रेण्यामुत्तीर्णा प्रथमं स्थानं चाधिगतम्। एतस्मात्कारणाद् विश्वविद्यालयेन पदकद्वयेनैतेऽलङ्कृताः। तदनु काशीहिन्दूविश्वविद्यालयाद् भर्तृहरिकृतवाक्यपदीये दिक्कालमीमांसेति विषये प्रवर्तितमनुसन्धानमेभिः प्राप्तश्च पीएच्. डी. उपाधिः।

1955 वर्षे एभिर्दिल्लीविश्वविद्यालये प्रारब्धमध्यापनम्। तत्र संस्कृतविभागाध्यक्ष-कलासङ्कायाध्यक्षपदद्वय एतेऽधिष्ठिताः। पुरीस्थश्रीजगन्नाथसंस्कृतविश्वविद्यालयकुलपतिपदमप्येभिरलङ्कृतम्। एभिर्महाद्वीपत्रये - थाईदेशे बैंकाकनगरस्थचुलालौङ्कौर्न-शिल्पाकरविश्वविद्यालययोस्तत्रैव चेशानदिग्विभागे नौङ्खाईनगरे बौद्धविश्वविद्यालये; शर्मण्यदेशे ट्यूबिङ्गननगरे कॉर्लएरहार्डविश्वविद्यालये; बेल्जियमदेशे ल्यूवेननगरे कैथोलिकविश्वविद्यालये, कनाडादेशे एडमण्टननगरे अल्बर्टाविश्वविद्यालये - इत्येवं षड्विश्वविद्यालयेष्वभ्यागताचार्यरूपेणाध्यापितम्। नाना राष्ट्रियास्वन्ताराष्ट्रियासु चर्चागोष्ठीषु भागो गृहीतः प्रस्तुतास्तत्र स्वोपज्ञा निबन्धाः, प्रवर्तिता तत्तद्विषयिणी चर्चाऽऽध्यक्ष्यं च तत्तत्सत्राणां निर्व्यूढमनेकशः। लातीनोत्तरामेरिकादेशौघ, आग्नेयदेशसमूहे हांगकांगचीनजापानादिदेशव्रजे च प्रवर्तितानि परश्शतानि प्रवचनानि।

कारयित्रिभावयित्रीप्रतिभाद्वयसंवलितैराचार्यसत्यव्रतशास्त्रिभिर्विरचितास्त्रिंशद् ग्रन्थाः। तेषु विशेषोल्लेखमर्हन्ति वाल्मीकीयस्य रामायणस्येदम्प्रथमो भाषादृष्ट्या पर्यालोचनात्मको ग्रन्थः "दि रामायण- ए लिंग्विस्टिक स्टडी", "डिस्कवरी ऑफ संस्कृत ट्रेज़र्स" इति शीर्षकः सप्तखण्डात्मको ग्रन्थः, कालिदासविषयकं "कालिदास इन मॉडर्न संस्कृत लिटरेचर" - "न्यू एक्सपैरीमेण्ट्स इन कालिदास" इति शीर्षकं ग्रन्थद्वयं, "दिने दिने याति मदीयजीवितमि"तिनामा संस्कृतवाङ्मय इदम्प्रथमो दैनन्दिनवृत्तनिरूपको डायरीतिसमाख्यो ग्रन्थः, थाईदेशीयसंस्कृताभिलेखाध्ययनम्, संस्कृतेन निबद्धं महाकाव्यत्रयं, खण्डकाव्यत्रयं, खण्डद्वयात्मकं "पत्रकाव्यं", "भवितव्यानां द्वाराणि भवन्ति सर्वत्रे"ति शीर्षकं विभ्राणात्मकथा।

एते सन्ति 'इण्डोलोजिकल स्टडीज़' - 'श्रीजगन्नाथज्योतिरि'ति शोधपत्रिकाद्वयस्य संस्थापकसम्पादका अपि। नवतिसङ्ख्याकै राष्ट्रियैरन्ताराष्ट्रियैः पुरस्कारैः सम्मानैश्चैते विभूषिताः। दिल्लीविश्वविद्यालयेनैते 'प्रोफेसर एमेरिटस' इति पदप्रदानेन समर्चिताः, नवदिल्लीस्थजवाहरलालनेहरूविश्वविद्यालयेन चाभ्यर्हिताचार्यसम्मानेन। साहित्य अकादम्यैते पुरस्कारेण महत्तरसदस्यता (फैलो) प्रदानेन च सत्कृताः। तथैवेते सत्कृता इटलीदेशीयएग्रिगेण्टोनगरस्थभूमध्यसागरीयाकादम्या महत्तरसदस्यता (फैलो) प्रदानेन।

बैंकाकनगरस्थशिल्पाकरविश्वविद्यालयकुलपतिना मानदडाक्टरोपाधिप्रदानावसरे प्रस्तुते प्रशस्तिपत्र एते संस्कृतक्षेत्रे जीवितकिंवदन्त्य (ए लिविंग लेजण्ड इन दि फ़ील्ड ऑफ़ संस्कृत) इति रूपेणाभिष्टुताः।

सम्प्रत्येते भारतशासनेन संस्थापितस्य संस्कृतायोगस्याध्यक्षपदं निर्वहन्ति।

ISBN : 978-93-81480-72-4






विजया बुक्स
दिल्ली - 110032

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by eGangotri

₹ 750/-